Rishisangye
Snaskarbhaskar
সংস্কার ভাস্কর
sanskrit
Printed on paper
1621 sakabda
12+292
10.5"x5"
Complete

# ॥ अथ संस्कारभास्करप्रारम्भः ॥

# अथ संस्कारभास्करग्रन्थस्थविषयानुक्रमणिकाप्रारम्भः ।

॥ ८ ॥

इति संस्कारभास्करग्रंथविषयानुक्रमणिका समाप्ता ।

प्रस्तावना-

॥ १ ॥

ब्रह्मक्षत्रियविट्शूद्रावर्णास्त्वाद्यास्त्रयो द्विजाः । निषेकाद्याः श्मशानांतास्तेषां वै मन्त्रतः क्रियाः॥
गर्भाधानमृतौ पुंसः सवनं स्यन्दनात्पुरा ॥ षष्ठेष्टमे वा सीमन्तो मास्येते जातकर्म च ॥
अहन्येकादशे नाम चतुर्थे मासि निष्क्रमः । षष्ठेन्नप्राशनं मासि चूडाकार्या यथाकुलम् ॥
एवमेनः शमं याति बीजगर्भसमुद्भवम् । तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः ॥
गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनमित्यादि--

मुख्यतया सर्वत्र विद्वद्भिरेते षोडश प्रगण्यंते। गौतमेन चत्वारिंशत्कथिताः ॥ अंगिरास्तु पञ्चविंशतिमगिरत् । एवं वैकल्प्यात्प्रायः स्वस्वगृह्यसूत्रगृहीतानेव संस्कारान्गृह्णन्ति ॥ एवंरीत्यैव माध्यन्दिनानां स्वगृह्यानुसारेण गर्भाधानादिविवाहान्ताः षोडशसंस्कारा भवन्ति । उक्तंच--

गर्भाधानमतश्च पुंसवनकं सीमन्तजाताभिधे नामाख्यं सह निष्क्रमेण च तथान्नप्राशनं कर्म च॥
चूडाख्यं व्रतबन्धकोप्यथ चतुर्वेदव्रतानां पुरःकेशान्तःसविसर्गकः परिणयः स्यात्षोडशी कर्मणाम् १॥ ॥ १ ॥

एते षोडश संस्काराःसर्वेषां द्विजातीनाम् । शूद्राणां तु तूष्णीमेवात्रत्याःकेचन संस्काराःसंस्करणे

# प्रस्तावना ।

विज्ञापयामि विविधानवद्यवेदविधिविद्याविशारदविद्वद्वर्यान्–पूर्वं श्रीमन्नारायणानुशासनाद्ब्रह्मणा परमेष्ठिना समष्टिव्यष्टिरूपेण यदा सृष्टिः सृष्टा तदा च स्वधर्मतो वर्णचतुष्टयं व्यष्टचोत्पादितवानिति प्रसिद्धमेव । यथोक्तं मनुना––

लोकानां तु विवृद्ध्यर्थं मुखबाहूरुपादतः । ब्राह्मणं क्षत्रियं वैश्यं शूद्रं च निरवर्तयदिति ॥

तथा च स्वकीयदेहं द्विधा निर्माय स्त्रीपुरुषावुत्पाद्य बीजतः सृष्टिक्रममुपाक्रमत । तेषां सर्वेषां पुरुषार्थसाधनार्थं धर्मान् प्रकथ्य तदनुकूलं स बीजोत्पन्नदेहादिशुद्ध्यर्थं संस्कारानृषिमुखेभ्योऽस्मिञ्जगति प्रावर्तयत्। एते च संस्कारा मुख्यतया शिष्यानुशिष्यकथनेन मन्वादिभिः परम्परया भूमौ भूयोभूयः प्रसिद्धिं प्रापिताः॥ प्रसिद्धमेतत् ॥ उक्ताश्चावश्यंसंस्कारा ब्रह्मर्षिणा याज्ञवल्क्येन ऋषिजनेभ्यो यथा–

नियुक्ताः ॥ उक्तं च स्मृत्यन्तरे १ शूद्रोऽप्येवंविधः कार्यो विना मन्त्रेण संस्कृत इत्यादि॥एतांश्च संस्कारान् धर्मशास्त्रपारावारावगाहनिपुणजनैः स्वस्वशाखानुसारेण स्वस्वमन्त्रैःप्रयुक्ताः प्रयोगरत्नाकरादिग्रन्थतो जानन्ति सज्जना ऋग्वेदिनः । एवमेवायमेकःसंस्कारभास्करसंस्कारप्रयोगग्रन्थो वाजसनेयिनां वरीवर्ति । प्रस्तौमि किंचिदत्र—आसीच्चास्तिकविप्रजनशास्त्रप्रश्रयसंस्कारसंस्करणकुशलो धर्मशास्त्रनिपुणाग्रगण्यः प्रमाणीकृतार्षग्रन्थगणःपुण्यजनकदनाय जनकनन्दिन्या सौमित्रिणा च सहागतेन दाशरथिना स्नानपानादिना कृतमोदाया गोदाया दक्षिणेकूले कलुषनाशिनि नासिकेतिप्रसिद्धे सिद्धक्षेत्रे ब्रह्मवर्णज ऋषिरिवान्य ऋषिभट्टो नाम कश्चिन्निश्चयज्ञानी । तेन माध्यंदिनयजुर्वेदशाखाध्यायिनां संस्काराणां सुलभतया लाभायायं संस्कारभास्करो नाम ग्रन्थः१६२१तमे शालिवाहने शाके ग्रथितः।यं च केचन कर्तृनाम्ना ऋषिभट्टीत्यपि वदन्ति सन्तः।पूर्वमयमत्रत्यैर्विपश्चिदग्र्यैर्मयूरात्मजरामकृष्णाख्यैर्विद्वद्दाश्रयेण मध्ये निर्णयसिंधुधर्माऽध्यादिधर्मशास्त्रग्रन्थतःप्रयोगाऽध्यादिप्रयोगग्रन्थतःप्रमाणान्युपसंगृह्य संस्कारावश्यसर्ववस्तूनि लक्षणादिना परिभाषाविषयेण च विशिष्य सर्वोपकरणैः

पुस्तकन्यूनतामपनीय नूतनइव संपादितोयं ग्रंथः सम्यक्परिशोधितश्च।आज्ञापितं मुद्रणाय॥तदाशि लायन्त्रेणाङ्कित्वा सकलामलगुणैरलंपूर्णेषु गुणिसज्जनगणेषु प्रसिद्धीकृतः॥तत्पुस्तकस्य समस्ताअपि प्रतिमा अस्मदप्रतिमग्राहकगणैरर्थाश्रयेण नीत्वात्राभावं प्रापिताः॥ एतेन जानन्तु सज्जना एतत्संस्कारभास्करप्रभाम् । अथ पुनःसोयमेव पूर्वतनमुद्रणसमयस्थिताशुद्धमपास्याच्छं संशोध्य प्रमाणान्तरैष्टिप्पणीभिश्च सनाथीकृत्य पुनः शीसकमुद्राभिःपुष्टपत्रेषु मुद्रितोत्र भवतां भवतामग्रे प्रभवति। अस्मिन्ग्रन्थे षोडशसंस्काराःसविधानं सप्रमाणं सम्यक्प्रयुक्ता उपरितना इतिज्ञायतामेव सुजनैः ॥ एतद्ग्रन्थस्य पुनर्मुद्रणादयः सर्वेऽधिकाराउक्तवि० भट्टरामकृष्णतो गृहीत्वाऽस्माभिः स्वाधीना रक्षिता इति ज्ञेयम् ॥



खेमराज श्रीकृष्णदास,
"श्रीवेङ्कटेश्वर" स्टीम्-प्रेस-मुम्बई.

श्रीगणेशाय नमः ॥ ॥ श्रीसरस्वत्यै नमः ॥ ॥ श्रीगुरुभ्यो नमः ॥ श्रीलक्ष्मीनारा
यणाभ्यां नमः ॥ अथ संस्कारभास्करप्रारंभः ॥ ॥ तत्रादौमंगलाचरणम् ॥ ॥ वात्स
ल्यात्पितरौकपोलयुगलंस्वस्यागतौचुंबितुंदृष्ट्वाकुंचितमास्यपद्मममलंसेषत्स्मितंसत्व
रम् ॥ अन्योन्यंशिवयोस्ततःसुवदने युक्ते अभूतांतयोरित्थंयेनविनोदितौसभगवा
न्बालोगजास्योऽवतु ॥ १ ॥ श्रीगणेशंशारदांचलक्ष्मीनारायणंगुरुम् ॥ नवग्रहांश्चदि
क्पालान्नमस्कृत्यपुनःपुनः ॥ २ ॥ योभूच्छौचोपनामाबुधसुकुटमणिर्विश्वनाथः प्र
सिद्धस्तज्जोगंगाधराख्यः क्षितिसुरमहितः सर्वः वेदार्थवेत्ता॥तत्पुत्रः साधुशीलः श्रुत
पथनिपुणोयाज्ञिकैर्वंद्यमानः पुण्यात्मा सर्वकालेजयतिऋषिबुधः शिष्यसंघार्चितां
घ्रिः ॥ ३ ॥ करोतिविदुषांप्रीत्यैसर्वसंस्कारभास्करम् ॥ सूत्रंहरिहरंकर्कंवासुदेवींसमा
हितः ॥ ४ ॥ आलोक्यसम्यङ्मनसासरलंसुगमंनवम् ॥ यस्यावलोकनेनैवस्फुरंतिह

दितत्क्षणात् ॥ ५ ॥ तत्रतावत् ॥ गौतमेनचत्वारिंशत्संस्काराः कथिताः ॥ ते यथा ॥ ॥ गर्भाधानंपुंसवनंसीमंतोन्नयनंजातकर्मनामकर्मनिष्क्रमणमन्नप्राशनंचौलोपनयनेचत्वारिवेदव्रतानिकेशांतस्नानेसहधर्मचारिणीसंयोगः पंचमहायज्ञाऽष्टकापार्वणश्राद्धानि श्रावण्याग्रहायणीचैत्री आश्वयुजीतिसप्तपाकसंस्थाः अग्न्याधेयमग्निहोत्रंदर्शपौर्णमासौचातुर्मास्याग्रयणेष्टिर्निरूढपशुः सौत्रामणीतिसप्तहविर्यज्ञसंस्थाः अग्निष्टोमअत्यग्निष्टोमउक्थ्यषोडशीवाजपेयोतिरात्रआप्तोर्यामइतिसप्तसोमयज्ञसंस्थाः उपाकर्मोत्सर्जनंपैतृमेधिकं च ॥ ॥ इत्येतेचत्वारिंशत्संस्काराः ॥ ॥ अंगिरास्तुपंचविंशतिसंस्कारानुक्तवान् ॥ ते यथा ॥ गर्भाधानंपुंसवनंसीमंतो बलिरेवच ॥ जातकर्मनामकर्मनिष्क्रमोन्नाशनंपरम् ॥ चौलकर्मोपनयनंतद्व्रता



१ बलिर्विष्णुबलिः ।

नांचतुष्टयम् ॥ तच्छब्देनप्रसिद्धत्वाद्वेदग्रहणेतद्व्रतानांचतुर्वेदव्रतानामित्यर्थः ॥ स्ना
नोद्वाहौचाग्रयणमष्टकाश्चयथातथम् ॥ श्रावण्यमाश्वयुज्यांचमार्गशीर्ष्यांचपार्वणम्॥
उत्सर्गश्चाप्युपाकर्ममहायज्ञाश्चनित्यशः ॥ संस्कारानियताह्येतेब्राह्मणस्यविशेषतः
इति ॥ एषांप्रयोगाः ग्रन्थविस्तारभयान्नात्रलिखिताः ॥ परिज्ञानार्थंकेवलंनामानिलि
खितानि ॥ अधुनास्वगृह्योक्तागर्भाधानादिविवाहांताः षोडशसंस्काराः मुख्याः
मयाऽस्मिन्ग्रंथेपरिगृहीताः ॥ तेचगौतमेनप्राक्कथिताः ॥ ॥ तथाचस्मृत्यंतरे ॥
॥ गर्भाधानमतश्चपुंसवनकंसीमंतजाताभिधेनामाख्यंसहनिष्क्रमेणचतथान्नप्राशनं
कर्मच ॥ चूडाख्यंव्रतबंधकोप्यथचतुर्वेदव्रतानांपुरः केशांतः सविसर्गकः परिणयः
स्यात्षोडशीकर्मणाम् ॥ १ ॥ एतेगर्भाधानादिषोडशसंस्काराः सर्वेषामेव ॥ एतेच
द्विजानामेवसमंत्रकाः ॥ ॥ यथाहयाज्ञवल्क्यः ॥ ॥ ब्रह्मक्षत्रियविट्शूद्रावर्णा

स्त्वाद्यास्त्रयोद्विजाः ॥ निषेकादिश्मशानांतास्तेषांवैमंत्रतः क्रियाइति ॥ ॥ अतए
वषोडशसंस्कारानधिकृत्य तेषांप्रयोगाः समंत्रकाः प्राग्दर्शितग्रंथाभिप्रायेणात्र
लिखिताः ॥ ॥ यमः ॥ शूद्रोप्येवंविधः कार्योविनामंत्रेणसंस्कृतइति ॥ ॥ क
न्यकायाश्चगर्भाधानादिचौलांताः अष्टसंस्काराः अमंत्रकाः ॥ विवाहस्तुपुंस्युभयसं
योगेवर्णन्यायेनयथाविधिकार्यः ॥ ॥ तथाचस्मृत्यंतरे ॥ स्त्रीणांचौलांतसंस्काराः
प्रकर्तव्या अमंत्रकाः ॥ पुंस्त्रियोरुभयोरस्तुविवाहःसयथाविधीति ॥ अथसंस्कारा
णांफलानिस्मृतिसंग्रहे ॥ निषेकाद्बैजिकंचैनोगार्भिकंचापमृज्यते ॥ क्षेत्रसंस्कारसि
द्धिश्चगर्भाधानफलंस्मृतम् ॥ गर्भाद्भवेच्चपुंसूतेः पुंस्त्वस्यप्रतिपादनम् ॥ निषेकफलवज्ज्ञे
यंफलंसीमंतकर्मणः ॥ गर्भांबुपानजोदोषोजातात्सर्वोपिनश्यति ॥ अपिशब्दस्यदो

१निषेकः गर्भाधानम् ।२श्मशानं प्रेतकर्म ३ पुंसूतिः पुंसवनम् ।४निषेको गर्भाधानम् ।५ जातात् जातकर्मानुष्ठानात्

षशब्देनान्वयः ॥ आयुर्वर्चोभिवृद्धिश्चसिद्धिर्व्यवहृतिस्तथा ॥ व्यवहृतिर्व्यवहारस्त
स्यसिद्धिरित्यर्थः ॥ नामकर्मफलंत्वेतत्समुद्दिष्टंमनीषिभिः ॥ सूर्यावलोकनादायुरभि
वृद्धिर्भवेद्ध्रुवा ॥ निष्क्रमादायुःश्रीवृद्धिरप्युद्दिष्टामनीषिभिः॥ अन्नाशनान्मातृगर्भम
लाशीचापिशुध्यति ॥ बलायुर्वर्चोवृद्धिश्चचूडाकर्मफलंस्मृतम् ॥ उपनीतेःफलंत्वेत
द्विजतासिद्धिपूर्विका ॥ वेदाधीत्यधिकारस्यसिद्धिर्ऋषिभिरीरितेति ॥ यत्रयत्रनापि
श्रूयतेतत्रतत्रबैजिकगार्भिकैनोविनाशोपिफलंज्ञेयम् ॥ अन्येपिकर्णवेधादयः संस्का
राः शास्त्रांतरोक्तास्तत्रतत्रवक्ष्यंते ॥ इतिसंस्काराः ॥ तथाविशेषावश्यकानि
कर्माणिशिष्टाचारयुतानिचात्रगृहीतानि ॥ तानियथा ॥ षष्ठीपूजनंदोलारोहणंतथा
गोदुग्धपानशिशोर्भूमिषुस्थितिर्दत्तकप्रतिग्रहः कर्णस्यवेधस्तथा ॥ श्रीवर्धापनमक्ष
रप्रलिखनंकौमारधीवृद्धयेकन्यारिष्टहरोघटः परिणयश्चार्कस्तथापौरुषे ॥ १ ॥ ए

षांप्रयोगाः षोडशसंस्काराणांमध्येसमयानुसारमग्रेलिखिताः ॥ ॥ तत्रादौपरि
भाषा ॥ ॥ संकल्पेनविनाकर्मकरणेदोषउक्तोभविष्ये ॥ संकल्पेनविनाकर्मय
त्किंचित्कुरुतेनरः ॥ फलंचाप्यल्पकंतस्यधर्मस्यार्धक्षयोभवेत् ॥ १ ॥ संकीर्त्यमा
सपक्षादीन्निमित्तानितथैवच ॥ इदंकर्मकरिष्येहमितिसंकल्पमाचरेत् ॥ २ ॥ अनु
ल्लंघ्यस्वशाखोक्तविधिंकर्मसमाचरेत् ॥ कर्मान्यथाकृतंज्ञात्वातावदेवपुनश्चरेत् ॥
॥ ३ ॥ प्रधानस्याक्रियायांतुसांगंतत्पुनराचरेत् ॥ तदंगाकरणेप्रायश्चित्तमेवनकर्म
तत् ॥ ४ ॥ वामनपुराणे ॥ ॥ सर्वमंगलमांगल्यंवरेण्यंवरदंशुभम् ॥ नारायणंनम
स्कृत्यसर्वकर्माणिकारयेत् ॥ १ ॥ ॥ वसिष्ठः ॥ जपहोमोपवासेषुधौतवस्त्रध
रोभवेत् ॥ अलंकृतः शुचिर्मौनी श्रद्धावान्विजितेंद्रियः ॥ १ ॥ यदिवाग्यमलोपः
स्याज्जपादिषुकथंचन ॥ व्याहरेद्वैष्णवंमंत्रंस्मरेद्वाविष्णुमव्ययम् ॥ २ ॥ अहतवस्त्र

लक्षणमुक्तंस्मृतिरत्नावल्याम् ॥ ॥ ईषद्धौतंनवंश्वेतंसदशंयन्नधारितम् ॥ अहतंतद्वि
जानीयात्सर्वकर्मसुपावनम् ॥ १ ॥ ईषद्धौतमरजकादिनासकृद्धौतमितिनागाह्निके
व्याख्यातम् ॥ कश्यपेनत्वन्यथोक्तम् ॥ अहतंयंत्रनिर्मुक्तंवासः प्रोक्तंस्वयंभुवा ॥ शस्तं
तन्मांगलिक्येषुतावत्कालंनसर्वदेति ॥ १ ॥ ( कंबलेपट्टवस्त्रेचनीलीरागो नदुष्यति
॥ २ ॥ ) क्षौमेवस्त्रेऽहतेपत्नीचेतिसूत्रे अनंतयाज्ञिकैरप्येवंव्याख्यातम् ॥ ॥ वसिष्ठः ॥
रौद्रपित्रासुरान्मंत्रांस्तथाचैवाभिसारकान् ॥ व्याहृत्यालभ्यचात्मानमपः स्पृष्ट्वा
न्यदाचरेत् ॥ १ ॥ ॥ कात्यायनः, ॥ पित्र्यमंत्रानुद्रवणेआत्मालंभोधमेक्षणे ॥
अधोवायुसमुत्सर्गेप्रहासेनृतभाषणे ॥ १ ॥ मार्जारमूषकस्पर्शेआक्रुष्टेक्रोधसंभवे ॥
निमित्तेष्वेषुसर्वेषुकमकुर्वन्नपः स्पृशेत् ॥ २ ॥ ॥ स्मृत्यर्थसारे ॥ कर्त्रंगानामनुक्तौ

---

१ आत्मालंभः हृदयालंभः ।

सं० तुदक्षिणांगंभवेत्सदा ॥ ॥ छंदोगपरिशिष्टे ॥ यत्रदिङ्नियमोनास्तिजपादिषुकथं भा०
॥ ४ ॥ चन ॥ तिस्रस्तत्रदिशः प्रोक्ताऐंद्रीसौम्यापराजिता ॥ १ ॥ तत्रैव ॥ आसीनः प्रह्वऊ
र्ध्वोवानियमोयत्रनेदृशः ॥ तदासीनेनकर्तव्यंनप्रह्वेणनतिष्ठतेति ॥ १ ॥ पंचाश
द्भिर्भवेद्ब्रह्मातदर्धेनतुविष्टरः ॥ दक्षिणावर्तकोब्रह्मावामावर्तस्तुविष्टरः ॥ १ ॥ वेण्या
वावर्तुलंकृत्वावेण्यग्रेग्रंथिबंधनम् ॥ अनंतर्गर्भकंसाग्रंकौशंद्विदलमेवच ॥ २ ॥ प्रादेश
मात्रंविज्ञेयंपवित्रंयत्रकुत्राचित् ॥ पवित्रेदर्भसंख्यामाह मार्कण्डेयः ॥ चतुर्भि
र्दर्भपिंजूलैर्ब्राह्मणस्यपवित्रकम् ॥ एकैकंन्यूनमुद्दिष्टंवर्णेवर्णेयथाक्रमम् ॥ १ ॥ सर्वेषां
वाभवेद्द्वाभ्यांपवित्रंग्रंथितंनवा ॥ चतुर्भिः शांतिकेकार्यंपौष्टिकेपंचभिस्तथा ॥ २ ॥
सप्तपत्राः शुभादर्भास्तिलक्षेत्रसमुद्भवाः ॥ अप्रसूताः स्मृतादर्भाः प्रसूतास्तुकुशाः ॥ ४ ॥
स्मृताः ॥ ३ ॥ समूलाः कुतपाः प्रोक्ताश्छिन्नाग्रास्तृणसंज्ञिताः ॥ दर्भाः कृष्णाजि

नमंत्राब्राह्मणाहविरग्नयः ॥ ४ ॥ अयातयामान्येतानिनियोज्यानिपुनः पुनः ॥ चि
तौदर्भाः पथिदर्भायेदर्भायज्ञभूमिषु ॥ ५ ॥ स्तरणासनपिंडेषुषट्कुशान्परिवर्जयेत्
॥ रत्नावल्याम् ॥ द्वयोस्तुपर्वणोर्मध्येपवित्रंधारयेद्बुधः ॥ अनामिकाग्रपूर्वेतुनिस
र्गंतुपवित्रकम् ॥ १ ॥ नोच्छिष्टंतत्पवित्रंस्याद्भुक्तोच्छिष्टंविवर्जयेत् ॥ द्व्यंगुलंमूलबल
यंग्रंथिरेकांगुलोभवेत् ॥ २ ॥ चतुरंगुलमग्रंस्यात्पवित्रंस्यात्प्रमाणतः ॥ नागाह्नि
के ॥ ॥ अन्यान्यपिपवित्राणिकुशदूर्वामयानिच ॥ हेमात्मकपवित्रस्यकलांनार्ह
न्तिषोडशीम् ॥१॥ माषाणांषोडशाद्भूर्ध्वंकुर्याद्धेमपवित्रकम् ॥ तेभ्यःस्वल्पतरंन्यूनंन
कुर्वीतकदाचन ॥ २ ॥ हीनकर्मणिचोच्छिष्टेकुशधृतपवित्रकम् ॥ निर्माल्यंतेषुसंप्रा
प्तिर्नहेम्नश्चपवित्रके ॥ ३ ॥ पवित्राभावेसुमंतुः ॥ ॥ समूलाग्रौविगर्भौतुकुशौद्वौद
क्षिणेकरे ॥ सव्येचैवतथात्रीन्वैबिभृयात्सर्वकर्मसु ॥ १ ॥ ॥ बौधायनः ॥ ॥ हस्त

 योरुभयोर्द्वौद्वावासनेपितथैवच ॥ ॥ तथा ॥ ॥ सदोपवीतिनाभाव्यंसदाबद्धशिखेन 
 च ॥ विशिखोव्युपवीतश्चयत्करोतिनतत्कृतम् ॥१॥ अनेनहिदधिखदिरादिवद्युपवीति
त्वस्यबद्धशिखत्वस्यचक्रतुपुरुषोभयार्थत्वमवगम्यते ॥ ॥ हेमाद्रौभरद्वाजः ॥
दक्षिणंबाहुमुद्धृत्यवामस्कंधेनिवेशितम् ॥ यज्ञोपवीतमित्युक्तंदेवकार्येषुशस्यते ॥१॥
कंठावलंबितंचैवब्रह्मसूत्रंयदाभवेत् ॥ तन्निवीतमितिख्यातंशस्तंकर्मणिमानुषे ॥ २ ॥
उत्क्षिप्तेवामबाहौतुदक्षिणस्कंधमाश्रितम् ॥ प्राचीनावीतमित्युक्तंतत्पित्र्येष्वेवकर्मसु
इति ॥ ३ ॥ विष्णुधर्मोत्तरे ॥ तिलकंकुंकुमेनैवसदामंगलकर्मणि ॥ कारयित्वासुम
तिमान्नश्वेतचंदनंमृदा ॥ १ ॥ ॥ मंत्रेणोंकारपूतेनस्वाहांतेनविचक्षणः ॥ स्वा
हावसानेजुहुयाद्ध्यायन्वैमंत्रदेवताम् ॥ १ ॥ मंत्रांतेयावह्निजायासातुमंत्रस्वरूपिणी ॥ 
तदंतेन्यांप्रयुंजीतसाकर्माङ्गतयास्मृता ॥ २ ॥ आदौद्रव्यपरित्यागःपश्चाद्धोमोवि

धीयते ॥ इतिदेवयाज्ञिकः ॥ ॥ ब्राह्मे ॥ ॥ शमीपलाशन्यग्रोधप्लक्षवैकंकतोद्भवाः ॥
अश्वत्थोदुंबरौबिल्वश्चंदनः सरलस्तथा ॥ १ ॥ शालश्चदेवदारुश्चखादिरश्चेतिया
ज्ञिकाः ॥ ॥ कर्मप्रदीपे ॥ ॥ नांगुष्ठादधिकाकार्यासमित्स्थूलतराक्वचित् ॥
नवियुक्तात्वचाचैवनसकीटानस्फाटिता ॥ प्रादेशमात्रान्नाधिकानतथास्याद्द्विशा
खिका ॥ नसपर्णासमित्कार्याहोमकर्मसुजानता ॥ २ ॥ प्रागग्राः समिधोग्राह्या
अखर्वानेत्रंफाटिताः ॥ काम्येषुवश्यकर्मादौविपरीताजिघांसतः ॥ ३ ॥ विशीर्णा
विफलाह्रस्वावक्राबहुशिखाः कृशाः ॥ दीर्घाः स्थूलाघुणैर्जुष्टाः कर्मसिद्धिविनाश
काः ॥ ४ ॥ हातव्यामधुसर्पिर्भ्यांदध्नाक्षीरेणसंयुताः॥ प्रादेशमात्राःसमिधअशाखाअ
पलाशिनीः ॥ ५ ॥ ॥ शंखः ॥ ॥ समित्पुष्पकुशादीनिब्राह्मणः स्वयमाहरेत् ॥

१ नेत्रंजटामूलंचकथितम् ।

 शूद्रानीतैः क्रयक्रीतैः कर्मकुर्वन्व्रजत्यधः ॥ १ ॥ ॥ वायुपुराणे ॥ ॥ कंडनंपेष 
 णंचैवतथैवोल्लेखनंतथा ॥ सकृदेवपितॄणांस्याद्देवानांतत्त्रिरुच्यते ॥ ॥ कात्याय
नः ॥ योनर्चिषिजुहोत्यग्नौव्यंगारिणिचमानवः ॥ मंदाग्निरामयावीचदरिद्रश्चैवजायते ॥
तस्मात्समिद्धेहोतव्यंनासमिद्धेकथंचन ॥ नवस्त्रवायुनाकुर्यात्पाणिशूर्पस्त्रुवादिभिः
॥ २ ॥ नकुर्यादग्निधमनंनकुर्याद्व्यजनादिना ॥ मुखेनैवधमेदग्निंमुखदेशाद्व्यजायत
॥ ३ ॥ अधोबुधः सधूमेतुजुहुयाद्योहुताशने ॥ यजमानोभवेदंधः सपुत्रइतिचश्रुतिः
॥ मात्स्ये ॥ ॥ होमादिग्रहपूजायांशतमष्टोत्तरंभवेत् ॥ अष्टाविंशतिरष्टौवा
यथाशक्तिविधीयते ॥ छंदोगपरिशिष्टे ॥ यन्नाम्नातंस्वशाखायांपारक्यमविरोधि
यत् ॥ विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत् ॥ १ ॥ बह्वल्पंवास्वगृह्योक्तंयस्यकर्म 
प्रकीर्तितम् ॥ तस्यतावतिशास्त्रार्थेकृतेसर्वंकृतंभवेत् ॥२॥ प्रवृत्तमन्यथाकुर्याद्यदिमो

हात्कथंचन ॥ यतस्तदन्यथाभूतंततएवसमापयेत् ॥ ॥ समाप्तेयदिजानीयान्मयैत दन्यथाकृतम्॥ तावदेवपुनःकुर्यान्नावृत्तिः सर्वकर्मणः॥प्रधानस्याक्रियायत्रसांगंतत्क्रि यतेपुनः ॥ तदंगस्याक्रियायांतुनावृत्तिर्नचतत्क्रिया ॥ ॥ ब्राह्मे ॥ ॥ यथोक्तवस्त्वसंप त्तौग्राह्यंतदनुकारियत् ॥ यवानामिवगोधूमाव्रीहीणामिवशालयः ॥ १ ॥ आज्यंद्रव्य मनादेशेजुहोतिषुविधीयते ॥ मंत्रस्यदेवतायाश्चप्रजापतिरितिस्थितिः ॥ २ ॥ समस्त व्याहृतयइतिमदनः ॥ प्रणवादिनमोंतंचचतुर्थ्यंतंचसत्तम ॥ देवतायाः स्वकंनाममूल मंत्रउदाहृतः ॥ ॥ विष्णुधर्मोत्तरे ॥ दध्यलाभेपयःकार्यंमध्वलाभेतथागुडः ॥ घृतप्रति निधिंकुर्यात्पयोवादधिवान्नृप ॥ १ ॥ बौधायनः ॥ ॥ आज्यहोमेषुसर्वेषुगव्यमेवघृ तंभवेत् ॥ तदभावेमाहिष्यास्तुआजमाविकमेवच ॥ तदभावेतुतैलंस्यात्तदभावेतुजा

१ अन्यथाभूतंविपर्यस्तम्।२अनादेशेअविधानेप्राजापत्योमंत्रः।३ तारळे किंवा खुरासनीचें तेल।

२

तिलम् ॥ तदभावेतुकौसुंभंतदभावेतुसार्षपम् ॥२॥ ॥ याज्ञवल्क्यः ॥ ॥ कनिष्ठादेशिन्यं
गुष्ठमूलान्यग्रंकरस्यच ॥ प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् ॥ १ ॥ पाण्याहुतिर्द्वा
दशपर्वपूरिकारसादिनाचेत्स्रुचिपर्वपूरिका ॥ दैवेनतीर्थेनचहूयतेहविः स्वंगारि
णिस्वर्चिषितच्चपावके । आज्यपयआदिद्रव्याणिस्रुवेण । समिधोमूलतोद्व्यंगुलंविहाय
मध्यमानामिकांगुष्ठैर्जुहुयात् ॥ चरुंग्राससमंपाणिनैवजुहुयात् ॥ आज्यंस्रुवेणैवजुहुया
त् ॥ तदभावेयज्ञियवृक्षपर्णेन ॥ द्रव्यभेदेनाहुतिमानंसिद्धांतशेखरे ॥ कर्षप्रमाणमाज्यं
स्यान्मधुक्षीरंचतत्समम् ॥ तंडुलानांशुक्तिमात्रंपायसंप्रसृतेःसमम् ॥४ ॥ कर्षमात्राणि
भक्ष्याणिलाजामुष्टिमितामताः ॥ अन्नंग्राससमंग्राह्यंशाकंग्रासार्धमात्रकम् ॥ ५ ॥ मू
लानांतुत्रिभागःस्यात्कंदानामष्टमांशकः ॥ इक्षोः पर्वप्रमाणंस्याद्दंगुलद्वितयंलता ॥



१ देशिनीतर्जनी ।

॥ ६ ॥ प्रादेशमात्राः समिधोव्रीहीणामंजलेःसमम्॥तिलसक्तुकणादीनांमृगीमुद्राप्रमाणतः ॥ ७ ॥ पत्रपुष्पफलादीनांसमानाहुतिरुच्यते ॥ चंदनश्रीखंडकस्तूरीकुंकुमागरुकर्दमाः हरिमंथसमाः[1] प्रोक्तागुग्गुलोबदरीसमः ॥ आहुतीनामिदंमानंकथितंवेदवादिभिः ॥ तिसृभिर्दूर्वाभिरेकाहुतिः ॥ कुशेषुत्रिपत्रेणैकेति ॥ मृगीमुद्रालक्षणम्॥ मिलितानामिकांगुष्ठमध्यमांगुलीर्योजयेत् ॥ शेषांगुलीउच्छ्रितेतिमृगीमुद्रेयमीरिता ॥ याज्ञवल्क्यः ॥ ॥ आर्षंछंदश्चदैवत्यंविनियोगस्तथैवच ॥ वेदितव्यंप्रयत्नेनब्राह्मणेनविशेषतः॥अविदित्वातुयःकुर्याद्याजनाध्ययनंजपम्॥ होममंतर्जलादीनितस्यचाल्पफलंभवेत् अत्रापवादः कृष्णभट्टीये ॥ नचस्मरेदृषिछंदः श्राद्धेवैतानिकेमखे ॥ अन्यत्र ॥ अग्निहोत्रेवैश्वदेवे विवाहादिविधौतथा॥ होमकालेनदृश्यंतेप्रायश्छंदार्षिदेव

---

1 चणकः ।

ताः ॥ शांतिकादिषुकार्येषुमंत्रपाठजपादिषु ॥ होमेनैवप्रकर्तव्याःकदाचिद्दृषिदेव
ताः ॥ ॥ स्मृत्यंतरे ॥ ॥ कनकंकुलिशंनीलंपद्मरागंचमौक्तिकम् ॥ एतानिपंचर
त्नानिरत्नशास्त्रविदोविदुः ॥ १ ॥ विष्णुधर्मोत्तरे ॥ ॥ वज्रमाणिक्यवैडूर्यपुष्परागें
द्रनीलकम् ॥ पंचरत्नमितिख्यातंनारदेनमहर्षिणा ॥ १ ॥ ॥ मदनरत्नेस्कांदे ॥
हरिद्रांकुंकुमंचैवसिंदूरंकज्जलंतथा कूर्पासकंचतांबूलंमांगल्याभरणंशुभम् ॥ पंचग
व्यंस्मृतिदर्पणे ॥ गायत्र्यादायगोमूत्रंगंधद्वारेतिगोमयम् आप्यायस्वेतिचक्षीरंद
धिक्राव्णोतवैदधि ॥ १ ॥ तेजोसिशुक्रमित्याज्यंदेवस्यत्वाकुशोदकम् ॥ एभिस्तुपंच
भिर्युक्तंपंचगव्यमितिस्मृतम् ॥ तत्रताम्रपात्रेपलाशपत्रपुटेवाताम्रायागोमूत्रमष्टमा
षप्रमाणम् ॥ श्वेतगोः शकृत्षोडशमाषम् ॥ पीतगोः क्षीरंद्वादशमाषम् ॥ ॥ कृ

१ हीरकः । २ कंचुकी ।

ष्णगोर्घृतमष्टमाषम् ॥ कुशोदकंचतुर्माषम् ॥ अत्रमाषः पंचगुंजात्मकइतिधर्मसिंधौ ॥ मदनरत्नेकात्यायनः ॥ ॥ आज्यंक्षीरंमधुतथामधुरत्रयमुच्यते ॥ पयोदधिघृतंचैवमधुशर्करयायुतम् ॥ पंचामृतमिदंप्रोक्तंसर्वदेवप्रसादकम् ॥ ब्राह्मे ॥ ॥ अश्वत्थोदुंबरप्लक्षचूतन्यग्रोधपल्लवाः ॥ पंचभंगाइतिप्रोक्ताः सर्वकर्मसुशोभनाः ॥ १ ॥ अश्वत्थोदुंबरब्राह्मइतिपाठभेदः ॥ तथाच ॥ प्लक्षः ॥ ॥ यक्षकर्दमउक्तोगारुडे ॥ कर्पूरमगरुश्चैवकस्तूरीचंदनंतथा ॥ कंकोलंचभवेदेभिः पंचभिर्यक्षकर्दमः ॥ तथा ॥ कर्पूरंचंदनंदर्पंकुंकुमंचसमांशकम्॥सर्वगंधमितिप्रोक्तंसमस्तसुरवल्लभम्॥ १ ॥ कुंकुमंकेशरम् ॥ ॥ कुष्ठंमांसीहरिद्रेद्वेमुराशैलेयँचंदनम्॥वचाचंपकमुस्तौं च सर्वौषध्योदश

१ पिपरी परोसापिंपळ इतिप्रसिद्धः।२ दर्पंकस्तूरी।३ कुष्ठंकोष्ठ।४ मांसीजटामांसी।५ हरिद्रेद्वेआंबी हळद व हळद।६मुरामोरवेलअथवावाल ।७ शैलेयंशिलाजित।८चंदनप्रसिद्ध।९वचावेखंड।१०मुस्ताभद्रमोथ

स्मृताः भविष्यपुराणे ॥ ॥ आपः क्षीरंकुशाग्राणिदध्यक्षततिलास्तथा ॥ य
वाः सिद्धार्थकाश्चैवअर्घोष्टांगः प्रकीर्तितः ॥ १ ॥ तत्रैव ॥ ॥ सुवर्णरजतंताम्रमार
कूटंतथैवच ॥ लोहंत्रपुंतथासीसंधातवः सप्तकीर्तिताः ॥ १ ॥ पंचरात्रे ॥ रजांसिपं
चवर्णानिमंडलार्थंतुकारयेत् ॥ शालितंडुलचूर्णेनशुक्लंवायवसंभवम् ॥ रक्तंकुसुंभसिं
दूरगैरिकादिसमुद्भवम् ॥ हरितालोद्भवंपीतंरजनीसंभवंतुवा ॥ कृष्णंदग्धयवैश्चापिह
रितंपीतमिश्रितम् ॥ दशांगधूपउक्तोमदनरत्ने ॥ षड्भागकुष्ठंद्विगुणोगुडश्चलाक्षात्रयंपंच
नखंस्यभागः ॥ हरीतकीसर्जरसंसमांशंभागैकमेकंत्रिलवंशिलाजम् ॥ १ ॥ घ
नस्यचत्वारिपुंरस्यचैकोधूपोदशांगः कथितोमुनींद्रैः ॥ विष्णुधर्मोत्तरे ॥ हेमरा
जतताम्राश्चमृन्मयालक्षणान्विताः ॥ यात्रोद्वाहप्रतिष्ठासुकुम्भाः स्युरभिषेचने ॥ ॥ ९ ॥

१ सफेदशीरीस २ अष्टांग ३ सोनापितल ४ कथिल ५ सोनगेरू ६ लाख ७नखला८राल९ नागरमोथा१०गुग्गुल

॥ १ ॥ पंचाशांगुलवैपुल्यमुत्सेधः षोडशांगुलः ॥ द्वादशांगुलमूलंस्यान्मुखमष्टांगुलंभवेत् ॥ २ ॥ पंचचआशाश्चपंचाशाः ॥ आशादश॥पंचाधिकशतमंगुलानिवैपुल्यमितिकेचित ॥ पंचदशतावान्वैपुल्यंव्यासइतितुयुक्तम् ॥ धातुजंमृन्मयंवापिकलशंयत्प्रतिष्ठितम् ॥ तद्वत्प्रादेशदीर्घंचचतुरंगुलमुच्छ्रितम् ॥ सिततंडुलपूर्णेनपात्रेणापिहितानमिति ॥ ॥ षट्त्रिंशन्मते ॥ ॥ यवगोधूमधान्यानितिलाः कंगुंश्चमुद्गकाः ॥ श्यामाकाश्चणकाश्चैवसप्तधान्यमुदाहृतम् ॥ १ ॥ अश्वस्थानाद्गजस्थानाद्वल्मीकात्संगमाद्ध्रदात् ॥ राजद्वाराच्चगोष्ठाच्चमृदमानीयनिक्षिपेत् ॥ द्रव्यमानमाह याज्ञवल्क्यः ॥ ॥ जालसूर्यमरीचिस्थंत्रसरेणुरजःस्मृतम् ॥ तेष्टौलिक्षास्तुतास्तिस्रोराजसर्षपमुच्यते ॥१॥ गौरस्तुतेत्रयः षट्तेयवोमध्यश्चतेत्रयः॥कृष्णलाः पंचतेमाषस्तेसुवर्णस्तु

१ प्रसिद्धः २ राले ३ सांवे ४ वारुल ५ महानदीसागरसंगमात् ।

षोडश ॥२॥ पलंसुवर्णाश्चत्वारः पंचवापिप्रकीर्तितताः॥ द्वेकृष्णलेरूप्यमाषोधरणंषोड
शैवते ॥ ३ ॥ शतमानंतुदशभिर्धरणैः पलमेवतु ॥ निष्कंसुवर्णाश्चत्वारइति ॥ ॥
ताम्रस्योन्मानम्॥पलचतुर्थांशेनकर्षेणोन्मितः कार्षिकस्ताम्रसंबंधीपणोभवति ॥कर्ष
संज्ञानिघंटौतेषोडसाक्षः कर्षोस्त्रीपलंकर्षचतुष्टयमितितेषोडशमाषाअक्षः सएवकर्षइ
त्यर्थः ॥ कार्षापणसंज्ञश्चनारदेनोक्तः ॥ कार्षापणोदक्षिणस्यांदिशिरौप्यः प्रवर्तते॥ प
णैर्निबद्धःपूर्वस्यांषोडशैवपणाःसतु ॥ ॥ लीलावत्याम् ॥ वराटकानांदशकद्वयं
यत्साकाकिणीताश्चपणश्चतस्रः । तेषोडशद्रम्मइहावगम्योद्रम्मैस्तथाषोडशभिश्चनि
ष्कः ॥ १ ॥ अशीतिगुंजात्मकःकर्षः ॥ चत्वारः कर्षानिष्कमितिधर्मसिंधौ ॥ ॥ धान्य
मानंभविष्ये ॥ पलद्वयंतुप्रसृतंद्विगुणंकुडवंमतम्॥चतुर्भिः कुडवैःप्रस्थः प्रस्थाश्चत्वार
आढकः ॥ आढकैस्तैश्चतुर्भिश्चद्रोणस्तुकथितोबुधैः कुम्भोद्रोणद्वयंशूर्पःखारीद्रोणा

स्तुषोडश ॥ ॥ गोपथे ॥ ॥ पंचकृष्णालकोमाषस्तैश्चतुःषष्टिभिः पलम् ॥ पलैर्द्वादश भिः प्रस्थोमागधेषुप्रकीर्तितः ॥ १ ॥ आढकस्तैश्चतुर्भिश्चद्रोणः स्याच्चतुराढकः ॥ ॥ विष्णुधर्मोत्तरे ॥ ॥ पलंचकुडवः प्रस्थआढकोद्रोणएवच ॥ धान्यमाने षुबोद्धव्याः क्रमशोमीचतुर्गुणाः ॥ १ ॥ द्रोणैः षोडशभिः खारीविंशत्याकुंभउच्य ते ॥ विंशतिरित्यत्रद्रोणैरितिसंबध्यते ॥ ॥ तथा च ॥ कुंभोद्रोणद्वयमिति पक्षाद्विंशतिद्रोणमितः कुंभइतिपक्षांतरम् ॥ पलसहस्रमितः कुंभइतिपक्षांतरम् ॥ ॥ वाराहे ॥ ॥ पलद्वयंतुप्रसृतंमुष्टिरेकपलंस्मृतम् ॥ अष्टमुष्टिभवेत्किंचित्किंचि दष्टौतुपुष्कलम् ॥ १ ॥ पुष्कलानिचचत्वारिआढकः परिकीर्तितः ॥ चतुराढको भवेद्द्रोणइत्येतन्मानलक्षणम् ॥ एतत्पक्षाणांशक्तिकालाद्यपेक्षयाव्यवस्था ॥ स्मार्तक र्मक्रमउक्तोधर्मसिंधौ ॥ ॥ संकल्पः स्वस्तिवाग्विप्रवरणंभूतनिःसृतिः ॥ पंचगव्यैर्भू

मिश्शुद्धिर्मुख्यदेवतपूजनम्॥अग्निप्रतिष्ठासूर्यादिग्रहस्थापनपूजनम् ॥ देवतान्वाहितिः
पात्रासादनंहविषांकृतिः ॥ यथाक्रमंत्यागहोमावितिपूर्वांगकःक्रमः ॥ पूजास्विष्टं
नवाहुत्योबलिः पूर्णाहुतिस्तथा॥पूर्णपात्रविमोकाद्यग्न्यर्चनांतेऽभिषेचनम् ॥ मानस्तो
केतिभूतिश्चदेवपूजाविसर्जने ॥ श्रेयोग्रहोदक्षिणादिदानंकर्मेश्वरार्पणम् ॥ क्रमोयमु
त्तरांगानांप्रायः स्मार्तेष्वितिस्थितिः ॥ ॥ दशप्रणवाउक्ताः शांतिकमलाकरे ॥ आ
दौप्रणवमुच्चार्य व्याहृतीः प्रणवान्विताः ॥ मंत्रादौप्रणवः कार्योमंत्रांतेप्रणवः पुनः ॥
ततोव्याहृतिसंयुक्तस्त्वंतेचप्रणवः सदा ॥ ॥ अथवा ॥ आदौप्रणवमुच्चार्यसप्तव्याहृ
तयस्ततः ॥ मंत्रादौप्रणवः कार्योमंत्रांतेप्रणवःपुनः॥अंतर्विसर्गकंकुर्याच्छ्रौतेस्मार्तेचक
र्मणि ॥ मंत्रादौप्रणवस्तद्वद्देवस्वामीयभाषणात् ॥ कर्मविशेषे अग्निनामान्युक्तानि ॥११॥
धर्मसिंधौ ॥ ॥ अग्निस्तुमारुतोनामगर्भाधानेविधीयते ॥ पावमानः पुंसवनेसीमंतेमंग

लाभिधः ॥ प्रबलोजातसंस्कारेपार्थिवोनामकर्मणि ॥ अन्नाशनेशुचिः प्रोक्तः सभ्यः
स्याच्चौलकर्मणि ॥ व्रतादेशेसमुद्भवोगोदानादौसूर्यः विवाहेयोजकः ॥ ॥
आवसथ्येद्विजोनामप्रायश्चित्तेविटः स्मृतः ॥ पाकयज्ञेषुपावकःपैतृकेकव्यवाहनः ॥
दैव्येहव्यवाहनः ॥ शांतिकेवरदः ॥ पौष्टिकेबलवर्धनः ॥ मृतदाहेक्रव्यादः ॥ पूर्णाहु
त्यांमृडः ॥ अभिचारेक्रोधोग्निः ॥ वश्यार्थेपावकः ॥ वनदाहेदूषकः ॥ कुक्षौजठरः ॥
वैश्यदेवेरुक्मः ॥ लक्षहोमेवह्निः ॥ कोटिहोमेहुताशनः ॥ समुद्रेवाडवः ॥ अग्निहोत्रे
गार्हपत्योदक्षिणाग्निराहवनीयश्चेतित्रयः ॥ ज्ञात्वैवमग्निनामानिसर्वकर्माणिकारये
त् ॥ ॥ कर्मदेवतानामान्याहबौधायनः ॥ पुण्याहंवाचयिष्यन्नामगृह्णीयादसौ
प्रीयतामितिविवाहस्याग्निरौपासनस्याग्निसूर्यप्रजापतयः ॥ स्थालीपाकस्याग्निगर्भो
गर्भाधानस्यचब्रह्मा ॥ पुंसवनस्यप्रजापतिः ॥ असावित्यस्यस्थानेप्रजापतिर्देवतेत्यर्थः

॥ तथाचसंग्रहे॥ स्वस्तिवाचनमंत्रेतुकर्मकर्मेयथातथम्। पृथक्पृथक्प्रकुर्वीतदेवतानांस
मर्पणम् ॥ औपासनाग्निःसूर्यश्चविवाहेचप्रजापतिः ॥ स्थालीपाकेग्निगर्भश्चआधानब्रह्म
णस्तथा ॥ प्रजापतिःपुंसवनेधातासीमंतकेप्यथ ॥ सविताजातकर्मेषुनामकर्मप्रजाप
तिः ॥ निष्क्रमेन्नप्राशनेचसवितापरिकीर्तितः ॥ चौलेतथैवकेशांतेप्रजापतिरिति
स्मृतः ॥ इंद्रस्तथोपनयनेव्रततुर्येअपापकः ॥ श्रद्धामेधेविसर्गेचसुश्रवाःपरिकीर्तितः ॥
उपाकर्मेतुसविताविवाहेषुप्रजापतिरिति ॥ सोमयागगर्भाधानसीमंतोन्नयनाधानादि
कर्मांगभूतेवृद्धिश्राद्धेक्रतुदक्षसंज्ञकाः विश्वेदेवाअन्यत्रसत्यवसुसंज्ञकाः ॥ आप
स्तंबः ॥ ॥ त्रिमात्रस्तुप्रयोक्तव्यःकर्मारंभेषुसर्वशः ॥ त्रिमात्रस्तुप्रणवः ॥ मार्कं
डेयः ॥ ॥ इक्षुरापःपयोमूलंतांबूलंफलमौषधम् ॥ भक्षयित्वापिकर्तव्याः स्नानदानादि
काः क्रियाः ॥ स्नानमप्यधिकारितावच्छेदकम् ॥ तदुक्तंहेमाद्रौप्रचेतसा ॥ स्नातो

धिकारीभवतिदैवेपित्र्येचकर्मणि ॥ पवित्राङ्गस्तथाजाप्येदानेचविधिचोदिते ॥
आग्नेये ॥ स्नानानामपिसर्वेषांवारुणेनचमानवः ॥ कर्तुमर्हतिकर्माणिविधिवत्सर्वदा
द्विजः ॥ संध्यावंदनंविनाकर्मनकर्तव्यमित्युक्तंतत्रैव ॥ संध्याहीनोऽशुचिर्नित्य
मनर्हःसर्वकर्मसु ॥ यदन्यत्कुरुतेकर्मनतस्यफलमश्नुते ॥ ॥ वाराहे ॥ ॥ सुस्ना
तःसम्यगाचांतःकृतसंध्यादिकक्रियः ॥ कामक्रोधविहीनश्चपाखंडस्पर्शवर्जितः ॥
जितेंद्रियःसत्यवादीसर्वकर्मसुशस्यते ॥ ॥ कर्मांगस्नानेविशेषोमार्कंडेयपुराणे ॥
शिरःस्नानंप्रकुर्वीतदैवंपित्र्यमथापिवा ॥ प्राङ्मुखोदङ्मुखोवापिश्मश्रुकर्मचकार
येत् ॥ तत्रादौश्मश्रुंकर्मतः शिरःस्नानम् ॥ अन्यथाऽशुचित्वापत्त्यापुनःस्नानापत्तेः॥
तच्चस्नानंमंगलकृत्यादौतिलामलकादिनोद्वर्त्याभ्यंगस्नानपूर्वकंकार्यम् ॥ तदुक्तंपर
शुरामेण ॥ ततःस्वगृहमागत्यमंगलस्नानमाचरेत् ॥ सर्वौषधीगंधचूर्णैर्युक्तैःकृष्णति

लामलैः ॥ उद्वर्त्यांगानितैलेनचंपकादिसुगंधिना ॥ तैलेनमंगलस्नानंकुर्वीतब्राह्म
णैःसहेति ॥ ॥ आपस्तंबः ॥ ॥ आर्द्रवासास्तुयःकुर्याज्जपहोमपरिग्रहान् ॥ सर्वं
तद्राक्षसंविद्याद्बहिर्जानुचयत्कृतम् ॥ यज्जलेशुष्कवस्त्रेणस्थलेचैवार्द्रवाससा ॥ जपोहो
मस्तथादानंतत्सर्वंनिष्फलंभवेत् ॥ सप्तवाताहतमपिशुष्कम् ॥ नस्यूतेननदग्धेनपार
क्येणविशेषतः ॥ मूषकोत्कीर्णजीर्णैर्नकर्मकुर्याद्विचक्षणइतिभारतात् ॥ ॥ बोधा
यनः ॥ ॥ काषायवासाःकुरुतेजपहोमप्रतिग्रहान् ॥ नतद्देवागमंकर्महव्यकव्येषव
थोहविरिति ॥ भवेदितिशेषः ॥ ॥ आचारादर्शे ॥ ॥ नरक्तमुल्वणंवासोननीलं च
प्रशस्यते ॥ मलाक्तंचसदाहीनंवर्जयेदंबरंबुधइति ॥ व्याघ्रपादः ॥ काषायंकृष्णवस्त्रं
चमलिनंकेशदूषितम् ॥ जीर्णंचसंधितंवापिपारक्यंमैथुनेधृतम् ॥ छिन्नाग्रमुपवस्त्रंचकुत्सि
तंधर्मतोविदुरिति ॥ अयंचनिषेधःसतिसंभवेबोध्यः ॥ ॥ व्रतहेमाद्रौ ॥ प्रागग्रमुदगग्रं

वाधौतंवासःप्रसारयेत ॥ पश्चिमाग्रंदक्षिणाग्रंपुनः प्रक्षालनाच्छुचीति ॥ मार्कण्डेयः॥
अन्यदेवभवेद्वासः शयनीयेनराधिप ॥ अन्यदेवचदेवानामर्चायामन्यदेवहि ॥
अन्यच्चलोकयात्रायामन्यदीश्वरदर्शने ॥ योगीयाज्ञवल्क्यः ॥ अभावेधौतवस्त्र
स्यशाणक्षौमादिकानिच ॥ कुतपंयोगपट्टंवाद्विवासायेनवैभवेत् ॥ कुतपोनेपालकंब
लः ॥ ॥ भविष्ये ॥ ॥ नीलीरक्तेनवस्त्रेणयत्कर्मकुरुतेद्विजः ॥ स्नानंदानंतपोहोमः
स्वाध्यायः पितृतर्पणम् ॥ वृथातस्यमहायज्ञा नीलीरक्तस्यधारणात ॥ व्याघ्रपादः ॥
नैकवस्त्रोद्विजःकुर्याद्भोजनंचसुरार्चनम् ॥ तत्सर्वमसुरेंद्राणांब्रह्माभागमकल्पयत् ॥
विष्णुपुराणे ॥ ॥ होमदेवार्चनाद्यासुक्रियास्वाचमनेतथा ॥ नैकवस्त्रःप्रवर्तेतद्विजवा
चनिकेतथा ॥ द्विजवाचनेस्वस्तिवाचने ॥ ॥ शातातपः ॥ ॥ सव्यादंसात्परिभ्रष्टं
कटिदेशेधृतांबरम् ॥ एकवस्त्रंतुतद्विद्याद्दैवेपित्र्येविवर्जयेत् ॥ ॥ संग्रहे ॥ ॥ वामेपृष्ठे

तथानाभौकच्छत्रयमुदाहृतम् ॥ त्रिभिःकच्छैःपरिज्ञेयोविप्रोयःसशुचिर्भवेत् ॥ आ
दौकच्छस्ततोनीवीनाभिमध्येचवाससी ॥ नीवीदक्षिणतःस्थाप्याएतत्रिकच्छलक्ष
णम् ॥ शयनंचार्द्रपादेनशुष्कपादेनभोजनम् ॥ नोत्तरीयमधःकुर्याद्रात्रिवासस्तथादि
ने ॥ ॥ कटिवेष्टयंतुयद्वस्त्रंपुरीषोयेनवाकृतः ॥ मूत्रमैथुनकृद्वस्त्रंधर्मकार्येविवर्जयेत् ॥
दानहेमाद्रौगौतमः ॥ ॥ स्नानेदानेजपेहोमेदैवेपित्र्येचकर्मणि ॥ बध्नीयान्नासुरीं
कक्षांशेषकालेयथारुचि ॥ ॥ तत्रैवयाज्ञवल्क्यः ॥ ॥ परिधानाद्बहिःकक्षानिबद्धाचा
सुरीमता ॥ धर्मकर्मणिविद्वद्भिर्वर्जनीयाप्रयत्नतः ॥ ॥ विश्वामित्रः ॥ यज्ञोपवी
तेद्वधार्येश्रौतेस्मार्तेचकर्मणि ॥ तृतीयमुत्तरीयार्थेवस्त्राभावेतदिष्यते ॥ उत्तरीयव
स्त्राभावे ॥ पारस्करगृह्ये ॥ एकंचेत्पूर्वस्योत्तरवर्गेणप्रच्छादयीतेति ॥ ॥ शिखाबंधश्चो
त्तश्चतुर्विंशतिमते ॥ ॥ मध्येतुवहृचाश्चैवनिबध्नीयुःशिखांततः ॥ मध्यंदिनाश्चये

विप्राःपार्श्वेदक्षिणतः क्रमात् ॥ वामपार्श्वेतुबध्नीयुर्येविप्राः सामगायनाः ॥ ॥ संग्र
हे ॥ ॥ खल्वाटत्वादिदोषेणविशिखश्चेन्नरोभवेत् ॥ कौशींतदाधारयीतब्रह्मग्रंथि
युतांशिखाम् ॥ १ ॥ मार्कंडेयः ॥ ॥ कुशपाणिः सदातिष्ठेद्ब्राह्मणोदंभवर्जितः ॥ स
नित्यंहंतिपापानितूलराशिमिवानलः ॥ ॥ याज्ञवल्क्यः ॥ ॥ पेषणादिकयंत्रेषुश
ब्दोयावत्प्रवर्तते ॥ पतितांत्यजचांडालादीनांयावच्चशब्दकः ॥ तावत्कर्मनकर्तव्यं
तथासंध्याद्वयेपिच ॥ उपांशुलक्षणं बृहद्याज्ञवल्क्यः ॥ विनाशब्दंजपोयस्तु
चलज्जिह्वाद्विजच्छदः ॥ उपांशुतंजपंप्राहुर्मनसामानसंबुधाः ॥ स्पष्टतरवर्णोच्चार
स्तु ॥ वर्णः स्पष्टतरोच्चार्योनासाश्वासावधीतिवा ॥ सुखश्वासावधिः शृण्वन्नभिषेका
र्चनेषुचेति ॥ आचारमयूखे ॥ ॥ कर्मप्रदीपे ॥ ॥ आवाहनासनंपाद्यमर्घमाचम
नीयकम् ॥ स्नानंवस्त्रोपवीतंचगंधमाल्यान्यनुक्रमात् ॥ १ ॥ धूपंदीपंचनैवेद्यंतांबूलं

चप्रदक्षिणा ॥ पुष्पांजलिरितिप्रोक्ताउपचारास्तुषोडश ॥ २ ॥ फलेनसुफलावाप्तिः
सांगतादक्षिणार्पणम् ॥ ॥ पञ्चोपचारास्तु ॥ ॥ गंधपुष्पेधूपदीपौनैवेद्यइतिपंचकम
पंचोपचारमाख्यातंपूजनेतत्त्वविद्बुधैः ॥ १ ॥ राजोपचारास्तु ॥ ॥ ततः पंचामृता
भ्यंगमंगस्योद्वर्त्तनंतथा ॥ मधुपर्कं परिमलद्रव्याणिविविधानिच ॥ २ ॥ पादुकांदोल
नादर्शंव्यजनंछत्रचामरे ॥ वाद्यार्तिक्यंनृत्यगीतशय्याराजोपचारकाः ॥ २ ॥ अ
थधनिकादिप्रदेयदक्षिणार्थद्रव्येयत्ताव्यवस्थामाह ॥ तत्रादौधनिकादिलक्षणम् ॥
॥ वाराहे ॥ ॥ वर्धयित्वाधनंयस्तुतस्माद्ग्रासमर्पीहयः ॥ नखादेत्संग्रहपरोधनि
कः स उदाहृतः ॥ १ ॥ पोषणीयकुटुंबस्यनिर्वाहोयावताभवेत् ॥ तावदेवसुखंयस्तुल
भतेप्रतिवार्षिकम् ॥ ऋणंयस्यतुनास्त्येवसमध्यमउदाहृतः॥२॥धनंपूर्वापरंयस्यवर्तते
बहुसंख्यया ॥ अधिकस्यार्जकोयः स्यात्समहाधनउच्यते ॥ सदाचाररतोविप्रोधना

र्जनपराङ्मुखः ॥ कुटुंबयत्नमतिकः सदरिद्रइतिस्मृतः ॥ यस्यस्यादशनाभावः सदा
चाररतस्यहि ॥ महादरिद्रः सभवेद्दासोधान्यविवर्जितः ॥वर्धयित्वाधनंयस्तुग्रासंवा
र्षिकमर्जयेत् ॥ सवैधन्यइतिप्रोक्तश्चैकवर्षेणयः पुमान् ॥ वर्षद्वयमितंग्रासंसहिधन्य
तरःस्मृतः ॥ अधिकस्यार्जकोयः स्यात्सधन्यतमईरितः ॥ धनेनैवविनायस्तुग्रासं
वार्षिकमर्जयेत् ॥ सवैधीरइतिप्रोक्तस्तारतम्यंचपूर्ववत् ॥ इति ॥ अथैतेषुमध्येकेनाकि
यद्देयमित्याकांक्षायांवाराहे लक्षनमस्कारहोमंप्रकृत्य ॥ व्याहृतीनांसहस्र
स्यहोमेशुष्कंद्विजेर्पयेत् ॥ माषमात्रंसुवर्णंतुलक्षहोमेशतंयवा ॥ इत्युक्तम् ॥ धनिकोद्वि
गुणंदद्यात्त्रिगुणंतुमहाधनः ॥ यवार्धंतुदरिद्रेणदातव्यंपुण्यलब्धये ॥ दद्यान्महादरि
द्रस्तुतदर्धंशुल्कमेवचेति ॥ मध्यादिभिस्तुधनिकाद्यपेक्षयाकिंचिन्न्यूनदरिद्राद्यपे
क्षयाकिंचिदधिकंदेयमित्यर्थात्तारतम्येनकल्पनीयम् ॥ धीरेणापिदरिद्रतोपिन्यूनं

सं० समंवालाभानुसारेणकल्पनीयम् ॥ एतच्चसुवर्णादिद्रव्यविषयमेवनतुगवादिविषयम् ॥ भा०
॥१६॥ सुवर्णप्रकृत्यैवद्वैगुण्यादेरुक्तत्वात् ॥ एतत्सर्वंनित्यकर्मविषयमनुक्तपरिमाणविषयकं
चज्ञेयम् ॥ काम्येउक्तपरिमाणेचकर्मणितुयथावदेवदेयम् ॥ धनिकादिस्तुदारिद्र्यमि
तिप्रख्यापयन्यथावन्नददातिसकर्मफलंनैवाप्नोति ॥ तथाचमनुः ॥ ॥ प्रभुः प्रथमक
ल्पस्ययोनुकल्पेनवर्तते ॥ सनाप्नोतिफलंतस्यपरत्रेति श्रुतिः स्मृतिरिति॥पुराणांतरेपि॥
वित्तशाठ्यंनरोयस्तुधनेसतिकरोतिहि ॥ सनाप्नोतिफलंतत्रचौरएवप्रकीर्तितइति ॥
एवंस्वल्पकालसाध्यबहुकालसाध्यकर्मसुश्रमाद्यनुरोधेनद्रव्येयत्ताकल्पनीया ॥ भा
रते ॥ ॥ वेदोपनिषदेचैवसर्वकर्मसुदक्षिणा ॥ सर्वत्रैवतुचोद्दिष्टाभूमिर्गावोथकांचनम् ॥
बैजवापः ॥ ॥ शिवनेत्रोद्भवंयस्मात्तस्मात्तत्पितृवल्लभम् ॥ अमंगलंतद्यत्नेनदेवकार्ये ॥१६॥
विवर्जयेत् ॥ सर्वकर्मसुब्राह्मणभोजनसंख्यामाहगदाधरः ॥ गर्भाधानादिसंस्कारेब्रा

ह्मणान्भोजयेद्दश ॥ शतंविवाहसंस्कारेपंचशान्मेखलाविधौ ॥ आवसथ्येत्रयस्त्रिंश
च्छ्रौताधानेशतात्परम् ॥ अष्टकंभोजयेद्भक्त्यातत्तत्संस्कारसिद्धये ॥ आग्रयणेप्रायश्चि
त्तेब्राह्मणान्दशपंचचेति ॥ कृतंकर्मईश्वरार्पणंकार्यमित्युक्तंबृहन्नारदीये ॥ विष्णव
र्पितानिकर्माणिसफलानिभवंतिहि ॥ अनर्पितानिकर्माणिभस्मनीवहुतंहविः ॥ नि
त्यंनैमित्तिकंकाम्यंयच्चान्यन्मोक्षसाधनम् ॥ विष्णोःसमर्पितंसर्वंसात्त्विकंफलदंभवे
त् ॥ ॥ सप्तगोत्राणियथा ॥ ॥ पितुर्मातुश्चभार्यायाभगिन्यादुहितुस्तथा ॥ पितृष्व
सृमातृष्वस्त्रोर्गोत्राणांसप्तकंस्मृतमिति ॥ एकोत्तरशतकुलानियथा ॥ चतुर्विंशति
विंशच्चषोडशद्वादशानिह ॥ रुद्रादशवसुश्चैवकुलमेकोत्तरंशतमिति ॥ आस्यंनासा
क्षिकर्णौचनाभिहृत्कंभुजौस्पृशेत् ॥ एवमाचमनंकृत्वासाक्षान्नारायणोभवेत् ॥ इ
तिपरिभाषाप्रकरणम् ॥ अथगर्भाधानम् ॥ तत्रप्रथमरजोदर्शनेत्रयोदशदोषाःज्योतिः

 



शास्त्रेउक्तास्तान्संकल्पेवक्ष्यामः तत्रदोषाणांनिबर्हणार्थंनारदोक्तविधिनाशांतिंकृत्वा
गर्भाधानंकार्यम्॥ शांतिकर्मण्यग्निचक्रंचावश्यंतथापिअग्निचक्रंविनाकर्माणिनिर्णीता
नि ॥ ज्योतिर्निबंधे ॥ दुर्गाहोमविधौविवाहसमयेसीमंतपुत्रोत्सवेगर्भाधानविधौचवा
स्तुसमयेविष्णोः प्रतिष्ठादिषु ॥ मौंजीबंधनवैश्वदेवकरणसंस्कारनैमित्तिकेहोमोनि
त्यभवेन्नदोषकथितंचक्रंचवह्नेरपीति ॥ नारदीयेवासिष्ठेचवाराहेचविशेषतः ॥ कात्या
यनोक्तग्रंथेस्युस्त्रयःशांतिर्यजुः स्मृता ॥ तस्मात्कातीयैस्तुउक्तशांतित्रयेन्यतमाविधे
या ॥ अथ नारदोक्तगर्भाधानादौरजोदर्शनशांतिः ॥ ॥ निंद्यर्क्षतिथिवारेषुयदि
पुष्पंप्रदृश्यते ॥ अशुभंचेद्रजःस्त्रीणांनिंद्यस्थानेचवाससि ॥ १ ॥ तत्रशांतिंप्रकुर्वीत
ग्रहयज्ञपुरःसरम् ॥ सुमुहूर्तेतुसंप्राप्तेकुर्याच्छांतिंयथाविधि ॥ २ ॥ विधानंतत्रकर्त 
व्यमरिष्टघ्नंविशेषतः ॥ दंपत्योःप्रातरेवस्यान्मंगलस्नानमुत्तमम् ॥ ३ ॥ पंचमेदिवसेस्ना

त्वाह्वाभ्यामप्यत्रमंगलैः ॥ तिलतैलेनशुद्धेनशुभकल्केनवापुनः ॥ ४ ॥ उष्णैश्चवारिभिः
श्रेष्ठैः पंचपल्लवसंयुतैः ॥ आह्निकंविधिवत्कृत्वाविधानंनूनमाचरेत् ॥ ५ ॥ शुभाचारस
मायुक्तः श्रद्धयापरयायुतः ॥ तिथिश्रवणकंकुर्याच्छांतिसंकल्पपूर्वकम् ॥ ६ ॥ पुण्याहं
वाचयेत्पश्चाद्ब्राह्मणैर्वेदपारगैः ॥ कृत्वाभ्युदयिकंश्राद्धमाचार्यंवरयेत्ततः ॥ ७ ॥ स्थं
डिलंचततः कृत्वाअग्निंसंस्थापयेत्ततः॥ऐशान्यांचतुरःकुंभान्स्थापयेद्वारिपूरितान्॥८॥
पंचपल्लवसंयुक्तान्सर्वौषधिसमन्वितान् ॥ पंचरत्नसमायुक्तान्पंक्तिरूपेणसाधयेत् ॥९॥
कुंभोपरिन्यसेत्पात्रंशालितंदुलपूरितम् ॥ पात्रोपरिन्यसेद्वस्त्रंप्रतिकुंभंपृथक्पृथक्॥१०॥
सूर्यंचविन्यसेदाद्येइंद्रंद्राण्यौततःपरम्॥चतुर्थेविन्यसेद्विद्वान्प्रतिमांभौवनेश्वरीम्॥११॥
ततोग्रहांश्चसंपूज्ययथाविधिविधानतः ॥ सूर्यकुंभंतुसंस्पृश्यसूर्यसूक्तंजपेद्द्विजः ॥१२॥
रुद्रैकादशिनींचापिजपेत्तत्रसमाहितः ॥ प्रधानंपायसंप्रोक्तंसघृतंचसशर्करम् ॥ १३ ॥

अष्टोत्तरसहस्रंतुशतमष्टोतरंतुवा ॥ प्रत्येकदेवतानांचजुहुयात्तिलसर्पिषा ॥ १४ ॥
आकृष्णेनेतिसूर्यंचइंद्रंत्रातारमिंद्रतः ॥ इंद्राणींतुतथादित्यैरास्नेतिचसुमंत्रतः ॥ १५ ॥
ईश्वरींभुवनस्याथयजुषांश्रीश्चतेतिच ॥ ग्रहहोमंततःकृत्वायथाविध्युक्तद्रव्यया ॥१६॥
वंशपात्रंसमानीयरक्तवस्त्रसमन्वितम् ॥ तत्रराशिंप्रकुर्वीततंदुलानांनृपोत्तम ॥ १७ ॥
तत्रोपरिन्यसेद्धैमींकदलींसूर्यदेवताम्॥वह्नेरुत्तरतोविद्वान्कदलींस्थापयेच्छुभाम् ॥१८॥
हेम्नःपंचपलाढ्यांवापलस्यापिसुलक्षणाम् ॥ पलार्द्धेनतदर्द्धेनतद्र्धेनचवापुनः ॥ १९ ॥
सुस्तंभाढ्यांसुपत्रांचकदलेनविराजिताम् ॥ तंदुलानांप्रमाणंतु ॥ अष्टमुष्टिर्भवेत्किं
चित्किंचिदष्टौचपुष्कलम् ॥ पुष्कलानिचचत्वारिआढकःपरिकीर्तितः ॥ चतुर्भिराढकै
र्द्रोणोग्राह्योद्रोणैकतंदुलाः ॥ दद्यात्तांविप्रवर्यायसवस्त्रांचसदक्षिणाम् ॥ अलंकृतायवि ॥१८॥
दुषेश्रोत्रियायकुटुम्बिने ॥ दानमंत्रस्तु ॥ सुपत्रेसुभगेदेविरंभेभास्करवल्लभे ॥ रक्षमां

रजसोदोषाद्दुष्टस्यास्यविगर्हिताम् ॥ दानेनानेनदेवेशः सविताविश्वतोमुखः ॥
प्रीतोभवतुमेसद्योदोषंहरतुदुष्करम् ॥ ततोभिषेचनंकार्यंदंपत्योश्चविशेषतः ॥ उच्चा
र्यवारुणान्मंत्राञ्जलेनपंचपल्लवैः ॥ उद्धृत्योद्धृत्यतंसिंचेत्पुण्यमंत्रैर्यथाविधि ॥
आपोहिष्ठात्रिभिर्मंत्रैः पंचैंद्रैःपंचवारुणैः ॥ भगप्रणेतीदमापः समुद्रायपुनन्तुमा ॥ आ
प्यायपंचनद्येतिशिरोमेतिचतस्रृभिः ॥ देवस्यत्वात्रिभीत्यादिअभिषिच्यपुनः पुनः ॥
शक्रादिदेवताःसर्वाब्रह्मविष्णुपुरोगमाः ॥ दंपत्योःपरिधानार्थमहतेवाससीपुरा ॥ क
र्मणोंतेविसृज्यान्यद्वासश्चपरिधार्यते ॥ आचार्यायततोदद्यात्स्वर्णगोभूतिलांस्ततः ॥
ब्राह्मणेभ्यस्तथान्येभ्योदक्षिणाश्चविशेषतः सदक्षिणमनड्वाहंप्रदद्याद्रुद्रजापिने ॥
ब्राह्मणान्भोजयेत्पश्चाच्छर्कराघृतपायसैः ॥ यस्मिन्वाससिदृष्टंचरजोदुष्टंभयावहम् ॥
तद्वासोयत्नतस्त्याज्यंततःशांतिकरंहितत ॥ एवंयःकुरुतेशांतिंनारदोक्तप्रमाणतः ॥

तदनिष्टंतुसकलंसद्यएवविनश्यति ॥ इति नारदोक्तरजोदर्शनशांतिक्रमः ॥ ॥ अथ
शांतिप्रयोगानुक्रमः ॥ शांतिक्रमंप्रवक्ष्यामिनारदेनयथोदितम् ॥ गणेशंपूजयेदादौ
स्वस्तिपुण्याहवाचनम् ॥ १ ॥ मातॄणांपूजनंकार्यंनांदीश्राद्धमतः परम् ॥ आचार्यंवरयि
त्वाथब्रह्माणंगाणपत्यकम् ॥२॥सादस्यमृत्विजश्चैवजापकान्वरयेत्ततः ॥ दिग्रक्षणंत
तःकार्यंपंचगव्यंयथाविधि ॥ ३ ॥ भूमिंसंपूज्यविधिवत्तत्रसंस्कारपंचकम् ॥ स्थंडि
लेग्निंप्रतिष्ठाप्यकलशान्स्थापयेत्क्रमात् ॥ ४ ॥ मूर्त्यग्न्युत्तारणंप्राणप्रतिष्ठास्थापना
र्चनम् ॥ ग्रहादीन्स्थापयित्वाथस्थापयेद्रुद्रकुंभकम्॥५॥ ब्रह्मासनंततोदत्त्वाकारयेत्कु
शकंडिकाम् ॥ लिंगोक्तैर्नाममंत्रैर्वायथाविध्युक्तद्रव्यतः ॥ ६ ॥ देवताग्रहहोमंचयथा
संख्यापुरःसरम् ॥ पूजास्विष्टंनवाहुत्यांबलिंपूर्णाहुतिंतथा ॥ ७ ॥ स्रुवाश्राद्धिविमोकां
तंहोमशेषंसमापयेत् ॥ श्रेयःसंपाद्यदानंचअभिषेकोविसर्जनम् ॥ ८ ॥ विप्राशिषःप्र

गृह्णीयात्तान्मिष्टान्नेनभोजयेत ॥ इति शांतिप्रयोगानुक्रमः ॥ नान्वाधानमृषि
श्छंदोयजुषांगृह्यकर्मणि ॥ श्रौते कर्मणिकेषांचिदन्वाधानादिकारयेदितिवचनात ॥
ऋषिश्छंदअन्वाधानंगर्भाधानातिरिक्तसंस्कारेऽस्मिन्ग्रंथेनांगीकृतम् ॥ ॥ तत्रादौस
र्वकर्मसाधारणांगानांगणेशपूजादीनांस्वस्तिवाचनांतानांप्रयोगः ॥ ॥ सचशिष्टप्रचु
राचारानुसारेणोच्यते ॥ ॥ महत्सुकर्मसुपूर्वेद्युः स्वल्पेषुतस्मिन्नहनिपूर्वाह्णेनिर्णेज
नांतपंचमहायज्ञांतकृतनित्यक्रियेणसपत्नीकेनससंस्कार्येणयजमानेनप्राङ्मुखेनोदङ्
मुखेनवाशुद्धपीठेउपवेशनम् ॥ ॥ पादौहस्तौचप्रक्षाल्यद्विराचम्य त्रिः प्राणा
नायम्यदेशकालौसंकीर्त्यकरिष्यमाणामुककर्मांगतयामंगलस्नानमहंकरिष्येइति संक
ल्पः ॥ ॥ ततोयथाचारमंगलवाद्यघोषपुरःसरंपुत्रवद्वृद्धसुवासिनीभिर्हस्तैःसु
गंधितैलेनाभ्यंजनंतिलामलकादीनांसर्वौषध्यादिसुगंधचूर्णेनोद्वर्तनमुष्णोदकेनस्नान

मिदमेवमंगलस्नानमित्यभिधीयते ॥ ॥ संग्रहे ॥ ॥ सौगंध्यतिलतैलेनकुर्यादंगेस
मंजनम् ॥ तिलामलकसंयुक्तैःसुगंध्योषधिचूर्णकैः ॥ अंगोद्वर्त्योष्णोदकेनस्नानंतन्मं
गलंस्मृतमिति ॥ ॥ शुष्कवस्त्रपरिधानपुरःसरंपतिपुत्रवद्वृद्धसुवासिनीभिर्मंगलति
लकयुतंनीराजनंचप्रकुर्वीत ॥ तथाचयजमानः पत्न्यासंस्कार्येणचयथायोग्यालंकृ
तः॥ द्विराचमनम् ॥ ततोयजमानः नवंश्वेतंसदशंस्ववर्णेनसकृद्धौतंप्रागुदग्दशंवाप्रसा
रितंनान्यधारितमहतंवसनंतन्नाभिपृष्ठकटयेवंबद्धत्रिकच्छंपरिधास्यैइत्यनेनमंत्रेणप
रिधाययशसामेत्यनेनमंत्रेणोत्तरीयम् ॥ अहतेवाक्षौमवस्त्रेश्वेतपीतरक्तरंजितेवानीली
रंजितंविनापत्न्यात्वमंत्रंपरिधाय॥ प्रतिवस्त्रेस्मार्तविधिनाद्विराचमनम् ॥ पत्न्यास्तुय
थोक्तम् ॥ ततोवारणादियज्ञियदारुनिर्मितेसोत्तरच्छदेशुद्धपीठेशुभासनेयज्ञोपवीति ॥२०॥
नादक्षिणपार्श्वेबद्धशिखाऽभिन्नकेशेनयजमानेनप्राङ्मुखेनोदङ्मुखेनवाउपवेशनम् ॥

तद्दक्षिणतः पत्न्याचतद्दक्षिणतः संस्कार्येणच ॥ वारणादिपदेनसीसवटेमुरणीकाष्ठपी
ठम् ॥ सोत्तरच्छदेनउपर्यग्रइति ॥ ॥ सव्येद्वित्रिकुशदलोपग्रहः ॥ दक्षिणेचतुःकुशद
लोपग्रहः ॥ सचअनामिक्यांमध्यपर्वणि ॥ एवंकरद्वयेकुशोपग्रहः ॥ अथवापं
चचतुःकुशदलग्रंथियुतकरद्वयेपवित्रोपग्रहः ॥ वर्णेवर्णेएकैकन्यूनमितिकेचित् ॥
षोडशमाषमारभ्योर्ध्वंचयथाशक्तिहेमात्मकपवित्रंचातिप्रशस्तम् ॥ ॥ घृतकुंकुम
केशरान्यतममंगलतिलकंस्मार्तविधिनाद्विराचम्यप्राणानायम्यशांतिपाठंपठित्वात्रि
मात्रंप्रणवमुच्चार्यलक्ष्मीनारायणादिदेवान्प्रणमेत् ॥ ॥ ॥ ॥
अथशांतिपाठमंत्राः ॥ ॥ ॐ आनोभुद्राःक्रतवोयन्तुविश्वतोदब्धासोऽअपरितास
ऽउद्भिदः ॥ देवानोयथासदमिद्वृधेऽअसन्नप्रायुवोरक्षितारोदिवेदिवे ॥ १ ॥ देवानां

संº म्भद्रासुमतिर्ऋजूयतान्देवानां रातिरभिनोनिर्वर्त्तताम् ॥ देवानां सख्यमुपसेदिमा भा०
॥२१॥ वयन्देवानऽआयुः प्रतिरन्तुजीवसे ॥ २ ॥ तान्पूर्वयानिविदाहूमहेवयम्भगम्मित्र
मदितिन्दक्षमस्रिधम् ॥ अर्य्यमणम्वरुण सोममश्विनासरस्वतीनः सुभगामयस्क
रत् ॥ ३ ॥ तन्नोवातोमयोभुवातुभेषजन्तन्माता पृथिवीतत्पिताद्यौः ॥ तद्ग्रावाणः
सोमसुतामयोभुवस्तदश्विनाशृणुतन्धिष्ण्यायुवम् ॥ ४ ॥ तमीशानञ्जगतस्तस्थुष
स्पतिन्धियञ्जिन्वमवसेहूमहेवयम् ॥ पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धः
स्वस्तये ॥५॥ स्वस्तिनऽइन्द्रोवृद्धश्रवाः स्वस्तिनः पूषाविश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्यो ॥२१॥
ऽअरिष्टनेमिः स्वस्तिनोबृहस्पतिर्दधातु ॥ ६ ॥ पृषदश्वामरुतः पृश्निमातरः शुभंय्या

वानोविदथेषुजग्मयः ॥ अग्निजिह्वामनवः सूरचक्षसोविश्वनोदेवा ऽ अवसागमन्निह
॥ ७ ॥ भद्रङ्कर्णेभिः शृणुयामदेवाभद्रम्पश्येमाक्षभिर्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवा ꣳ
संस्तनूभिर्व्यशेमहिदेवहितंयदायुः ॥ ८ ॥ शतमिन्नुशरदोऽअन्तिदेवायत्रानश्चक्रा
जरसन्तनूनाम् ॥ पुत्रासोयत्रपितरोभवन्तिमानोमध्यारीरिषतायुर्गन्तोः ॥ ९ ॥
अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता सपितासपुत्रः ॥ विश्वेदेवाऽअदितिः पञ्चज
नाऽअदितिर्जातमदितिर्जनित्वम् ॥ १० ॥ तम्पत्नीभिरनुगच्छेमदेवाः पुत्रैर्भ्रातृभि
रुतवाहिरण्यैः ॥ नाकङ्गृभ्णानाः सुकृतस्यलोकेतृतीयेपृष्ठेऽअधिरोचनेदिवः ॥ ११ ॥
आयुष्यम्वर्चस्य ꣳ रायस्पोषमौद्भिदम् ॥ इद ꣳ हिरण्यंवर्चस्वज्जैत्रायाविशतादुमाम्

द्यौःशान्तिरन्तरिक्ष ँ शान्तिः पृथिवीशान्तिरापःशान्तिरोषधयःशान्तिः ॥ वनस्पत
यःशान्तिर्विश्वेदेवाःशान्तिर्ब्रह्मशान्तिःसर्व ँ शान्तिः शान्तिरेवशान्तिः सामाशा
न्तिरेधि ॥ १ ॥ यतोयतःसमीहसेततोनोऽअभयङ्कुरु ॥ शन्नःकुरुप्रजाभ्योभयन्नःप
शुभ्यः ॥ २ ॥ सुशांतिर्भवतु ॥ ॥ ॥ ॥ ॥
ॐश्रीमन्महागणाधिपतयेनमः ॥ ॐलक्ष्मीनारायणाभ्यांनमः ॥ ॐ उमामहेश्वरा
भ्यांनमः ॐ वाणीहिरण्यगर्भाभ्यांनमः ॥ॐशचीपुरंदराभ्यांनमः ॥ ॐ मातापितृचर
णकमलेभ्योनमः ॥ ॐ कुलदेवताभ्योनमः ॥ॐइष्टदेवताभ्योनमः॥ ॐग्रामदेवताभ्यो
नमः ॥ ॐस्थानदेवताभ्योनमः ॥ॐवास्तुदेवताभ्योनमः ॥ ॐसर्वेभ्योदेवेभ्यः सर्वे
भ्योब्राह्मणेभ्योनमोनमः ॥ ॐ पुण्यंपुण्याहंदीर्घमायुरस्तु ॥: सुमुखश्चैकदंतश्चकपिलो

गजकर्णकः ॥ लंबोदरश्चविकटोविघ्ननाशोगणाधिपः ॥१॥ धूम्रकेतुर्गणाध्यक्षोभालचं
द्रोगजाननः ॥ द्वादशैतानिनामानियः पठेच्छृणुयादपि ॥ २ ॥ विद्यारंभेविवाहेचप्रवे
शेनिर्गमेतथा ॥ संग्रामेसंकटेचैवविघ्नस्तस्यनजायते ॥ ३ ॥ शुक्लांबरधरंदेवंशशिव
र्णंचतुर्भुजम् ॥ प्रसन्नवदनंध्यायेत्सर्वविघ्नोपशांतये ॥ ४॥ अभीप्सितार्थसिद्ध्यर्थंपूजि
तोयःसुरासुरैः ॥ सर्वविघ्नहरस्तस्मैगणाधिपतयेनमः ॥ ५ ॥ सर्वमंगलमांगल्येशिवे
सर्वार्थसाधिके ॥ शरण्येत्र्यंबकेगौरिनारायणिनमोस्तुते ॥ ६ ॥ सर्वदासर्वकार्येषुना
स्तितेषाममंगलम् ॥ येषांहृदिस्थोभगवान्मंगलायतनंहरिः ॥ ७ ॥ लाभस्तेषांजयस्ते
षांकुतस्तेषांपराजयः ॥ येषामिंदीवरश्यामोहृदयस्थोजनार्दनः ॥ ८ ॥ विनायकंगु
रुंभानुंब्रह्मविष्णुमहेश्वरान् ॥ सरस्वतींप्रणम्यादौसर्वकार्यार्थसिद्धये ॥ ९ ॥ सर्वेष्वा
रब्धकार्येषुत्रयस्त्रिभुवनेश्वराः ॥ देवादिशंतुनः सिद्धिंब्रह्मेशानजनार्दनाः ॥ १० ॥

विष्णुर्विष्णुर्विष्णुः ॥ श्रीमद्भगवतोमहापुरुषस्यविष्णोराज्ञयाप्रवर्तमानस्यअद्यब्रह्म
णोद्वितीयेपरार्धेविष्णुपदे श्रीश्वेतवाराहकल्पेवैवस्वतमन्वंतरेअष्टाविंशातितमे
कलियुगेप्रथमचरणेजंबूद्वीपेभरतखंडेदंडकारण्येदेशेगोदावर्याः पश्चिमेतीरेपर
शुरामक्षेत्रेबौद्धावतारेशालिवाहनशकेअमुकनामसंवत्सरेअमुकायनेअमुकऋतौ अ
मुकमासेअमुकपक्षेअमुकतिथौ अमुकवासरेअमुकनक्षत्रेअमुकराशिस्थितेचन्द्रेअ
मुकराशिस्थितेश्रीसूर्ये अमुकराशिस्थितेदेवगुरौशेषेषुग्रहेषुयथायथंराशिस्थान
स्थितेषुसत्सुएवंगुणविशेषणविशिष्टायांशुभपुण्यतिथौममआत्मनः श्रुतिस्मृतिपुरा
णोक्तफलावाप्तये अस्मिन्पुण्याहे अस्याः ममभार्यायाः प्रथमरजोदर्शनसमयेमास
तिथिवारनक्षत्रयोगकरणलग्नहोरावस्त्रदर्शनस्थानदिनभागवर्णानांमध्येयद्विरुद्धफलंत ॥२३॥
त्तद्दोषपरिहारार्थंपुत्रपौत्रादिसंततिप्राप्त्यर्थंतथाचममकलत्रेणसहजन्मराशेः स

काशान्नामराशेःसकाशाद्येकेचिद्विरुद्धस्थानस्थितक्रूरग्रहास्तैःसूचितंसूचयिष्यमा
णंचयत्सर्वारिष्टंतद्विनाशार्थंसर्वदातृतीयैकादशशुभस्थानस्थितशुभफलप्राप्त्यर्थंग
णपतिदुर्गाक्षेत्राधिपत्यादित्यादिनवग्रहाधिदेवताप्रत्यधिदेवतादिसहितश्रीसूर्येंद्रें
द्राणीभुवनेश्वरीदेवताप्रीत्यर्थंनारदोक्तरजोदर्शनशांतिसांगोपांगेनतथाचअस्याः म
मभार्यायाः क्षेत्रगर्भयोः संस्कारार्थप्रतिगर्भसमुद्भवैनो निबर्हणद्वाराश्रीपरमेश्वर
प्रीत्यर्थंगर्भाधानाख्यंकर्मएकतंत्रेणाहंकरिष्ये । इतिसंकल्पः ॥ तदंगत्वेनगणपतिपूज
नंस्वस्तिपुण्याहवाचनंमातृकापूजनमायुष्यमंत्रजपंनांदीश्राद्धंब्रह्माचार्यऋत्विग्वर
णंदिग्रक्षणंपंचगव्यकरणंभूमिपूजनमग्निस्थापनंकलशस्थापनम् अग्न्युत्तारणप्राणप्र
तिष्ठापूर्वकदेवतास्थापनंकदलीस्थापनंनवग्रहस्थापनंचाहंकरिष्ये ॥ तत्रादौकर्मार्थंज

१ नारदोक्तमूलंदर्पणेएव ।

लपूरितकलशार्चनम्॥ॐ तत्वायामिब्रह्मणाव्वन्दमानुस्तदाशास्तेयजमानोहविर्भिः॥
अहेडमानोवरुणेहबोध्युरुश॑ समान॒ आयुःप्रमोषीः ॥ १ ॥ कलशेवरुणायनमः॥
गन्धाक्षतपुष्पैः संपूज्य ॥ ततोदक्षिणहस्तनकलशमालभ्याभिमंत्रयेत् ॥ कलशस्यमु
खेविष्णुः कंठेरुद्रः समाश्रितः ॥ मूलेतस्यस्थितोब्रह्मामध्येमातृगणाः स्मृताः ॥ १ ॥
कुक्षौतुसागराः सर्वेसप्तद्वीपावसुंधरा ॥ ऋग्वेदोथयजुर्वेदः सामवेदोह्यथर्वणः ॥ २ ॥
अंगैश्चसहिताः सर्वेकलशंतुसमाश्रिताः ॥ इत्यभिमंत्र्य ॥ ततोगंगाद्यावाहनम् ॥ गं
गेचयमुनेचैवगोदावरिसरस्वति ॥ नर्मदेसिंधुकावेरिजलेस्मिन्सन्निधिंकुरु ॥ १ ॥ अ
स्मिन्कलशे सर्वाणि तीर्थान्यावाहयामि पूजयामि नमस्करोमि ॥ कलशोदके
नपूजासंभारान्संप्रोक्ष्य ॥ तत्रमंत्रः ॥ ॐअपवित्रः पवित्रोवासर्वावस्थांगतोपिवा ॥

यःस्मरेत्पुंडरीकाक्षंसबाह्याभ्यंतरेशुचिः ॥ १ ॥ इतिमंत्रेणप्रोक्षयेत् ॥ दीपपूजनम् ॥
भोदीपत्वंब्रह्मरूपअंधकारनिवारक ॥ इमांमयाकृतांपूजांगृह्णंस्तेजः प्रवर्धय ॥ १ ॥
दीपायनमःगंधाक्षतपुष्पैः संपूज्य ॥ ॥ ॥ ॥ ॥ ॥
अथगणपतिपूजनम् ॥ ॥ ततोध्यानम् ॥ ॥ श्वेतांगंश्वेतवस्त्रंसितकुसुमगणैः पूजितं
श्वेतगंधैः क्षीराब्धौरत्नदीपैः सुरतरुविमलेरत्नसिंहासनस्थम्॥ दोर्भिःपाशांकुशेष्टाभ
यधृतिविशदंचंद्रमौलिंत्रिनेत्रंध्यायेच्छांत्यर्थमीशंगणपतिममलंश्रीसमेतंप्रसन्नम् ॥ १ ॥
ॐभूर्भुवःस्वःसिद्धिबुद्धिसहितमहागणपतयेनमः ध्यायामि । हेहेरंबत्वमेह्येहिअंबिका

---

१ यद्यपि गणपतिपूजनंगदाधरादिभिर्नोक्तं तथापि आदौ विनायकः पूज्यःअंतेतुकुलदेवतेति संस्कार मयूखादौ गृह्यपरिशिष्टवचनात्॥गणेशं पूजयेत्पूर्वं निर्विघ्नार्थंस्वकर्मणेतिपरशुरामकारिकोक्तेश्चविघ्नेशंच समर्च्यैतिचूडामणिकारवृत्ताच्चकार्यमेव ।

५

त्र्यंबकात्मज ॥ सिद्धिबुद्धिपतेत्र्यक्षलक्षलाभपितुः पितः ॥ नागास्यनागहारत्वं
गणराजचतुर्भुज ॥ भूषितःस्वायुधैर्दिव्यैःपाशांकुशपरश्वधैः ॥ २ ॥ आवाहयामि
पूजार्थंरक्षार्थंचममक्रतौ ॥ इहागत्यगृहाणत्वंपूजांक्रतुंचरक्षमे ॥ ३ ॥ ॐगणाना
न्त्वागणपतिठ्ंहवामहेप्रियाणान्त्वाप्रियपतिठ्ंहवामहेनिधीनान्त्वानिधिपतिठ्ंहवा म
हेवसोमम ॥ आहमजानिगर्भधमात्वमजासिगर्भधम् ॥ १ ॥ ॐभू०सिद्धिबुद्धि
सहितमहागणपतयेनमः गणपतिमावाहयामि ॥ रम्यंसुशोभनंदिव्यं सर्वसौख्य
करंशुभम् ॥ आसनंचमयादत्तंगृहाणपरमेश्वर ॥ २ ॥ ॐवर्ष्मोस्मिसमानानामुद्यतामि
वसूर्यः ॥ इमन्तमभितिष्ठामियोमाकश्चाभिधासति ॥ २ ॥ ॐभू०सि० म० आसनं
समर्पयामि ॥ उष्णोदकंनिर्मलंचसर्वसौगंध्यसंयुतम् ॥ पादप्रक्षालनार्थायदत्तंतेप्रति

गृह्यताम् ॥ ३ ॥ ॐ एतावानस्यमहिमातोज्यायाँश्चपूरुषः ॥ पादोस्यविश्वाभूतानि
त्रिपादस्यामृतन्दिवि ॥ ३ ॥ ॐ भू०सि०म०ग०पाद्यंस० ॥ ताम्रपात्रेस्थितंतोयं
गंधपुष्पफलान्वितम् ॥ सहिरण्यंददाम्यर्घंगृहाणपरमेश्वर ॥ ४ ॥ ॐ धामन्तेविश्व
म्भुवनमधिश्रितमन्तःसमुद्रेहृद्यन्तरायुषि ॥ अपामनीकेसमिथेयऽआभृतस्तमश्या
ममधुमन्तन्तऽऊर्मिम् ॥ ४ ॥ ॐ भू०सि०म०अर्घ्यंस० ॥ सर्वतीर्थसमायुक्तंसुगंधि
निर्मलंजलम् ॥ आचम्यार्थंमयादत्तंगृहाणपरमेश्वर ॥ ॐ इमम्मेवरुणश्रुधीहव
मद्याचमृडय ॥ त्वामवस्युराचके ॥ ५ ॥ ॐ भू०सि०म०आचमनंस० ॥ पंचामृत
स्नानम् ॥ कामधेनुसमुद्भूतंसर्वेषांजीवनंपरम् ॥ पावनंयज्ञहेतुश्चपयः स्नानार्थमर्पितम् ॥

 ॥ १ ॥ ॐ पयंᳬपृथिव्याम्पयुऽओषधीषुपयोदिव्युन्तरिक्षेपयोधाᳬ ॥ पयस्वतीᳬप्र 
 दिशंᳬसन्तुमह्यम् ॥ १ ॥ ॐ भू० सि० म० पयःस्नानंस० ॥ पयः स्नानांतेशुद्धोदक
स्नानंस० ॥ पयसस्तुसमुद्भूतंमधुराम्लंशशिप्रभम् ॥ दध्यानीतंमयादेवस्नानार्थंप्र
तिगृह्यताम् ॥ २ ॥ ॐ दधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्यवाजिनंᳬ ॥ सुरभिनोमु
खाकरत्प्रणऽआयूंषितारिषत् ॥ २ ॥ ॐ भू० सि० म० दधिस्नानंस० ॥ नवनीतसमु
त्पन्नंसर्वसंतोषकारकम् ॥ घृतंतुभ्यंप्रदास्यामिस्नानार्थंप्रतिगृह्यताम् ॥ ३ ॥ ॐ
घृतम्मिमिक्षेघृतमस्ययोनिर्घृतेश्रितोघृतम्वस्युधाम ॥ अनुष्वधमावहमादयस्वस्वा
हाकृतंवृषभव्वक्षिहव्यम् ॥ ३ ॥ भू० सि० म० घृतस्नानंस० ॥ घृतस्नातांतेशु० ॥ 

तरुपुष्पसमुद्भूतंसुस्वादुमधुरंमधु ॥ तेजःपुष्टिकरंदिव्यंस्नानार्थंप्रतिगृह्यताम् ॥ ॐ
मधवाताऽऋतायुतेमधुंक्षरन्तिसिन्धवः ॥ माध्वीर्न्नःसन्त्वोषधीः ॥ १ ॥ मधुनक्तमु
तोषसोमधुमत्पार्थिवꣳरजः ॥ मधुद्यौरस्तुनः पिता ॥ २ ॥ मधुमान्नोवनस्पतिर्म्म
धुमाँ२ऽअस्तुसूर्यः ॥ माध्वीर्ग्गावोभवन्तुनः ॥ ३ ॥ ४ ॥ ॐ भू० सि० म० मधुस्ना
नंस० ॥ इक्षुसारसमुद्भूताशर्करापुष्टिकारिका ॥ मलापहारिकादिव्यास्नानार्थंप्रति
गृह्यताम् ॥५॥ॐअपाꣳरसमुद्वयसꣳसूर्य्येसन्तꣳसमाहितम् ॥ अपाꣳरसस्ययोरस
स्तँवोगृह्णाम्म्युत्तमसुपयामगृहीतोसीन्द्रायत्वाजुष्टङ्गृह्णाम्येषतेयोनिरिन्द्रायत्वाजुष्टंत
मम् ॥ ५ ॥ ॐ भू० सि० म० शर्करास्नानंस० ॥ नानासुगंधद्रव्यंचचंदनंरजनी
युतम् ॥ उद्वर्तनंमयादत्तंगृहाणपरमेश्वर ॥ १ ॥ ॐ गन्धर्वस्त्वाविश्वावसुःपरिद

सं० धातुर्विश्वस्याः राष्ट्रस्य यजमानस्य परिधिरस्यग्निरिडईडितः ॥ १ ॥ ॐ अहिरिव भोगैः भा०
॥२७॥ पर्येति बाहुञ्ज्याया हेतिम्परिबाधमानः ॥ हस्तघ्नो विश्वा वयुनानि विद्वान्पुमान्पुमांसम्
म्परिपातु विश्वतः ॥ २ ॥ ॐ भू० सि० म० उद्वर्तनस्नानंसम० ॥ उद्वर्तनस्नानांते शु
द्धोदकस्नानंस० ॥ ततो नाममंत्रेण गंधपुष्पधूपदीपनैवेद्यतांबूलदक्षिणांतं पंचामृत
स्नानांगपूजनमिति शिष्टाः ॥ कावेरी नर्मदा वेणी तुंगभद्रा सरस्वती ॥ गंगा च यमुना
तोयं मया स्नानार्थमर्पितम् ॥ १ ॥ ॐ आपो हिष्ठा मयोभुवस्तानऽऊर्जे दधातन ॥ म
हेरणाय चक्षसे ॥ १ ॥ यो वः शिवतमो रसस्तस्य भाजयते हनः ॥ उशतीरिव मातरः ॥२७॥
॥ २ ॥ तस्माऽअरङ्गमाम वो यस्य क्षयाय जिन्वथ ॥ आपो जनयथा च नः ॥ ३ ॥ ॐ

भू० सि० म० शुद्धोदकस्नानमभिषेकंचस०॥शांतिःशांतिःशांतिः ॥ सुशांतिर्भवतु॥
ॐ भू० सि० म० स्नानांतेआचमनंस० ॥ सर्वभूषादिमेसौम्येलोकलज्जानिवारणे॥
मयोपपादितेतुभ्यंवाससीप्रतिगृह्यताम् ॥१॥ ॐ युवासुवासाः परिवीतऽआगात्सऽउ
श्रेयान्भवतिजायमानः ॥ तन्धीरासः कवयऽउन्नयन्तिस्वाध्योमनसादेवयन्तः ॥
॥ २ ॥ ॐ भू० सि० म० वस्त्रंस०॥ नवभिस्तंतुभिर्युक्तंत्रिगुणंदेवतामयम् ॥ उपवीतं
मयादत्तंगृहाणपरमेश्वर॥१॥ ॐ यज्ञोपवीतम्परमम्पवित्रम्प्रजापतेर्यत्सहजम्पुरस्तात्॥
आयुष्यमग्र्यम्प्रतिमुञ्चशुभ्रंयज्ञोपवीतम्बलमस्तुतेजः ॥ १ ॥ ॐ भू० सि० म०
यज्ञोपवीतंस० ॥ आचमनम् ॥ श्रीखंडंचंदनंदिव्यंकेशरादिसमन्वितम् ॥ विलेपनंसुर
श्रेष्ठचंदनंप्रतिगृह्यताम् ॥ १ ॥ ॐ त्वाङ्गन्धुर्व्वाऽअखनँस्त्वामिन्द्रुस्त्वाम्बृहस्पतिः ॥

त्वामौषधेसोमोराजाविद्वान्यक्ष्मादमुच्यत ॥ १ ॥ ॐ भू० सि० म० चंदनंस० ॥अ
क्षताश्च सुरश्रेष्ठ कुंकुमाक्ताः सुशोभिताः ॥ मयानिवेदिताभक्त्यागृहाणपरमेश्वर ॥
॥ १ ॥ ॐ अक्षन्नमीमदन्तह्यवप्रियाऽअधूषत ॥ अस्तोषतस्वभानवोविप्रानविष्ठ
यामतीयोजान्विन्द्रतेहरी ॥ ॐ भू० सि० म० अक्षतान्स० ॥ सुमाल्यानिसुगंधीनि
मालत्यादीनिवैप्रभो ॥ मयाहृतानिपूजार्थंपुष्पाणिप्रतिगृह्यताम् ॥ १ ओषं
धीःप्रतिमोदध्वम्पुष्पवतीःप्रसूवरीः ॥ अश्वाऽइवसजित्वरिर्वीरुधःपारयिष्णवः ॥
॥ १ ॥ ॐ भू० सि० म० पुष्पाणिस० ॥ दूर्वांकुरान्सुहरितानमृतान्मंगलप्रदान् ॥
आनीतांस्तवपूजार्थंगृहाणगणनायक ॥ १ ॥ ॐ काण्डात्काण्डात्प्ररोहन्तीपरुषः
परुषस्परि ॥ एवानोदूर्वेप्रतनुसहस्रेणशतेनच ॥२॥ ॐ भू० सि० म० दूर्वांकुरान्स०

हरिद्राकुंकुमंचैवसिंदूरादिसमन्वितम् ॥ सौभाग्यद्रव्यसंयुक्तंगृहाणपरमेश्वर ॥ १ ॥
सुगंधौषधिचूर्णंचनानापरिमलानिच ॥ नानासुगंधतैलानिअतःशांतिंप्रयच्छमे ॥ २॥
ॐ अहिरिवभोगैः पर्य्येतिबाहुञ्ज्यायांहेतिम्परिबाधमानः ॥ हस्तघ्नोविश्वांव्वयुनानि
विद्वान्पुमान्पुमांऽसम्परिपातुविश्वतः ॥ १ ॥ ॐ भू० सि० म० नानापरिमलद्रव्या
णिसमर्पयामि ॥ वनस्पतिरसोद्भूतोगंधाढ्योगंधउत्तमः ॥ आघ्रेयःसर्वदेवानांधूपो
यंप्रतिगृह्यताम् ॥ १ ॥ ॐ धूरसिधूर्व्वधूर्व्वन्तन्धूर्व्वतंय्योस्मान्धूर्व्वतितन्धूर्व्वयंव्वयन्धूर्व्वा
मः ॥ देवानामसिवह्नितमंऽसस्नितमम्पप्रितमञ्जुष्टतमन्देवहूतमम् ॥ १ ॥ ॐ भू०
सि० म० धूपंस० ॥ साज्यंचवर्तिसंयुक्तंवह्निनायोजितंमया ॥ दीपंगृहाणदेवेशत्रैलो
क्यतिमिरापह ॥ १ ॥ ॐ अग्निर्ज्योतिर्ज्योतिरग्निःस्वाहासूर्य्योज्योतिर्ज्योतिःसूर्यः

स्वाहा ॥ अग्निर्वर्च्चोज्योतिर्वर्च्चः स्वाहा सूर्योवर्च्चोज्योतिर्वर्च्चः स्वाहा ॥ ज्योतिः सूर्यः
सूर्योज्योतिः स्वाहा ॥ १ ॐ भू० सि० म० दीपं समर्पयामि ॥ शर्कराघृतसंयुक्तंम
धुरंस्वादुचोत्तमम् ॥ उपहारसमायुक्तंनैवेद्यंप्रतिगृह्यताम् ॥ १ ॥ ॐ येदेवासोदिव्येका
दशस्थपृथिव्यामध्येकादशस्थ ॥ अप्सुक्षितोमहिनैकादशस्थतेदेवासोयज्ञमिम
ञ्जुषध्वम् ॥ १ ॥ ॐ भू० सि० म० नैवेद्यंस० ॥ ॐ भू० मध्येपानीयंस० ॥ ॐ भू० उत्तरा
पोशनंस० ॥ ॐ भू० हस्तप्रक्षालनंसमर्पयामि ॥ ॐ भू० सि० म० मुखप्रक्षालनंस० ॥
ॐ भू० चंदनेनकरोद्वर्तनंस० ॥ इदंफलंमयादेवस्थापितंपुरतस्तव ॥ तेनमेसफलावा
प्तिर्भवेजन्मनिजन्मनि ॥ १ ॥ ॐ याः फलिनीर्याऽअफलाऽअपुष्पायाश्चपुष्पिणीः ॥
बृहस्पतिप्रसूतास्तानोमुञ्चन्त्वꣳहसः ॥ १ ॥ ॐ भू० सि० म० फलंस० ॥ पूगीफ

लंमहद्दिव्यंनागवल्लीदलैर्युतम् ॥ एलादिचूर्णसंयुक्तंतांबूलंप्रतिगृह्यताम् ॥१॥ ॐयत्पु
रुषेणहविषादेवायज्ञमतंन्वत ॥ वसन्तोस्यासीदाज्यंग्रीष्मऽइध्मःशरद्धविः ॥ १ ॥
ॐ भू० सि० म० तांबूलंस० ॥ हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः ॥ अनंतपुण्य
फलदमतः शांतिंप्रयच्छमे ॥ १ ॥ ॐ हिरण्यगर्भःसमवर्तताग्रेभूतस्यजातःपतिरे
कऽआसीत् ॥ सदाधारपृथिवीन्द्यामुतेमाङ्कस्मैदेवायहविषाविधेम ॥ १ ॥ ॐ भू०
सि० म० दक्षिणांस० ॥ कदलीगर्भसंभूतकर्पूरंचप्रदीपितम् ॥ आरार्तिकमहंकुर्वेपश्य
मेवरदोभव ॥ १ ॥ ॐइदर्ठ हविःप्प्रजननम्मेऽअस्तुदशवीरर्ठसर्वगणर्ठस्वस्तये ॥आत्म
सनिप्प्रजासनिपशुसनिलोकसन्यभयसनि ॥ अग्निःप्प्रजाम्बहुलाम्मेकरोत्वन्नम्पयो

रतौऽअरमासुंधत्त ॥ १ ॥ ॐ भू० सि० म० कर्पूरनीराजनंस० ॥ नानासुगंधपुष्पा
णियथाकालोद्भवानिच ॥ पुष्पांजलिर्मयादत्तोगृहाणपरमेश्वर ॥ १ ॥ ॐ यज्ञेनंय
ज्ञमयजन्तदेवास्तानिधर्म्माणिप्प्रथमान्यांसन् ॥ तेहनाकंम्महिमानंः सचन्तयत्रपू
र्वेसाध्याः सन्तिदेवाः ॥ १ ॥ ॐभू०सि०म०पुष्पांजलिंस० ॥ यानिकानिचपापानि
ज्ञाताज्ञातकृतानिच ॥ तानिसर्वाणिनश्यंतिप्रदक्षिणपदेपदे ॥ १ ॥ ॐ सप्तास्यांसन्प
रिधयस्त्रिःसप्तसमिधंःकृताः ॥ देवायद्यज्ञन्तंन्न्वानाऽअबंध्नन्पुरुषम्पशुम् ॥ १ ॥ ॐ
भू० सि० म० प्रदक्षिणांस० ॥ अथविशेषार्घः ॥ रक्षरक्षगणाध्यक्षरक्षत्रैलोक्यरक्षक ॥
भक्तानामभयंकर्तात्राताभवभवार्णवात् ॥ १ ॥ द्वैमातुरकृपासिंधोषाण्मातुराग्रज

प्रभो ॥ वरदत्वंवरंदेहिवांछितंवांछितार्थद ॥ २ ॥ अनेनसफलार्घ्येणफलदोस्तुस
दामम ॥ ॐ भू० सि० म० विशेषार्घ्यंस० ॥ ॥ प्रार्थना ॥ ॥ विघ्नेश्वरायवरदाय
सुरप्रियायलंबोदरायसकलायजगद्धिताय ॥ नागाननायश्रुतियज्ञविभूषितायगौ
रीसुतायगणनाथनमोनमस्ते ॥ १ ॥ भक्तार्तिनाशनपरायगणेश्वरायसर्वेश्वरायशुभ
दायसुरेश्वराय ॥ विद्याधरायविकटायचवामनायभक्तप्रसन्नवरदायनमोनमस्ते ॥२॥
नमस्तेब्रह्मरूपायविष्णुरूपायतेनमः ॥ नमस्तेरुद्ररूपायकरिरूपायतेनमः ॥ ३ ॥
विश्वरूपस्वरूपायनमस्तेब्रह्मचारिणे ॥ भक्तप्रियायदेवायनमस्तुभ्यंविनायक ॥ ४ ॥
लंबोदरनमस्तुभ्यंसततंमोदकप्रिय ॥ निर्विघ्नंकुरुमेदेवसर्वकार्येषुसर्वदा ॥ ५ ॥
त्वांविघ्नशत्रुदलनेतिचसुंदरेतिभक्तप्रियेतिसुखदेतिवरप्रदेति ॥ विद्याप्रदेत्यघहरेतिच
येस्तुवंतितेभ्योगणेशवरदोभवनित्यमेव ॥ अनयापूजयासिद्धिबुद्धिसहितमहागण

पतिःसांगःसपरिवारःप्रीयताम् ॥ ॥ इतिश्रीऋषिभट्टविरचितेसंस्कारभास्करेगण
पतिपूजनंसमाप्तम् ॥ अथस्वस्तिपुण्याहवाचनम् ॥ पुण्याहवाचनविधिंवक्ष्यामोऽथय
थाविधि ॥ प्रयोक्तुःकर्मणामादावंतेचोद्यसिद्धये ॥ ॥ तच्चप्रयोगांतर्गतमितिकेचित्
॥ अत्रच ॥ बह्वल्पंवास्वगृह्योक्तंयस्यकर्मप्रकीर्तितम् ॥ तस्यतावतिशास्त्रार्थेकृतेसर्वंकृतं
भवेदिति ॥ पुण्याहवाचनमृद्धौपूर्तौच ॥ कात्यायनः ॥ ऋद्धिश्चैवतुसंस्काराविवाहांता
प्रकीर्तिताः ॥ प्रतिष्ठोद्यापनादीनिपूर्तकर्मयथोदितमिति ॥ तच्चकारिकायाम् ॥ स्वस्ति
वाचनमत्रेष्टंगृह्यकर्मादिकेषुच ॥ आचार्येणापिशास्त्रेऽस्मिन्मंगलार्थमुदीर्यते ॥ १ ॥
क्रमेणकलशंस्थाप्यपूर्णपात्रन्तुसर्वशः ॥ वरुणंतत्रसंपूज्यगंगाद्यावाहनादिकम् ॥ २ ॥
अर्चिताब्राह्मणाःसम्यग्गंधतांबूलदक्षिणाः ॥ तिष्ठेयुर्ब्राह्मणायुग्मावक्तारोदर्भपाण
यः ॥ ३ ॥ तिष्ठेद्वाचयितातेषांदक्षिणस्थउदङ्मुखः ॥ अवनीगतजानुभ्यांततोमुकु

लपद्मवत् ॥ ४ ॥ अंजलिंशिरस्याधायप्रणमेत्त्रिः पुनःपुनः ॥ हस्तेकलशमुद्धृत्यनमे
त्त्रीणिपदानिच ॥ ५ ॥ अथवाचयितुंबाहुंदक्षिणांगसमाश्रितः ॥ मनइत्यादिरूपेण
एकाग्रमितिचादिशेत् ॥ ६ ॥ मनसः स्मइतिब्रूयुस्तेसमाहितपूर्वकाः ॥ प्रसीदंत्विति
कर्तारःप्रसन्नाःस्मइतिद्विजाः ॥ ७ ॥ शांतिरस्त्विवतिविघ्नांताःशब्दाःपंचदशैवतु ॥ अ
स्तुवाक्यंद्विजमुखाच्छ्रावयित्वातथापरैः ॥ ८ ॥ षड्वाक्यानिअस्त्वितिचइतरैरेकवि
शतिः ॥ प्रीयतांवाक्यपठितैरुदकस्यानिषेचनम् ॥ ९ ॥ ततःषड्वाक्यपठितैर्बहिरापोनि
षेचनम् ॥ अंतेदशशुभंवाक्यंनिकामेतितोजपः ॥ १० ॥ शुक्रादयोग्रहाश्चैकंभगवां
स्त्यभिषेचनम् ॥ उदकस्यप्रकुर्वीतपुण्याहंवाचयेत्ततः ॥ ११ ॥ पुण्याहादित्रिरभ्यास
मंत्रमध्योर्ध्वनिःस्वनैः ॥ पुण्यंकल्याणमृद्धिश्चस्वस्तिःश्रीत्यादिपंचकम् ॥ १२ ॥ प्र
णवाद्यंत्रिराचष्टेभवत्पूर्वंभवन्त्विति ॥ प्रत्युक्तविषयेप्रेषास्त्रिवारंस्वस्तिरित्यतः ॥ १३ ॥

वारुणैःपावमानीयैरभिषिच्यसपत्निकम् ॥ नीराजनंततः कुर्यादंतेकर्मेश्वरार्पणमिति ॥ १४ ॥ ॥ अथपुण्याहवाचनेआदौअपांपतिकलशपूजनेअव्रणःशुद्धकलशोग्राह्यः ॥ कलशलक्षणंपरिभाषायामुक्तम् ॥ ॥ अथपुण्याहवाचनप्रयोगः ॥ ॥ महीद्यौरितिभूमिंस्पृष्ट्वा ॥ ओं महीद्यौःपृथिवीचनऽइमंयज्ञम्मिमिक्षताम् ॥ पिपृतान्नोभरीमभिः ॥ १ ॥ ओषधयःसमितियवान्क्षिप्त्वा ॥ ॐ ओषधयःसमवदन्तसोमेनसहराज्ञा ॥ यस्मैकृणोतिब्राह्मणस्तꣳराजन्पारयामसि ॥ १ ॥ आजिघ्रेतिकलशंस्थापयेत् ॥ ओं आजिघ्रकलशम्मह्यात्वाविशन्त्विन्दवः ॥पुनरूर्जानिवर्तस्वसानःसहस्रन्धुक्ष्वोरुधारापयस्वतीपुनर्म्माविशताद्रयिः ॥ १ ॥ वरुणस्योत्तंभनामितिजलंपूरयेत् ॥ ओंवरु



१ टीप—भूमिपूजनमुक्तं परशुरामकारियाम् ॥

णस्योत्तम्भनमसिवरुणस्यस्कंभसर्ज्जनीस्थोवरुणस्यऽऋतसदन्न्यसिवरुणस्यऽऋत
सदंनमासीद ॥ १ ॥ त्वांगंधर्वाइतिगंधंप्रक्षिपेत ॥ ॐ त्वाङ्गन्धुर्वाऽअंखनं० ॥ १ ॥
याओषधीरितिसर्वौषधीः ॥ ॐयाऽओषधीःपूर्वाजातादेवेभ्यस्त्रियुगम्पुरा ॥ मनैनुबभ्रू
णांमहर्ठंशतन्धामानिसप्तचं ॥ १ ॥ कांडात्कांडादितिदूर्वाः ॥ ॐकाण्डात्काण्डात्प्ररो
हन्ती० ॥ १ ॥ अश्वत्थेवेतिपंचपल्लवान् ॥ ॐअश्वत्थेवोनिषदंनम्पर्णेवोवसतिष्कृ
ता ॥ गोभाजइत्किलासथयत्सनवंथपूरुषम् ॥ १ ॥ स्योनापृथिवीतिसप्तमृदः ॥ ॐ
स्योनापृथिविनोभवान्नृक्षरानिवेशनी ॥ यच्छानः शर्म्मसप्प्रथाः ॥ १ ॥ याःफलिनी
रितिफलम् ॥ ॐ याःफलिनीर्याऽअफला० ॥ १ ॥ परिवाजपतिरितिपंचरत्नानि ॥ ॐ

 परिवाजपतिःकविरग्निर्हव्यान्यक्रमीत् ॥ दधद्रत्नानिदाशुषे ॥ १ ॥ हिरण्यगर्भेति 
 हिरण्यम् ॥ ॐ हिरण्यगर्भःसम० ॥ १ ॥ सुवासुवासाइतिरक्तसूत्रेणवेष्टयेत् ॥ ॐ सुवा
सुवासाः परि० ॥ पूर्णादर्वीतिपूर्णपात्रमुपरिन्यसेत् ॥ ॐ पूर्णादर्विपरापतसुपूर्णापुन
रापत ॥ वस्नेवविक्रीणावहाऽइषमूर्जंशतक्रतो ॥ १ ॥ तत्त्वायामीतिवरुणमावाह्य ॥
ॐ तत्त्वायामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेह
बोध्युरुशंसमानऽआयुःप्रमोषीः ॥ १ ॥ वरुणंसांगंसपरिवारमावाहयामि ॥ ॐ
भूर्भुवःस्वःअपांपतिवरुणायनमइतिमंत्रेणषोडशोपचारैः संपूजयेत् ॥ ॥ ततोगंगा
द्यावाहनम् ॥ ॥ सर्वेसमुद्राः सरितस्तीर्थानिजलदानदाः ॥ आयांतुममशांत्यर्थंदुरित 

क्षयकारकाः ॥ ३ ॥ ॥ ततःकलशाभिमंत्रणम् ॥ ॥ कलशस्यमुखेविष्णुःकंठेरुद्रःस
माश्रितः ॥ मूलेतस्यस्थितोब्रह्मामध्येमातृगणाःस्मृताः ॥ १ ॥ कुक्षौतुसागराःसप्त
सप्तद्वीपावसुंधरा ॥ ऋग्वेदोथयजुर्वेदः सामवेदोह्यथर्वणः ॥ अंगैश्चसहिताः सर्वेक
लशंतुसमाश्रिताः ॥ २ ॥ प्रार्थना ॥ ॥ देवदानवसंवादेमथ्यमानेमहोदधौ ॥ उ
त्पन्नोसितदाकुंभविधृतोविष्णुनास्वयम् ॥१॥ त्वत्तोयेसर्वतीर्थानि देवाः सर्वेत्वयिस्थि
ताः ॥ त्वयितिष्ठंतिभूतानित्वयिप्राणाःप्रतिष्ठिताः ॥ २ ॥ शिवःस्वयंत्वमेवासिवि
ष्णुस्त्वंचप्रजापतिः ॥ आदित्यावसवोरुद्राविश्वेदेवाः सपैतृकाः ॥ ३ ॥ त्वयितिष्ठंति
सर्वेपियतः कामफलप्रदाः ॥ त्वत्प्रसादादिमंयज्ञंकर्तुमीहेजलोद्भव ॥ ४ ॥ सान्निध्यं
कुरुमेदेवप्रसन्नोभवसर्वदा ॥ ५ ॥ नमोनमस्तेस्फटिकप्रभायसुश्वेतहारायसुमं

१ स्पृशन्त्वनामिकाग्रेणक्वचिदालोकयन्नपि ॥ अनुमंत्रणंसर्वत्रसदैवमनुमंत्रयेदितिदेवयाज्ञिकः ॥

गलाय ॥ सुपाशहस्तायझषासनायजलाधिनाथायनमोनमस्ते ॥ १ ॥ पाशपाणेन मस्तुभ्यंपद्मिनीजीवनायक ॥ पुण्याहवाचनंयावत्तावत्त्वंसन्निधौभव ॥ १ ॥ ॥ इ तिप्रार्थना ॥ ॥ अथपुण्याहवाचनम् ॥ ॥ अवनिकृतजानुमंडलः कमलमुकुलसदृश मंजलिंशिरस्याधायानंतरंदक्षिणेनपाणिना स्वर्णपूर्णकलशंधारयित्वा दीर्घानागान द्योगिरयस्त्रीणिविष्णुपदानिच ॥ ॐ त्रीणिपदाविचक्रमेविष्णुर्गोपाऽअदाभ्यः ॥ अ तोधर्माणिधारयन् ॥ १ ॥ तेनायुष्प्रमाणेनपुण्यंपुण्याहंदीर्घमायुरस्त्वितिभवंतोब्रुवं तुइतियजमानः ॥ पुण्यंपुण्याहंदीर्घमायुरस्त्वितिद्विजाः ॥ ॥ एवंसर्वत्रयजमानवच

---

१ कलशधारणम् आचार्यकर्तृकंधारयित्वेत्युक्तत्वात् ॥ आचार्यउदकुंभंतंधारयेत्तदनंतरमितिपर शुरामकारिकोक्तेश्च ॥

नोत्तरंब्राह्मणाः प्रतिवचनंदद्युः ॥ ब्राह्मणानांहस्तेसुप्रोक्षितमस्तु ॥ शिवा आपः संतु ॥
ॐ संतुशिवाआपः ॥ सौमनस्यमस्तु ॥ अस्तुसौमनस्यम् ॥ अक्षतंचारिष्टंचास्तु ॥
अस्त्वक्षतमरिष्टंच ॥ गंधाःपांतुसौमंगल्यंचास्त्वितिभवंतोब्रुवंतु ॥ ॐ गन्धाःपांतुसौ
मंगल्यंचास्तु ॥ एवंसर्वत्र ॥ अक्षताः पांतु आयुष्यमस्त्वि० ॥ ॐ अक्षताः पांतुआ
युष्यमस्तु ॥ पुष्पाणिपांतुसौश्रियमस्त्वि० ॥ ॐ पुष्पाणिपांतुसौश्रियमस्तु ॥ तांबू
लानिपांतुऐश्वर्यमास्त्वि० ॥ ॐ तांबूलानिपांतुऐश्वर्यमस्तु ॥ दक्षिणाः पांतुबहुधन
मास्त्वि० ॥ ॐ दक्षिणाःपांतुबहुधनमस्तु॥ पुनरत्राःपांतुस्वार्चितमास्त्वि०॥ पुनरत्राःपां
तुस्वर्चितमस्तु ॥ यजमानआचार्यादीन्प्रणम्य श्रीर्यशोविद्याविनयोवित्तंबहुपुत्रंचायु
ष्यंचास्त्वितिभवंतोब्रुवंतुइतिवदेत ॥ तेचश्रीर्यशोविद्याविनयोवित्तंबहुपुत्रंचायुष्यंचा

१शिवाआपःसन्त्वित्यादिश्लोकामंत्राश्वदर्पणे उक्तास्तथापीदानींतनानामपाठदर्शनान्नात्रलिखिताः ॥

स्तुइत्युक्त्वादीर्घमायुः श्रेयः शांतिः पुष्टिस्तुष्टिश्चास्त्वितियजमानंमूर्धन्यभिषिंचेयुः ॥
यंकृत्वासर्ववेदयज्ञक्रियाकरणकर्मारंभाःशुभाः शोभनाःप्रवर्ततेतमहमोंकारमादिंकृ
त्वाऋग्यजुःसामाशीर्वचनंबहुऋषिमतंसमनुज्ञातंभवद्भिरनुज्ञातः पुण्यंपुण्याहंवाच
यिष्ये ॥ ॥ॐ वाच्यताम् ॥ ॥ब्राह्मणानांहस्तेष्वक्षतान्दद्यात्तेचाशिषोदद्युः॥ ॥ॐ
भुद्रङ्कर्णेभिःशृणुयामदेवाभुद्रम्पश्येमाक्षभिर्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवाᳬसस्तनूभि
र्व्यशेमहिदेवहितंयदायुः ॥ १ ॥देवानांम्भुद्रासुमतिर्ऋजूयतान्देवानाᳬरातिरभिनो
निर्वर्त्ततामृ ॥ देवानाᳬसख्यमुपसेदिमावुयन्देवानऽआयुःप्प्रतिरन्तुजीवसे ॥ २ ॥ न
तुद्रक्षाᳬसिनपिशाचास्तरन्तिदेवानामाजःप्रथमजᳬह्येतत् ॥ योबिभर्तिदाक्षायण ॥३८॥

१ प्रत्यृचमृध्यंतामितिद्विजावदेयुः इतिप्रयोगरत्नेगदाधरेच ॥

ठंहिरंण्यठंसदेवेषुंकृणुतेदीर्घमायुंस्समंनुष्येषुकृणुतेदीर्घमायुः ॥ ३ ॥ दीर्घायुंस्तऽओ
षधेखनितायस्मैंचत्वाखनांम्यहम् ॥ अथोत्वन्दीर्घायुंर्भूत्वाशुतवंल्शाव्विरोंहतात् ॥
॥ १ ॥ द्रविणोदाद्रविणसस्तुरस्यद्रविणोदाःसनरस्यप्रियंसत् ॥ द्रविणोदावीरवती
मिशन्नोद्रविणोदारासतेदीर्घमायुः ॥ १ ॥ सवितापश्चात्तात्सवितापुरस्तात्सवितोत्त
रात्तात्सविताधरात्तात् ॥ सवितानःसुवतुसर्वतातिंसवितानोरासतान्दीर्घमायुः ॥ २ ॥
नवोनवोभवतिजायमानोह्नांकेतुरुषसामेत्यग्रम् ॥ भागन्देवेभ्योविदधात्यायन्प्रचंद्र
मास्तिरतेदीर्घमायुः ॥ १३ ॥ उच्चादिविदक्षिणावन्तोऽअस्थुर्येऽअश्वदाःसहतेसूर्येण॥
हिरण्यदाऽअमृतत्वंभजन्तेवासोदाः सोमप्रतिरन्तआयुः ॥ ॥ इत्याशीर्वादः ॥ ॥ व्र
तजपनियमतपःस्वाध्यायक्रतुदयादमदानविशिष्टानांसर्वेषांब्राह्मणानांमनः समाधी

यताम् ॥ इतियजमानः ॥ समाहितमनसःस्मः ॥ इतिद्विजाः ॥ प्रसीदंतुभवंतः॥इति यजमानोब्रूयात ॥ प्रसन्नाः स्मइतिद्विजाब्रूयुः ॥ ततोयजमानोब्रूयात् ॥ ॥ ॥ ॐशांतिरस्तु ॥ अस्त्वितिद्विजाः प्रतिवचनंसर्वत्र दद्युः ॐ पुष्टिरस्तु ॥ ॐ तुष्टिरस्तु ॥ ॐ वृद्धिरस्तु ॥ ॐ अविघ्नमस्तु ॥ ॐ आयुष्यमस्तु ॥ ॐ आरोग्यमस्तु ॥ ॐ शिवंकर्मास्तु ॥ ॐ कर्मसमृद्धिरस्तु ॥ ॐ वेदसमृद्धिरस्तु ॥ ॐशास्त्रसमृद्धिरस्तु ॥ ॐ धनधान्यसमृद्धिरस्तु ॥ ॐ पुत्रपौत्रसमृद्धिरस्तु ॥ ॐ इष्टसंपदस्तु ॥ ॐ अरिष्टनिरसनमस्तु ॥ १५ ॥ ॐ यत्पापंरोगमशुभमकल्याणंतद्दूरेप्र

१ यद्यपिशौनकेनशांतिरस्त्वित्यादीनिपंचदशवचनान्युक्तानि तथापिप्रयोगरत्नादावधिकान्यपि दृश्यंतेतदनुसारेणात्रलिखितानि । २ अस्त्वितिसमयेपात्रमध्येजलमोचनंकार्यमित्युक्तंप्रयोगचूडामणौपात्रेमुंचन्निति । ३ अरिष्टाम्बुनिरसनंद्विवारंपश्चिमेत्युक्तंप्रयोगचूडामणौ ॥

तिहतमस्तु ॥ ॥ ॐ यच्छ्रेयस्तदस्तु ॥ ॐ उत्तरेकर्मण्यविघ्नमस्तु ॥ ॐ उत्तरोत्तर
महरहरभिवृद्धिरस्तु ॥ ॐ उत्तरोत्तराःक्रियाःशुभाःशोभनाःसंपद्यंताम् ॥ ॐ ति
थिकरणमुहूर्तनक्षत्रग्रहलग्नसंपदस्तु ॥ ६ ॥ उदकसेकः ॥ ॐ तिथिकरणमुहूर्तन
क्षत्रग्रहलग्नाधिदेवताः प्रीयंताम् ॥ ॐ तिथिकरणेसमुहूर्तेसनक्षत्रेसग्रहेसाधिदेवतेप्री
येताम् ॥ॐदुर्गापांचाल्यौप्रीयेताम् ॥ॐअग्निपुरोगाविश्वेदेवाःप्रीयंताम् ॥ॐइंद्रपुरोगा
मरुद्गणाः प्रीयंताम्॥ॐ माहेश्वरीपुरोगाउमामातरः प्रीयंताम् ॥ॐ अरुन्धतीपुरोगाए
कपत्न्यःप्रीयंताम् ॥ ॐ विष्णुपुरोगाःसर्वेदेवाःप्रीयंताम्॥ ॐब्रह्मपुरोगाःसर्वेवेदाःप्रीयं
ताम् ॥ॐब्रह्मचब्राह्मणाश्चप्रीयंताम्॥ॐ श्रीसरस्वत्यौप्रीयेताम्॥ॐश्रद्धामेधेप्रीयेताम् ॥
ॐ भगवतीकात्यायनी प्रीयताम् ॥ ॐ भगवतीमाहेश्वरीप्रीयताम् ॥ ॐभगवतीऋद्धि
करीप्रीयताम्॥ ॐ भगवतीसिद्धिकरीप्रीयताम् ॥ॐभगवतीपुष्टिकरीप्रीयताम् ॥ ॐभ

गवतीतुष्टिकरीप्रीयताम् ॥ॐ भगवंतौविघ्नविनायकौप्रीयेताम्॥ॐसर्वाःकुलदेवताःप्री
यंताम् ॥ॐ सर्वाग्रामदेवताःप्रीयंताम् ॥२१ ॥ ॐ हताश्चब्रह्मद्विषः ॥ हताश्चपरिपंथि
नः ॥ ॐ हताश्चविघ्नकर्तारःशत्रवःपराभवंयांतु ॥ ॐ शाम्यंतुघोराणि ॥ ॐ शाम्यंतु
पापानि ॥ॐशाम्यंत्वीतयः॥६॥ ॐशुभानिवर्द्धंताम् ॥ ॐ शिवा आपः सन्तु ॥ ॐ
शिवाऋतवःसन्तु ॥ ॐ शिवाओषधयःसन्तु ॥ ॐशिवानद्यःसन्तु ॥ ॐ शिवागिरयः
सन्तु॥ ॐशिवाअतिथयःसंतु ॥ ॐशिवाअग्नयःसंतु ॥ॐ शिवाआहुतयःसंतु॥ॐअहो
रात्रेशिवेस्याताम्॥ ॐनिकामेनिकामेनःपर्ज्जन्योवर्षतुफलवत्त्योनऽओषधयःपच्यन्ताँ
न्ताँयोगक्षेमोनःकल्पताम् ॥ १ ॥ॐनिकामेनिकामेनःपर्ज्जन्योवर्षत्विति निकामेनि



१ हताश्चब्रह्मद्विषेत्यादीनांशाम्यंत्वित्यंतानांपूर्वस्यांजलप्रक्षेप उक्तः प्रयोगचूडामणौ ॥

कामेवैतत्रपर्ज्जन्योवर्षतियत्रैतेनयज्ञेनयजन्तेफलवत्योनऽओषधयःपच्यन्तामितिफ
लवत्योवैतत्रौषधयःपच्यन्तेयत्रैतेनयज्ञेनयजन्तेयोगक्षेमोनःकल्पतामितियोगक्षे
मोवैतत्रकल्पतेयत्रैतेनयज्ञेनयजन्तेतस्माद्यत्रैतेनयज्ञेनयजन्तेक्लृप्तःप्रजानाँयोगक्षे
मो भवति ॥ १ ॥ ॐ शुक्रांगारकबुधबृहस्पतिशनैश्चरराहुकेतुसोमसहिता आदित्य
पुरोगाःसर्वेग्रहाः प्रीयंताम् ॥ ॐभगवान्नारायणःप्रीयताम् ॥ॐ भगवान्पर्जन्यः प्रीय
ताम्॥ॐभगवान्स्वामीमहासेनःप्रीयताम्॥ ॐपुण्याहकालान्वाचयिष्ये॥इतियजमानः
॥ॐवाच्यताम् ॥ इतिप्रतिवचनम् ॥ ब्राह्म्यंपुण्यंमहद्यच्चसृष्ट्युत्पादनकारकम्॥ वेदवृक्षो
द्भवंनित्यंतत्पुण्याहंब्रुवंतुनः ॥ १ ॥ भोब्राह्मणामह्यंसकुटुंबिनेमहाजनान्नमस्कुर्वाणा

१ अत्रगदाधरप्रयोरत्नादौउदगातेवशकुनेत्यादयोमंत्राउक्तास्तथापिप्रयोगदर्पणानुसारेणात्रलिखिताः

यआशीर्वचनमपेक्षमाणाय मयाक्रियमाणस्य सग्रहमखरजोदर्शनशांतिपूर्वकगर्भा
धानाख्यस्यकर्मणः पुण्याहंभवंतोब्रुवंतु ॥ॐपुण्याहम् ॥ एवंवचनंप्रतिवचनंचत्रिःपठि
त्वा ॥ ॥अथवाममपुत्रस्यवाकन्यायाश्चअमुकसंस्काराख्यस्यकर्मणः ॥ अथवापु
त्रस्यवाकन्यायाश्च श्वः करिष्यमाणविवाहांगभूतस्यअद्यदेवतप्रतिष्ठाग्रहशांत्याख्य
स्यकर्मणः ॥ एवंयथोक्तकर्मण्यूहः ॥ ॥ ॐ पुनंतुमादेवजनाःपुनन्तुमनसाधियः ॥
पुनन्तुविश्वाभूतानिजातवेदःपुनीहिमा ॥ १ ॥ ॐ सयङ्कामयेतमहत्प्राप्नुयामित्युद
गयनऽआपूर्यमाणपक्षेपुण्याहेद्वादशाहमुपसद्व्रतीभूत्वौदुंबरेक ं सेचमसेवासर्वौषध
म्फलानीतिसम्भृत्यपरिसमुह्यपरिलिप्याग्निमुपसमाधायावृताज्यर्ठंसँस्कृत्यपुर्ठंसा
नक्षत्रेणमन्थर्ठंसन्नीयजुहोति ॥ १ ॥ पृथिव्यामुद्धृतायांतुयत्कल्याणंपुराकृतम् ॥

ऋषिभिःसिद्धगंधर्वैस्तत्कल्याणंब्रुवंतुनः ॥१॥ भोब्राह्मणाः मया० कर्मणः कल्याणंभ
वंतोब्रुवंतु ॥ ॐकल्याणम् ३॥ ॐ यथेमाँवाचंकल्ल्याणीमावदानिजनेभ्यः ॥ ब्रह्म
राजन्याभ्याᳬशूद्रायचार्यायचस्वायचारणायच ॥ प्रियोदेवानांदक्षिणायैदातुरिह
भूयासमयम्मेकामःसमृध्यतामुपमादोनमतु ॥ १ ॥ अथाध्वर्योःप्रतिगरोरात्सुरिमे
यजमानाभद्रमेभ्योयजमानेभ्योभूदितिकल्याणमेवैतन्मानुष्यैवाचोवदति ॥ १ ॥
सागरस्ययथावृद्धिर्महालक्ष्म्यादिभिःकृता ॥ संपूर्णासुप्रभावाचतांचऋद्धिंब्रुवंतुनः ॥
॥१॥ भोब्राह्मणाः मयाक्रिय० कर्मणः ऋद्धिंभवंतोब्रुवंतु॥ ॐऋध्यताम्॥३॥ॐसत्रस्य
ऋद्धिरस्यगन्मज्योतिरमृताऽअभूम ॥ दिवंपृथिव्याऽअध्यारुहामाविदामदेवान्त्स्व
ज्योतिः ॥ १ ॥ ॐ तउत्तरस्यहविर्धानस्यजघन्यायाङ्कुबर्याᳬसामाभिगायन्ति

संं० सत्रस्यऋद्धिरितिऋद्धिमेवैतदभ्युत्तिष्ठंत्युत्तरवेदेर्वोत्तरायाॐश्रोणावितरंतुक्तुतरम् ॥ भा०
॥२९॥ स्वस्तिस्तुयाविनाशाख्यापुण्यकल्याणवृद्धिदा ॥ विनायकप्रियानित्यंतांचस्व
स्तिंब्रुवंतुनः ॥ १ ॥ भोब्राह्मणाःकर्मणेस्वस्तिभ० ॥ ॐ स्वस्ति ॥ २ ॥ ॐ स्वस्तिनऽ
इंद्रोवृद्धश्रवाःस्वस्तिनःपूषाविश्ववेदाः ॥ स्वस्तिनस्ताक्ष्योऽअरिष्टनेमिःस्वस्तिनोबृह
स्पतिर्दधातु ॥ १ ॥ गातुंॐयज्ञायगातुंयज्ञपतयऽइतिगातुंह्येषयज्ञायेच्छतिगातुं
ॐयज्ञपतयेयोयज्ञस्यसर्ठंस्थान्देवीस्वस्तिरस्तुनःस्वस्तिर्मानुषेभ्यऽइतिस्वस्तिनोदे
वत्रास्तुस्वस्तिर्मानुष्यत्रेत्येवैतदाहोर्ध्वंजिगातुभेषजमित्यूर्ध्वोनोयंयज्ञोदेवलोकन्न ॥२९॥
जत्वित्येवैतदाहशन्नोऽअस्तुद्विपदेशञ्चतुष्पदऽइत्येतावद्वाऽइदर्ठंसर्वंयावद्द्विपाच्चैवच

तुष्पाच्चतस्मा ऽएवैतद्यज्ञस्यसर्ठंस्थांगत्वाशंकरोति तस्मादाहशन्नो ऽअस्तु द्विपदेशञ्च
तुष्पदे ॥ १ ॥ समुद्रमथनाज्जाताजगदानंदकारिका ॥ हरिप्रियाचमांगल्यातां
श्रियंचब्रुवंतुनः ॥ १ भोब्राह्मणामयाकृतस्यकर्मणः श्रीरस्त्विवतिभवंतोब्रुवंतु ॥ अस्तु
श्रीः ३ ॥ ॐ श्रीश्चंतेलक्ष्मीश्चपत्न्यांवहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम् ॥
इष्णन्निषाणामुम्मंऽइषाणसर्वलोकम्मंऽइषाण ॥ ४ ॥ तेनोहततऽईजेदक्षःपार्वत
स्तऽइमेप्येतर्हिदाक्षायणाराज्यमिवैवप्राप्ताराज्यमिवैवप्राप्नोतियऽएवंविद्वानेतेनयज्ञे
नयजन्तेतस्माद्वाऽएतेनयजेतसवाऽएकैकऽएवानूचीनाहंपुरोडाशो भवत्येतेनोहा
स्यासपत्नानुपबाधाश्रीर्भवति ॥ ५ ॥ ॥ अस्मिन्पुण्याहवाचनेन्यूनातिरिक्तोयो

विधिःसउपविष्टब्राह्मणानांवचनात् श्रीमहागणपतिप्रसादाच्चसर्वः परिपूर्णोस्तु ॥
ॐअस्तुपरिपूर्णः ॥ ॥ अथाभिषेकः ॥ ॥ अभिषेकेपत्नीवामतः ॥ एकस्मिन्क
लशेवरुणोदकं गृहीत्वाऽविधुराश्चत्वारो ब्राह्मणादूर्वाम्रपल्लवैर्यजमानमभिषिंचेयुः ॥
॥ तत्रमंत्राः ॥ ॐ पयःपृथिव्यां० ॥ १ ॥ पञ्चनद्यः० ॥ २ ॥ वरुणस्योत्तं०
॥ ३ ॥ पुनंतुमा० ॥ ४ ॥ देवस्यंत्वासवितुःप्प्रंसवेश्विनोर्बाहुभ्यांम्पूष्णोहस्ताभ्याम्॥
सरस्वत्यैवाचोयन्तुर्य्यन्त्रियेदधामिबृहस्पतेष्ट्वासाम्राज्येनाभिषिञ्चाम्यसौ ॥ ६ ॥
देवस्यंत्वा० ॥ सरस्वत्यैवाचोयन्तुर्यन्त्रेणाग्नेःसाम्राज्येनाभिषिञ्चामि ॥ ७ ॥ देव
स्यंत्वा० ॥ अश्विनोर्भैषज्ज्येनतेजसेब्रह्मवर्च्चसायाभिषिञ्चामिसरस्वत्यैभैषज्ज्येनवी
र्य्यायान्नाद्यायाभिषिञ्चामीन्द्रस्येन्द्रियेणबलायश्रियैयशसेभिषिञ्चामि ॥ ८ ॥ विश्वा

निदेवसवितर्दुरितानिपरासुव ॥ यद्भद्रंतन्नऽआसुव ॥ ९ ॥ धामच्छदग्निरिन्द्रोब्रह्मा
देवोबृहस्पतिः ॥ सचेतसोविश्वेदेवायज्ञम्प्रावन्तुनःशुभे ॥ १० ॥ त्वँय्यविष्ठदाशुषो
नॄँ॒ःपाहिशृणुधीगिरः ॥ रक्षातोकमुतत्मना ॥ ११ ॥ अन्नपतेन्नस्यनोधेह्यनमीवस्य
शुष्मिणः ॥ प्रप्रदातारन्तारिषऽऊर्ज्जन्नोधेहिद्विपदेशंचतुष्पदे ॥ १२ ॥ ॐपालाशंभ
वति ॥ तेनब्राह्मणोभिषिंचतिब्रह्मवैपलाशोब्रह्मणैवैनमेतदभिषिंचति ॥ १ ॥ औदुं
बरंभवति ॥ तेनस्वोभिषिंचत्यन्नंवाऽउदुंबरऽउग्वैस्वंयावद्वैपुरुषस्य स्वंभवति नैवताव
दशनायतितेनोर्क्स्वंतस्मादौदुंबरेणस्वोभिषिंचति ॥ २ ॥ नैय्यग्रोधपादंभवति ॥ ते
नमित्रोराजन्योभिषिंचतिपद्भिर्वैन्यग्रोधःप्प्रतिष्ठितोमित्रेणवैराजन्यः प्रतिष्ठितस्त

सं० स्मान्नैय्यग्रोधपादेनमित्रोराजन्योभिषिंचति ॥ ३ ॥ आश्वत्थंभवति ॥ तेनवैश्यो मा०
॥४१॥ भिषिंचति सप्तदेवादोश्वत्थेतिष्ठतऽइन्द्रोमरुतऽउपामंत्रयते तस्मादाश्वत्थेनवैश्योऽ
भिषिंचति ॥ ४ ॥ सद्देवकल्पाञ्जुहोति ॥ प्राणावैकल्पाऽअमृतमुवैप्राणाऽअमृतेनै
वैनमेतदभिषिंचति ॥ ५ ॥ सर्वेषांवाऽएषवेदानाᳬरसोयत्सामसर्वेषामेवैनमेतद्वेदा
नाᳬरसेनाभिषिंचति ॥ ६ ॥ ॐद्यौःशांतिरन्त० ॥ १ ॥ यतोयतᳬसमीहसे० ॥ २ ॥
अमृताभिषेकोस्तु ॥ ॥ शांतिःशांतिःशांतिः ॥ सुशांतिर्भवतु ॥ ॥ ततःपुत्रवतीभि
र्वृद्धसुवासिनीभिर्नीराजनंकार्यम् ॥ ॐ अनाधृष्टापुरस्तादग्नेराधिपत्यऽआयुर्म्मेदाᳬ ॥४१॥
पुत्रवतीदक्षिणतऽइन्द्रस्याधिपत्येप्रजाम्मेदाᳬसुखदापश्चाद्देवस्यसवितुराधिपत्येचक्षुं

म्मेंदाऽआश्रुतिरुत्तरतोधातुराधिपत्येरायस्पोषम्मेदाः ॥ विधृतिरुपरिष्टाद्बृहस्प
तेराधिपत्येऽओजोमेदाविश्वाभ्योमानाष्ट्राभ्यस्पाहिमनोरश्वासि ॥ १ ॥ इतिमंत्रे
ण ॥ अनेन पुण्याहवाचनेन श्रीप्रजापतिः प्रीयताम् ॥ ॥ अथ मातृकापूजनम् ॥
तत्रायंक्रमः ॥ अविघ्नोमंडपश्चैवमातॄणांपूजनंसकृत् ॥ वैश्वदेवंवसोर्द्धारानांदीश्राद्ध
मतःपरम् ॥ १ ॥ अविघ्नपूजनात्पूर्वंवैश्वदेवंविधायच ॥ ॥ ततोगोधूमादिधान्यपूरि
तेहरिद्रादिरंजितेमृन्मयेअविघ्नाख्यकलशेमोदादिषड्विनायकमातॄणांप्रतिमाः कुंकुमेन
लिखित्वावाहयेत् ॥ तद्यथा ॥ मोदश्चैवप्रमोदश्चसुमुखोदुर्मुखस्तथा ॥ अविघ्नो
विघ्नकर्ताचषडेतेविघ्ननायकाः ॥ १ ॥ ॐ मोदायनमः मोदमावाहयामि ॥ १ ॥

१ टिप्पणी-प्रयोगरत्नेनंदिन्यादिस्थापनोत्तरमविघ्नपूजनंतंत्रेणैवोक्तम् ॥

ॐ प्रमोदाय० प्रमोदं० ॥२॥ ॐ सुमुखाय० सुमुखं० ॥३॥ ॐ दुर्मुखाय० दुर्मुखं ॥ ४॥
ॐ अविघ्नाय० अविघ्नं० ॥५॥ ॐ विघ्नकर्त्रे० विघ्नकर्तारं० ॥६॥ मनोजूतिरितिप्रतिष्ठा
प्यषोडशोपचारैःसंपूजयेत् ॥ ॐ भूर्भुवःस्वःमोदादिषड्विनायकाःसुप्रतिष्ठावरदाभवं
तु ॥ ॐ मोदादिषड्विनायकेभ्योनमइतिनाममंत्रेण आवाहनादिपुष्पांजलिपर्यंतंपूज
नंकार्यम्॥अनयापूजयामोदादिषड्विनायकाः प्रीयन्ताम्॥ततःस्तंभरोपणादिकटावरण
द्वारफलकांतसंपादितमंडपेमंडपमातृकाःस्थापयेदित्येके ॥ ततः आचार्यहस्तेसु
प्रोक्षितादिकंकार्यम् ॥ॐअत्राःपांतुसुप्रोक्षितमस्त्वितिभवंतोब्रुवंतु ॥ॐ अत्राःपांतुसुप्रो
क्षितमस्तु ॥ ॐगंधाःपांतुसौमंगल्यंचास्त्वितिभ० ॥ ॐ गंधाःपांतुसौमंगल्यंचास्तु ॥
ॐ अक्षताःपांतुआयुष्यमस्त्वितिभ० ॥ ॐ अक्षताःपांतुआयुष्यमस्तु ॥ ॐ पुष्पाणि
पांतुसौश्रियमास्त्वितिभ० ॥ ॐपुष्पाणिपांतुसौश्रियमस्तु ॥ ॐतांबूलानिपांतुऐश्वर्य

मस्त्विति भ०॥ॐ तांबूलानिपांतुऐश्वर्यमस्तु॥ॐ दक्षिणाःपांतुबहुधनमस्त्विति भ०॥ ॐ दक्षिणाःपांतुबहुधनमस्तु ॥ ॐ अपूपाःपांतुबह्वन्नंचास्त्विति भ० ॥ ॐ अपूपाःपांतुबह्वन्नंचास्तु ॥ ॐ शाखादूर्वाःपांतुवृद्धिरस्त्विति भ० ॥ ॐ शाखादूर्वाःपांतुशाखापल्लवानां वृद्धिश्चास्तु ॥ ॥ तत आचार्येणदूर्वाशम्याम्रादिप्रशस्तवृक्षपत्राणांरक्तसूत्रेणपंचधावेष्टनंकार्यम्॥ आसांमंडपमातृसंज्ञाताश्चमंडपमातृर्मंडपेवावंशपात्रेस्थापयित्वा ॥ वसोः पवित्रमिति मंत्रेण यजमानपत्न्याशाखासुतैलारोपणंकार्यम् ॥ ॐ वसोःपवित्रमसिशतधारंवसोःपवित्रमसिसहस्रधारम् ॥ देवस्त्वांसवितापुनातुवसोःपवित्रेणशतधारेणसुप्वाकामधुक्षः ॥ १ ॥ अहिरिवभोगैरितिशाखासुहरिद्राकुंकुमादिसुगंधिद्रव्येणोद्वर्तनम्॥ ॐ अहिरिवभोगैः० ॥ १ ॥ निकामेनिकामइतिउष्णोदकेनशाखास्नप

नम् ॥ ॐ निकामेनिकामेनः॰ ॥ १ ॥ दधिक्राव्णेतिशाखासुदध्यक्षतचंदनम् ॥ ॐ
दधिक्राव्णोअ॰ ॥ १ ॥ याओषधीरितियजमानहस्तेशाखाग्रहणम् ॥ॐयाओषधीः॰
॥ १ ॥ ततोयजमानपत्न्याहस्तेशस्त्रगर्भांपंचमींशाखांगृहीत्वाकांड ात्कांडादितिकं
डनंकार्यम् ॥ ॐ कांडात्कांडात्प्ररोहन्ती॰ ॥ १ ॥ ततआग्नेयादिचतुर्षुमंडपकोणस्तं
भेषुक्रमेणचतस्रोमध्येएकाएवंस्थिरोभवेतिस्थिरीकरणम् ॥ अथवावंशपात्रमध्येचतु
र्षु कोणेषु चतस्रोमध्येएकाएवंस्थिरीकरणसंप्रदायः ॥ ॐ स्थिरोभववीड्वङ्गऽआशुर्भ
ववाज्यर्वन् ॥ पृथुर्भवसुखदस्त्वमग्नेःपुरीषवाहणः ॥ १ ॥ तत्रायंक्रमः ॥ नंदिनीन

---

१ टीप्पणी–प्रयोगरत्नेशस्त्रगर्भाभगवत्यासहषण्णांस्थापनंपूजनोत्तरतैलाभ्यंगाक्ष्यक्तंशूर्पेमातृका
स्थापनंदाक्षिणात्याचारः ॥ प्रयोगरत्नादौतुशूर्पंगृहीत्वा अविघ्नघोषेणसहजलादि समीपेगत्वाजलादि
मातृकावाहनाक्ष्यक्तं तथाप्याचाराच्छूर्पेएवसर्वासांस्थापनमुक्तम् ॥ ॥४३॥

लिनीमैत्राउमाचपशुवर्द्धिनी ॥ आग्नेयादिक्रमेणैवशाखास्तंभेप्रतिष्ठिताः॥ १ ॥ॐनंदि
न्यैनमःनंदिनीमा० ॥७॥ ॐनलिन्यैनमःनलिनीमा० ॥८॥ ॐमैत्रायैनमःमैत्रामा०
॥ ९॥ॐउमायैनमःउमामा०॥१०॥ ॐ पशुवर्धिन्यै० पशुवर्धिनीमा० ॥ ११ ॥ मनो
जूतिरितिप्रतिष्ठाप्यसर्वासांतंत्रेणषोडशोपचारैःपूजनम् ॥ ॐ भूर्भुवःस्वःनंदिन्यादिमं
डपमातृभ्योनमःआवाहनादिषोडशोपचारैःपूजयेत् ॥ अनयापूजयानंदिन्यादिमं
डपमातरःप्रीयंताम् ॥ ततोगौर्यादिमातरोवंशपात्रेपीतपटंप्रसार्यतदुपरिकुंकुमादि
नालिखित्वावाक्षतपुंजेषुपूगीफलेषुनिवेश्याः ॥ ॥ तत्रायंक्रमः ॥ गौरीपद्माशचीमे
धासावित्रीविजयाजया ॥ देवसेनास्वधास्वाहामातरोलोकमातरः ॥ १ ॥ हृष्टिःपु
ष्टिस्तथातुष्टिरात्मनःकुलदेवता ॥ गणेशेनाधिकाह्येतावृद्धौपूज्याश्चतुर्दश ॥ १ ॥
अत्रचतुर्दशपदसमाहारान्मातरोलोकमातर इतिसर्वासांविशेषणम् ॥ ॐगणेशायन

मः गणेशमावाहयामि ॥ ॐ गौर्यैनमःगौरीमा० ॥ १२ ॥ ॐ पद्मायैनमःपद्मा
मा० ॥ १३ ॥ ॐ शच्यैनमःशचीमा० ॥ १४ ॥ ॐ मेधायैनमःमेधामा० ॥ १५ ॥
ॐ सावित्र्यैनमःसावित्रीमा० ॥ १६ ॥ ॐ विजयायैन० विजयामा० ॥ १७ ॥ ॐ जयायै०ज
यामा० ॥ १८ ॥ ॐ देवसेनायै०देवसेनामा० ॥ १९ ॥ ॐ स्वधायै०स्वधामा० ॥ २० ॥ ॐ
स्वाहायै०स्वाहामा० ॥ २१ ॥ ॐ हृष्टयै० हृष्टि० ॥ २२ ॥ ॐ पुष्टयै० पुष्टि० ॥ २३ ॥ ॐ तुष्टयैन
मःतुष्टि० ॥ २४ ॥ ॐ कुलदेवतायै० कुलदेवता० ॥ २५ ॥ इत्यावाह्य ॥ अथजलमात
रः ॥ मत्सीकूर्मीचवाराहीमांडूकीमकरीतथा ॥ ग्राहकीक्रौंचकीचैवसप्तैताजलमात
रः ॥ १ ॥ कांस्येवाताम्रपात्रेवाप्रभूतजलपूरणम् ॥ तत्रमत्स्यादीरावाह्यपूजयेज्जल
मातृकाः ॥ २ ॥ ॐ मत्स्यैनमःमत्सीमावाह० ॥ २६ ॥ ॐ कूर्म्यै० कूर्मीमा० ॥ २७ ॥
ॐ वाराह्यै०वाराही० ॥ २८ ॥ ॐ मांडूक्यैनमः मांडूकी० ॥ २९ ॥ ॐ मकर्य्यै० म

करीमा० ॥ ३० ॥ ग्राहक्यै० ग्राहका० ॥ ३१ ॥ ॐ क्रौंचक्यैनमः क्रौंचकीं० ॥३२॥
इत्यावाह्य ॥ ॥ अथस्थलमातरः ॥ ॥ ब्राह्मीमाहेश्वरीचैवकौमारीवैष्णवीतथा ॥
वाराहीचतथेंद्राणीचामुंडाःसप्तमातरः ॥ १ ॥ ॐ ब्राह्म्यैन० ब्राह्मी० ॥ ३३ ॥ ॐ मा
हेश्वर्यैन० माहेश्वरी० ॥ ३४ ॥ ॐ कौमार्यैन० कौमारी० ॥ ३५ ॥ ॐ वैष्णव्यैन० वै
ष्णवी० ॥ ३६ ॥ ॐवाराह्यै०वाराही० ॥ ३७ ॥ ॐ इंद्राण्यैनमःइंद्राणी० ॥ ३८ ॥ ॐ
चामुंडायै० चामुंडा० ॥ ३९ ॥ इत्यावाह्य ॥ एतागौर्यादिवच्छ्रूपें ॥ ॥ अथद्वारमा
तरः ॥ जयंतीमंगलाचैवपिंगलादक्षिणेगृहात् ॥ आनंदवर्धिनीवामेमहाकालीचनि
र्गमे ॥ १ ॥ गृहस्यदक्षिणेभागेतिस्रोलेख्यास्तुमातरः ॥ वामभागेतथाद्वेचजयंत्या
दिक्रमेणतु ॥ २ ॥ ॐ जयंत्यैन०जयंती० ॥ ४० ॥ मंगलायै० मंगला० ॥ ४१ ॥
ॐपिंगलायै० पिंगला० ॥ ४२ ॥ इतिद्वारदक्षिणे ॥ ॐ आनंदवर्धिन्यै० आनंदवर्धि

नी० ॥ ४३ ॥ ॐमहाकाल्यैनमः महाका० ॥ ४४॥ इतिवामे ॥ इत्यावाह्यसंपूज्य॥तता
गौर्यादिवत् शूर्पेगृहमातरःस्थाप्याः ॥ ॥ कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धाक्रियाम
तिः॥ बुद्धिर्लज्जावपुः शांतिस्तुष्टिःकांतिस्तुमातरः ॥ १ ॥ ॐ कीर्त्यैनमः कीर्ति० ॥
॥ ४५ ॥ ॐलक्ष्म्यै०लक्ष्मी० ॥ ४६ ॥ धृत्यैनमः धृति० ॥ ४७ ॥ ॐ मेधायैनमः मे
धा० ॥ ४८ ॥ ॐ पुष्ट्यैन०पुष्टि० ॥ ४९ ॥ ॐश्रद्धायैन० श्रद्धाम् ॥ ५० ॥ॐ क्रिया
यै० क्रिया० ॥ ५१ ॥ ॐ मत्यैन० मति० ॥ ५२ ॥ ॐबुद्ध्यै०बुद्धि० ॥ ५३ ॥ लज्जा
वपुषेनमः लज्जावपुषमावाहयामि ॥५४॥ ॐशांत्यैनमःशांति० ॥५५॥ॐतुष्ट्यै०तुष्टि०
॥ ५६ ॥ ॐकांत्यै०कांति० ॥ ५७ ॥ इत्यावाह्य ॥ अथघृतमातरः॥ एताःकुडयेशूर्पेवा
कुंकुमाक्तेनघृतेनदक्षिणोत्तराः पूर्वाभिमुखालेख्याः ॥ श्रीर्लक्ष्मीर्धृतिर्मेधापुष्टिःश्रद्धा
सरस्वती ॥ मांगल्येषुप्रपूज्यंतेसप्तैताघृतमातरः ॥ १ ॥ ॐश्रियैनमः श्रिय० ॥ ५८॥

ॐ लक्ष्म्यै० लक्ष्मी० ॥ ५९ ॥ ॐ धृत्यै० धृतिमा० ॥ ६० ॥ ॐ मेधायैनमःमेधा० ॥ ॥ ६१ ॥ ॐ पुष्ट्यै० पुष्टि० ॥ ६२॥ॐ श्रद्धायै० श्रद्धामा० ॥ ६३ ॥ ॐ सरस्वत्यै० सरस्वतीमा० ॥६४॥ इत्यावाह्य ॥ एवंषड्विनायकादिघृतमातृकांतंचतुःषष्टिमातृणांस्थापनम् ॥ मनोजूतिरितिमंत्रेणप्रतिष्ठाप्य ॥ समख्येदेव्याधियाइतिमंत्रेणसर्वाःषोडशोपचारैःसंपूजयेत् ॥ ॐसमख्येदेव्याधियासन्दक्षिणयोरुचक्षसा ॥ माम्ऽआयुःप्प्रमोषीर्मोऽअहन्तवव्वीरंविदेयतवदेवसन्दृशि ॥१॥ ततोयजमानःस्थापितमातृकंच्छूर्पंस्वयंगृहीत्वापत्न्याचाविघ्नकलशंग्राहयित्वापत्न्यग्रतःसन्मंडपतोगृहमध्येदेवस्याग्रेतत्सर्वंस्थापयेत् ॥ तद्वामपार्श्वेदीपंनिदध्यात् ॥ ततःकुड्येआवाहितघृतमातृणामुपरिनागवल्लीदलेनगुडयुक्तेनकेवलेनवाघृतेनाभितोधारां वसोःपवित्रमितिमंत्रेणपातयेत् ॥ सा

चप्रत्यगादिःप्राक्संस्थादक्षिणादिरुदक्संस्थावा ॐ वसोःपवित्रम्० ॥ कुडयलग्नावसो
र्धाराःसप्तधाराघृतेनतु॥ कारयेत्पंचधारावानातिन्यूनाः कदाचन ॥ १ ॥ अथायुष्यमं
त्रजपः ॥ ॐ आयुष्यंवर्चस्यर्ठरायस्पोषमौद्भिदम् ॥ इदर्ठहिरण्यंवर्चस्वजैत्राय।
विंशतादुमाम् ॥ १ ॥ नतद्रक्षां० ॥ २ ॥ यदाबध्नं० ॥ केचित्भद्रंकरणेत्यादिविरो
हतादित्यंतमृक्चतुष्टयंपठंति ॥ ॥ इत्यायुष्यमंत्रजपः ॥ अत्रमंडपपूजनंशिष्टाचा
रतएव ॥ मंडपस्तुविवाहेचूडाकरणेउपनयनेकेशांतेसीमंतोन्नयनेचैवकार्यइत्युक्तम् ॥
यत्रमंडपोनास्तितत्राविघ्नमण्डपजलस्थलद्वारमातृकादीनांचाभावः ॥ तत्रगौर्या
दिचतुर्दशमातृणांस्थापनमुक्तम् ॥ इतिसंस्कारभास्करेमातृकापूजनंसमाप्तम् ॥ ॥ ॥४६॥
अथनांदीश्राद्धम् ॥ तत्रकालः ॥ मातृश्राद्धंतुपूर्वाह्णेमध्याह्नेपैतृकंतथा ॥ ततो

मातामहानांचवृद्धौश्राद्धत्रयंस्मृतमिति हेमाद्र्यादिनिबंधे उक्तम्॥तथा॥अलाभेभिन्न कालानांनांदीश्राद्धत्रयंबुधः ॥ पूर्वेद्युर्वप्रैंकुर्वीतपूर्वाह्णेमातृपूर्वकमितिवृद्धमनुवचनम् ॥ तच्चकात्यायनेनपृथङ्मातृपार्वणोहपूर्वकनवदैवतनांदीश्राद्धकरणं निषिद्धम् ॥ यथा ॥ आयुष्याणिचशांत्यर्थं जप्त्वातत्रसमाहितः ॥ षड्भ्यःपितृभ्यस्तदनुश्राद्धदानमुपक्रमेत् ॥ १ ॥ ॥ सूत्रेविशेषोपदेशाभावः॥ तत्रतुनांदीमुखाः पितरःपितामहाः प्रपितामहाः सपत्नीकाः मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीकाइति षड्भ्यः पितृभ्यः पार्वणद्वयंस्पष्टम् ॥ तच्चसांकल्पिकविधिना ॥ सांकल्पिकेचसमंत्रकावाहनार्घ्याग्नौकरणपिंडदानविकिराक्षय्यस्वधावाचनप्रश्नेत्येतत्सप्तकंवर्ज्यम् ॥ सांकल्पे ॥ शुभायप्रथमांतेन वृद्धौ संकल्पमाचरेत् ॥ नषष्ठ्यायदिवाकुर्यान्महादोषोऽभिजायते ॥ अनस्मद्वृद्धिशब्दानामरूपाणामगोत्रिणाम् ॥ अनाम्नामतिलैश्चैवनांदी

श्राद्धंचसव्यतः ॥ इतिसंग्रहे ॥ कृतेनांदीमुखेमध्येनकुर्याद्द्वितयंपुनः ॥ राजाभिषेके
कुर्वीत तथैवपुत्रजन्मनीति ॥ कृतेभ्युदयश्राद्धेतन्मातृकोत्थापनंविना ॥ नद्वितीयंनां
दीमुखंप्रकुर्यात्पुत्रजन्मनि ॥ तथैवाभ्युदयंकार्यंराज्ञः पट्टाभिषेचने ॥ अन्यथाकु
रुतेमोहादपमृत्युकरंपरम् ॥ पुत्रजन्मनिराजाभिषेकेचद्वितीयंनांदीश्राद्धंकुर्यात् ॥ अ
न्यथा न ॥ मंडपोद्वासनात्पूर्वंनांदीश्राद्धेकृतेपुनः ॥ येकुर्वन्तिनरामोहादपमृत्युंव्रजं
तिते ॥ इतिशास्त्रार्थप्रदीपे ॥ एतन्निषेधस्त्रिपुरुषसपिंडपर्यंतमितिपुरुषार्थचिंतामणौ ॥
पुत्रजन्मनिमित्तेतुतत्कालेनिशिवादिवा ॥ भुक्तोव्रतोपवासीवावृद्धिश्राद्धंतुकारये
त् ॥ इतिरेणुकारिकायाम् ॥ ॥ नांदीश्राद्धंत्रिपार्वणमित्याशयेनामान्नादिपार्वणप्र
योगः शाखांतरत्वान्नात्रलिखितः ॥ ॥ अथवृद्धिश्राद्धकर्तुर्जीवत्पितृकत्वेनिर्णयः ॥
जीवेत्तुयदिवर्गाद्यस्तंवर्गंतुपरित्यजेदितिन्यायेनजीवत्पितृकः ॥ स्वापत्यसंस्कारेषुमा

तृमातामहपार्वणयुतं नांदीश्राद्धंकुर्यात् ॥ मातरिजीवत्यांमातामहपार्वणमेकमेव ॥ मातामहेजीवतिमातृपार्वणमेकमेव ॥ केवलमातृपार्वणेविश्वेदेवान कार्याः ॥ वर्गत्रयाद्येषुमातृपितृमातामहेषुजीवत्सुनांदीश्राद्धलोपएवसुतसंस्कारेषूचितः ॥ द्वितीयविवाहाधानपुत्रेष्टिसोमयागादिषुस्वसंस्कारकर्मसुयेभ्यएवपितादद्यात्तेभ्योदद्यात्स्वयंसुतः ॥ तथाचमृतमातृमातामहकोपिजीवत्पितृकः स्वसंस्कारेपितुर्मातृपितामहीप्रपितामह्यः ॥ पितुः पितृपितामहप्रपितामहाः ॥ पितुर्मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीकाः नांदीमुखाः इत्येवंपार्वणत्रयमुद्दिश्यश्राद्धंकुर्यात् ॥ नतुस्वमातृमातामहपार्वणोद्देशः ॥ पितरिपितामहेचजीवतिस्वसंस्कारे पितामहस्यमातृपितामहीप्रपितामह्यइत्याद्युद्देशः ॥ एवंप्रपितामहेपियोज्यम् ॥ पितुर्मात्रादिजीवनेतत्पार्वणलोपएव ॥ तथाचयेभ्यएवपितादद्यादितिपक्षस्य वर्गाद्यजीवनेतत्पार्व

सं० णलोपइतिद्वारलोपपक्षस्य च स्वसंस्कारस्वापत्यसंस्कारभेदेन व्यवस्थासिद्धांतितेति भा०
ज्ञेयम् ॥ केचित्तुपक्षद्वयस्यैच्छिकोविकल्पो नतु व्यवस्थित इत्याहुः ॥ एवंमृतपितृ
॥४८॥ कस्यजीवन्मातृमातामहस्यपितुः पार्वणेनैवनांदीश्राद्धसिद्धिर्ज्ञेया ॥ समावर्तनस्यमा
णवककर्तृकत्वेपितदंगभूतनांदीश्राद्धेपितुस्तदभावेज्येष्ठभ्रात्रादेरधिकारइतिकेचित् ॥
तत्रपितापुत्रसमावर्तनेस्वपितृभ्योनांदीश्राद्धंकुर्यात् ॥ पिताजीवत्पितृकश्चेत्सुत
संस्कारत्वाद्द्वारलोपपक्षोयुक्तइतिभाति ॥ माणवकपितुः प्रवासादिनाअसन्निधाने
भ्रात्रादिर्माणवकस्यपितुर्मातृपितामहीप्रपितामह्यइत्याद्युच्चार्य श्राद्धं कुर्यात् ॥ मृत
पितृकमाणवकसमावर्तनेपितृव्यभ्रात्रादिरस्यमाणवकस्य मातृपितामहीप्रपितामह्यइ
त्याद्युच्चारयेत् ॥ भ्रात्रादेरभावेस्वयमेवस्वपितृभ्योदद्यात् ॥ एवंजीवत्पितृकोपि ॥४८॥
पितुरसन्निधानेभ्रात्रादेरभावेचपितुः पितृभ्यः स्वयमेवनांदीमुखंकुर्यात् ॥ उपनय

नेनकर्माधिकारस्य जातत्वात ॥ एवंविवाहेपिद्रष्टव्यम् ॥ मृतपितृकस्यचौलोपनय
नादिकंपितृव्यमातुलादिः कुर्वन् अस्यसंस्कार्यस्यपितृपितामहप्रपितामहेत्याद्यु
च्चार्यश्राद्धंकुर्यात् ॥ जीवतः पितुरसंन्निधानेनकुर्वन्मातुलादिरस्यसंस्कार्यस्यपितु
र्जनकादीनुद्दिश्यैवकुर्यान्नतुसंस्कार्यस्यमृतानपिमात्रादीनितिसंक्षेपः ॥ ॥ अ
थ सांकल्पिकविधिना नांदीश्राद्धप्रयोगः ॥ नांदीमुखाः सत्यवसुसंज्ञकाः विश्वे
देवाः ॐ भूर्भुवः स्वः इदं वः पाद्यंपादावनेजनं पादप्रक्षालनं वृद्धिः ॥ ॥ गोत्राः
पितृपितामहप्रपितामहाः सपत्नीकाः नांदीमुखाः ॐभूर्भुवः स्वः इदंवः पाद्यंपादा
वनेजनंपादप्रक्षालनं वृद्धिः ॥ ॥ द्वितीयगोत्राः मातामहप्रमातामहवृद्धप्रमाताम
हाः सपत्नीकाः नांदीमुखाः ॐभूर्भुवः स्वः इदंवः पाद्यं० ॥ अद्यपूर्वोच्चारित० शांति
पूर्वकगर्भाधानांगत्वेन सांकल्पिकेनविधिना ब्राह्मणयुग्मभोजनपर्याप्तान्ननिष्क्रयी

 

भूतयथाशक्तिहिरण्येननांदीश्राद्धंकरिष्ये ॥ ॥ आसनदानम् ॥ ॥ सत्यवसुसंज्ञ
कानांविश्वेषांदेवानां नांदीमुखानाम् ॐभूर्भु० इदमासनम् ॥ सुखासनम् ॥ नांदीश्राद्धे
क्षणौक्रियेताम् ॥ ॐतथा ॥ प्राप्नुवतांभवंतौ ॥ प्राप्नुवावः ॥ गोत्राणांपितृपितामह
प्रपितामहानांसपत्नीकानां नांदीमुखानाम्॥ॐभूर्भुव० इदमासनम्॥ ॥द्वितीयगोत्राणां
मातामहप्रमातामहवृद्धप्रमातामहानांसपत्नीकानां नांदीमुखानाम् ॥ ॐ भूर्भुवः०
इदमासनम् ॥ ततोगंधादिदानम् ॥ सत्यवसुसंज्ञकेभ्योविश्वेभ्योदेवेभ्यो नांदीमु
खेभ्यः इदंगंधाद्यर्चनंस्वाहासंपद्यतांवृद्धिः ॥ ॥ गोत्रेभ्यः पितृपितामहप्रपितामहे
भ्यः सपत्नीकेभ्योनांदीमुखेभ्यः इदंगंधा० ॥ ॥ द्वितीयगोत्रेभ्योमातामहप्रमाता
महवृद्धप्रमातामहेभ्यः सपत्नीकेभ्योनांदीमुखेभ्यः अमीगंधाः० ॥ भोजनंनिष्क्रयद्र

१ नांदीश्राद्धेअन्नाभावे आमम् । आमाभावेहिरण्यंहिरण्याभावेयुग्मब्राह्मणभोजनपर्याप्तान्ननिष्क्रयीभूतयथाशक्तिकिंचिद्द्रव्यदानमितिधर्मसिंधुः ।

न्यदानम् । सत्यवसुसंज्ञकेभ्योविश्वेभ्योदेवेभ्योनांदीमुखेभ्यः ब्राह्मणयुग्मभोजनपर्या
प्तमन्नंतन्निष्क्रयीभूतंकिंचिद्धिरण्यं दत्तममृतरूपेणस्वाहासंपद्यतांवृद्धिः ॥ गोत्रेभ्यः
पितृपितामहप्रपितामहेभ्यः सपत्नीकेभ्योनांदीमुखेभ्यः ब्राह्मणयु० ॥ ॥ द्वितीयगोत्रे
भ्योमातामहप्रमातामहवृद्धप्रमातामहेभ्यः सपत्नीकेभ्योनांदीमुखेभ्यः ब्राह्म०॥ सक्षीर
मुदकदानम्॥नांदीमुखाः सत्यवसुसंज्ञकाः विश्वेदेवाः प्रीयंताम्॥ गोत्राःपितृपितामहप्र
पितामहाः सपत्नीकाः नांदीमुखाः प्रीयंताम्॥द्वितीयगोत्राः मातामहप्रमातामहवृद्धप्र
मातामहाः सपत्नीकाः नांदीमुखाःप्रीयंताम् ॥ ॥ आशिषोग्रहणम्॥ गोत्रंनोवर्द्धतां
वर्द्धतांवोगोत्रम् ॥ दातारोनोभिवर्धंताम् ॥ अभिवर्धंतांवोदातारः ॥ वेदाश्चनोभिवर्धं
ताम् ॥ वर्द्धतांवोवेदाः॥ संततिर्नोभिवर्द्धताम् ॥ वर्धतांवः संततिः ॥ श्रद्धाचनोमाव्यग

१ प्रीयंतामित्यत्रयवक्षीरजलानिदद्यादितिप्रयोगरत्नगदाधरौ ॥

मत् ॥ माव्यगमद्दः श्रद्धा ॥ बहुदेयंचनोस्तु ॥ अस्तुवोबहुदेयम् ॥ अन्नंचनोबहुभवे
त् ॥ भवतुवोबह्वन्नम् ॥ अतिथींश्चलभेमहि ॥ लभंतांवोतिथयः ॥ याचितारश्चनःसं
तु ॥ संतुवोयाचितारः ॥ एताआशिषःसत्याःसंतु ॥ संत्वेताःसत्याआशिषः ॥ द
क्षिणादानम् ॥ सत्यवसुसंज्ञकेभ्योविश्वेभ्योदेवेभ्यो नांदीमुखेभ्यःकृतस्य नांदीश्राद्ध
स्यफलप्रतिष्ठासिद्ध्यर्थंद्राक्षामलकयवमूलनिष्क्रयीभूतांदक्षिणांदातुमहमुत्सृजे ॥ यव
मूलमार्द्रकम् ॥ गोत्रेभ्यः पितृपितामहप्रपितामहेभ्यः सपत्नीकेभ्योनांदीमुखेभ्यःकृत
स्य० ॥ द्वितीयगोत्रेभ्योमातामहप्रमातामहवृद्धप्रमातामहेभ्यः सपत्नीकेभ्योनांदीमु
खेभ्यःकृतस्य० ॥ ॥ततोनांदीश्राद्धंसंपन्नम् ॥ सुसंपन्नम् ॥ वाजेवाजेतिविसृज्य ॥ ॐ
वाजेंवाजेवतवाजिनोनोधनेषुविप्राऽअमृताऽऋतज्ञाः ॥ अस्यमध्वः पिबतमादयंध्व

न्तुप्रावांतपथिभिर्दैवयानैः ॥ १ ॥ आमावाजस्येत्यनुव्रज्य ॥ ॐ आमावाजस्य प्रसवोजंगम्यादेमेद्यावापृथिवीविश्वरूपे ॥ आमागंतांपितरामातराचामासोमोऽअ मृतत्वेनगम्यात् ॥ १ ॥ अस्मिन्नांदीश्राद्धेन्यूनातिरिक्तोयोविधिःसउपविष्टब्राह्मणानां वचनान्नांदीमुखप्रसादात्सर्वःपरिपूर्णोस्तु ॥ अस्तुपरिपूर्णः ॥ ॥ इतिसंस्कारभास्क रेनांदीश्राद्धम् ॥ अथब्रह्माचार्यऋत्विग्वरणम्॥आचार्यस्तुयथास्वर्गेशक्रादीनांबृहस्प तिः ॥ तथात्वंममयज्ञेऽस्मिन्नाचार्योभवसुव्रत ॥ १ ॥ ॐ बृहस्पतेऽअतियदर्योअर्हा द्युमद्विभातिक्रतुमज्जनेषु ॥ यद्दीदयच्छवसऋतप्रजाततदस्मासुद्रविणन्धेहिचित्र

---

१ आमश्राद्धेहिरण्यश्राद्धेचआमावाजंविसर्जयेदितिग्रहयज्ञकल्पवल्ल्याम् ।

म् ॥१॥ अमुकगोत्रोत्पन्नः अमुकप्रवरान्वितःअमुकशर्मायजमानोऽहम्॥अमुकगोत्रो
त्पन्नममुकप्रवरान्वितंशुक्लयजुर्वेदांतर्गतमाध्यंदिनीयशाखाध्यायिनममुकशर्माणं
ब्राह्मणमस्मिन्सग्रहमखरजोदर्शनशांत्याख्येकर्मणिआचार्यत्वेनत्वामहंवृणे ॥ वृतो
स्मि ॥ गंधादिभिःसंपूज्य॥यथाचतुर्मुखोब्रह्मासर्वलोकपितामहः॥ तथात्वंममयज्ञेस्मि
न्ब्रह्माभवद्विजोत्तम॥ १ ॥ ॐ ब्रह्मंजज्ञानंप्रथमम्पुरस्ताद्विसीमतःसुरुचोवेनऽआवः ॥
सबुध्न्याऽउपमाऽअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥ १ ॥ अस्मिन्नजोदर्शन
शांत्याख्येकर्मणिब्रह्मत्वेनत्वामहंवृणे ॥ वृतोस्मि ॥ वांछितार्थफलावाप्त्यैपूजितोसि

---

१ स्वनामगोत्रप्रवरान्संकीर्त्यब्राह्मणस्यच ॥ अस्मिन्यज्ञेऽमुकंदेवंत्वामहम्मृत्विजंवृणे ॥
इत्युक्त्वातुफलंदद्यात्करेतत्रैवपूजनम् ॥ इतिकल्पवल्ल्याम् ॥

सुरासुरैः ॥ निर्विघ्नंक्रतुसंसिद्ध्यैत्वामहंगणपंवृणे ॥ १ ॥ ॥ॐ गुणानांत्वा० ॥ १ ॥ अ
स्मिन्रजोदर्शनशांत्याख्येकर्मणिगाणपत्येनत्वामहंवृणे ॥ वृतोस्मि ॥ कर्मणामुप
देष्टारंसर्वकर्मविदुत्तमम् ॥ कर्मिणंवेदतत्त्वज्ञंसदस्यंत्वामहंवृणे ॥ १ ॥ ॐ सदसस्प
तिमद्भुतंप्रियमिंद्रस्यकाम्यम् ॥ सनिम्मेधामयासिषॅं स्वाहा ॥ १ ॥ अस्मिन्रजो
दर्शनशांत्याख्येकर्मणिसदस्यत्वेनत्वामहंवृणे ॥ वृतोस्मि ॥ ततश्चतुरोष्टौवाऋत्वि
जोवृणुयात् ॥ यज्ञादिकर्मकार्येषुऋत्विक्शक्रमखेयथा ॥ तथायज्ञादिकर्मेस्मि
न्नृत्विक्त्वंमेमखेभव ॥ १ ॥ अस्मिन्ऋत्विक्त्वेन त्वामहंवृणे ॥ वृतोस्मि ॥ ॥
ततःसूक्तजपार्थेऋग्वेदादीन्वृणुयात् ॥ ऋग्वेदःपद्मपत्राक्षोगायत्रः सोमदैवतः ॥ अ

---

१ काशीदीक्षितकृतरुद्रपद्धत्यादौगणपत्यदर्शनात्। २ सदस्यवरणं हेमाद्रिमते ॥

त्रिगोत्रस्तुविप्रेंद्रऋत्विक्त्वंमेमखेभव ॥ १ ॥ ॐ अग्निमीळेपुरोहितंयज्ञस्यदेवमृत्वि
जंम् ॥ होतारंरत्नधातमम् ॥१॥ अस्मिन्रजोदर्शनशांत्याख्येकर्मणिऋत्विक्त्वेनत्वा
महंवृणे ॥ वृतोस्मि ॥ कातराक्षोयजुर्वेदस्त्रैष्टुभोब्रह्मदैवतः॥भारद्वाजस्तुविप्रेंद्रऋत्वि
क्त्वंमेमखेभव ॥ १ ॥ ॐ इषेत्वोर्जेत्वांवायवस्थदेवोवः सवितापार्प्पयतुश्रेष्ठतमायक
र्म्मणऽआप्यायध्वमघ्न्याऽइन्द्रायभागम्प्रजावतीरनमीवाऽअयक्ष्मामावस्तेनऽईं
शतमाघशंसोध्रुवाऽअस्मिन्गोपतौस्यातबह्वीर्यजमानस्यपशून्पाहि ॥ १ ॥ अस्मि
न्रजो०वृणे ॥ वृतोस्मि ॥ सामवेदस्तुपिंगाक्षोजागतः शक्रदैवतः ॥ काश्यपेयस्तु
विप्रेंद्रऋत्विक्त्वंमेमखेभव ॥ १ ॥ ॐअग्नऽआयाहिवीतयेगृणानोहव्यदातये ॥ नि

होतांसुत्सिबर्हिषि ॥ १ ॥ अस्मिन्नरजो० ॥ बृहन्नेत्रोथर्ववेदोनुष्टुभोरुद्रदैवतः ॥ वै
खानसकुलोत्पन्नोऋत्विक्त्वं० ॥ १ ॥ ॐ शन्नोदेवीरभिष्टयऽआपोभवंतुपीतये ॥ शं
य्योरभिस्रवंतुनः ॥ १ ॥ अस्मिन्नरजो० वृणे ॥ वृतोस्मि ॥ भगवन्मूर्तिसर्वज्ञसर्वध
र्मभृतांवर॥वितितेममयज्ञेस्मिञ्जपार्थेत्वामहंवृणे ॥ १ ॥ अस्मिन्नरजो० रुद्रजपार्थे
त्वामहं० ॥ वृतोस्मि ॥ ऋत्विजोगंधादिभिःसंपूजयेत् ॥ यजमानर्त्विजःपरस्परंयज्ञ
कंकणंबध्नीयुः ॥ ॐ व्रतेनदीक्षामाप्नोतिदीक्षयाप्नोतिदक्षिणाम् ॥ दक्षिणाश्रद्धामाप्नो
तिश्रद्धयासत्यमाप्यते ॥ १ ॥ एतावद्रूपंयज्ञस्ययद्देवैर्ब्रह्मणाकृतम्॥तदेतत्सर्वमाप्नोति
यज्ञेसौत्रामणीसुते ॥ १ ॥ अथ प्रार्थना॥ ब्राह्मणाःसंतुमेशस्ताःपापात्पांतुसमाहिताः॥

देवानांचैवदातारः पातारःसर्वदेहिनाम् ॥ १ ॥ जपयज्ञैस्तथाहोमैर्दानैश्चविविधैः पुनः॥
देवानांचऋषीणांचतृप्त्यर्थंयाजकाःकृताः ॥ २ ॥ येषांदेहेस्थितावेदाःपावयंतिजगत्त्र
यम् ॥ रक्षंतुसततंतेमांजपयज्ञैर्व्यवस्थिताः ॥ ३ ॥ ब्राह्मणाजंगमंतीर्थंत्रिषुलोकेषु
विश्रुतम् ॥ तेषांवाक्योदकेनैवशुध्यंतिमलिनाजनाः ॥ ४ ॥ पावनाः सर्ववर्णानांब्रा
ह्मणा ब्रह्मरूपिणः ॥ सर्वकर्मरतानित्यं वेदशास्त्रार्थकोविदाः ॥ ५ ॥ श्रोत्रियाः सत्य
वाचश्चग्रहध्यानरताः सदा ॥ यद्वाक्यामृतसंसिक्ता ऋद्धिंयांतिनरद्रुमाः ॥ ६ ॥ अं
गीकुर्वंतुकर्मैतत्कल्पद्रुमसमाशिषः ॥ यथोक्तनियमैर्युक्तामंत्रार्थेस्थिरबुद्धयः ॥ ७ ॥
यत्कृपालोचनात्सर्वाऋद्धयोवृद्धिमाप्नुयुः ॥ अस्मिन्होमेमयापूज्याः संतुमेनियमा
न्विताः ॥ ८ ॥ अक्रोधनाःशौचपराःसततंब्रह्मचारिणः ॥ ग्रहध्यानरतानित्यंप्रस
न्नमनसःसदा ॥ ९ ॥ अदुष्टभाषणाःसंतुमासंतुपरनिंदकाः ॥ ममापिनियमाह्येतेम

वंतुभवतामपि ॥ १० ॥ इतिसंप्रार्थ्यतान्ब्रूयाद्यथावत्क्रियतांविधिः ॥ ऋत्विजश्चय
थापूर्वंशक्रादीनांमखेऽभवन् ॥ ११ ॥ यूयंतथामेभवतऋत्विजोद्विजसत्तमाः ॥ अ
स्ययागस्यनिष्पत्तौभवंतोभ्यर्चितामया ॥ १२ ॥ सुप्रसन्नैःप्रकर्तव्यंशांतिकंविधि
पूर्वकम् ॥ इतिसंस्कारभास्करेब्रह्माचार्यऋत्विग्वरणम् ॥ अथदिग्रक्षणम् ॥ ततआच
म्यप्राणानायम्यदेशकालौस्मृत्वा ॥ अस्मिन्सग्रहमखरजोदर्शनशांत्याख्येकर्मणि
यजमानेनवृतोहमाचार्यकर्मकरिष्ये ॥ तदंगशरीरशुद्ध्यर्थंपुरुषसूक्तजपंकरिष्ये इ
तिपुरुषसूक्तंषोडशर्चंजपेत ॥ ततआचार्योवामहस्तेगौरसर्षपान्लाजमिश्रितान्
गृहीत्वादिग्रक्षणंकुर्यात् ॥ तत्रमंत्राः ॥ रक्षोहणंम्वलगहनंम्वैष्णवीमिदमहन्तम्वलग

---

१ भूतशुद्ध्याद्युक्तं रुद्रपद्धत्यादौ ॥ पुरुषसूक्तन्यासाः क्वचिदुक्ताः ॥

मुत्किंरामिषम्मेनिष्ट्योषममात्योंनिचखानेदमुहन्तम्वंलगमुत्किंरामिषम्मेंसमा
नोषमसंमानोनिचखानेदमुहन्तम्वंलगमुत्किंरामिषम्मेसबंन्धुठ्ठषमसबंन्धुर्निचखा
नेदमहन्तम्वंलगमुत्किंरामिषम्मैसजातोषमसंजातोनिचखानोत्कृत्याङ्किंरामि ॥ १ ॥
रक्षोहणौंवोबलगहनःप्रोक्षामिवैष्णवान्त्रंक्षोहणौंवोबलगहनोवंनयामिवैष्णवान्त्रंक्षोह
णौंवोबलगहनोवंस्तृणामिवैष्णवान्त्रंक्षोहणौंवाँबलगहनाऽउपदधामिवैष्णवीरंक्षोह
णौवाँबलगहनौपर्ठ्ठ्यूहामिवैष्णवीवैष्णवमंसिवैष्णवास्थं ॥ २ ॥ रक्षसाम्भागोसिनिरं
स्तठ्ठरक्षंऽइदमहठ्ठरक्षोभितिष्ठामीदमहठ्ठरक्षोवंबाधऽइदमहठ्ठरक्षौधमन्तमोंनयामि ॥
घृतेनंद्यावापृथिवीप्रोर्णुवाथाँवायोवेस्तोकानांमग्निराज्यंस्यवेतुस्वाहास्वाहांकृतेऽऊ

ध्वंनंभसंमारुतङ्गंच्छतम् ॥ ३ ॥ रक्षोहाविश्वचर्षणिरभियोनिमयोंहते ॥ द्रोणेसध
स्थमासंदत् ॥ ४ ॥ अपसर्पंतुतेभूतायेभूताभूमिसंस्थिताः ॥ येभूताविघ्नकर्त्तारस्ते
नश्यंतुशिवाज्ञया ॥१ ॥ अपक्रामन्तुभूतानिपिशाचाःसर्वतोदिशम् ॥ सर्वेषामविरोधे
नशांतिकर्मसमारभे ॥ २॥यदत्रसंस्थितंभूतंस्थानमाश्रित्यसर्वतः ॥ स्थानंत्यक्त्वातुत
त्सर्वंयत्रस्थंतत्रगच्छतु ॥३॥भूतप्रेतपिशाचाद्या अपक्रामंतुराक्षसाः ॥ स्थानादस्माद्व
जंत्वन्यत्स्वीकरोमिभुवंत्विमाम् ॥४॥ भूतानिराक्षसावापियत्रतिष्ठंतिकेचन॥तेसर्वेप्यप
गच्छंतुशांतिकंतुकरोम्यहम् ॥ ५॥ इतिमंत्रैरीशानादिसर्वदिक्षुविकिरेत् ॥ उदकोपस्प
र्शः॥ ततः पंचगव्यप्रकरणम् ॥ तद्यथा ॥ गायत्र्यागोमूत्रम् ॥ ॐतत्सवितु० ॥१॥गंध
द्वारामितिगोमयम् ॥ ॐगंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीम् ॥ ईश्वरींसर्वभूता

सं० नांतामिहोपह्वयेश्रियम् ॥ २ ॥ आप्यायस्वेतिक्षीरम् ॥ ॐ आप्यांयस्वसमेंतुतेविश्व भा०
॥९९॥ तंःसोमवृष्ण्यंम् ॥ भवावाजस्यसङ्गथे ॥३॥ दधिक्राव्णेतिदधि ॥ ॐ दधिक्राव्णो०
॥४॥ तेजोसीत्याज्यम् ॥ ॐतेजोसिशुक्रमंस्यमृतंमसिधामनामांसिप्प्रियन्देवानामना
धृष्टन्देवयजंमनसि ॥ ५ ॥ देवस्यत्वेतिकुशोदकम् ॥ ॐ देवस्यत्वासवितुः० ॥६॥ ॐ
इतिप्रणवेनयज्ञकाष्ठेनालोड्यआपोहिष्ठेतित्रिभिर्मन्त्रैः कर्मभूमियज्ञसंभारांश्चप्रोक्ष
येत् ॥ ततोयजमानहस्तप्रमाणंचतुरस्रंचतुरंगुलोन्नतंस्थंडिलंविरच्य तत्रभूमि
पूजनम् ॥ ॐ भूरसिभूमिरस्यदितिरसिविश्वधायाविश्वंस्यभुवनस्यधर्त्रीं ॥ पृथिवीं
यंच्छपृथिवीन्दृंहपृथिवीम्माहिंसीः ॥ ॐ भू० पृथिवीकूर्मानंतदेवताभ्योनमः ॥९९॥

इतिमंत्रेणषोडशोपचारैः संपूजयेत् ॥ अत्रविचारः ॥ समंततश्चसिद्धार्थान्क्षिपेद्र
क्षोघ्नमंत्रतः ॥ सर्वतः पंचगव्येनप्रोक्षयेद्यागमंडपम् ॥ आपोहिष्ठात्र्यृचेनैव ततः स्व
स्त्ययनं जपेदितिशांतिसारे ॥ एतेसंस्काराः भूशुद्ध्यर्थमितिग्रहयज्ञकल्पवल्ल्याम् ॥
धृत्वांगुष्ठकनिष्ठाभ्यांमूलैःसाग्रैः कुशत्रयम् ॥ तदग्रैस्तस्यरजसांपूर्वस्यामपसर्पणम् ॥
कृमिकीटपतंगाद्याविचरंतिमहीतले ॥ तेषांसंरक्षणार्थायपरिसमूहनमुच्यतइतिकु
शकंडिकायाम् ॥ रुग्णावृद्धाप्रसूताचवंध्यासंधिन्यमेध्यभुक् ॥ मृतवत्साचनैतासां
ग्राह्यंमूत्रंशकृत्पयइतिकल्पवल्ल्याम् ॥पुराइंद्रेणवज्रेण हतोवृत्रोमहासुरः॥ व्यापि
तामेदसापृथ्वीतदर्थमुपलेपनमितिकुशकंडिकायाम् ॥ रेखात्रयमुदक्संस्थंप्रागग्रंस्थं
डिलावधि ॥ अथवैतत्प्रकुर्वीतद्वादशांगुलमायतमितिकल्पवल्ल्याम् ॥ ॥ उल्लेखनं
ततःकुर्यादस्थिकंटकमेवच ॥ तेषामुद्धरणार्थायउल्लेखः कथितोबुधैः ॥ अंगुष्ठो

पकनिष्ठाभ्यामग्निकार्यंतथोत्करम् ॥ रेखाभ्यः समुपादायारत्निमात्रेनिधापयेदिति
कल्पवल्ल्याम् ॥ येभ्रमंतिपिशाचाद्याअंतरिक्षनिवासिनः ॥ तेषांप्रहरणार्थायसमुद्धः
कथितोबुधैः ॥ इतिकुशकंडिकायाम् ॥ ॥ अवोक्षणंतुकर्तव्यमुत्तानेनैवमुष्टिना ॥
तद्वदभ्युक्षणं चैवकर्त्तव्यंन्युब्जमुष्टिना॥ इतिकल्पवल्ल्याम्॥ आपोदेवगणाःसर्वेआपः
पितृगणाः स्तुताः ॥ सर्वंतदापआदाय अभ्युक्ष्येतिपुनः पुनः ॥ संपुटेनाग्निमा
नीयस्थाप्याग्नेर्दिशिकुंडतः ॥ आमक्रव्यमुजौतस्मात्त्यक्त्वाकुंडेविनिक्षिपेत् ॥ श
रावेभिन्नपात्रेवा कपालेचोल्मुकेतथा ॥ नाग्नेःप्रणयनंकार्यंव्याधिशोकभयावहम् ॥
कपालंखर्परम् ॥ उल्मुकंज्वलदग्नेरेकदेशः ॥ कुलालचक्रघटितंमृन्मयंपात्रमा
सुरम्॥तदेवहस्तघटितंस्थाल्यादिदैविकंस्मृतमितिकल्पवल्ल्याम् ॥ आनीतपात्रयोरे
वप्लावनंतत्क्षणेभवेत ॥ नोचेत्कर्तुर्मनस्तापः स्यात्संतापस्तयोरपि ॥ इतिकल्पव

ल्याम् ॥ ॥ ततः कृतांजलिः स्वस्तिनइतिमंत्रंपठेत् देवाआयांतु ॥ यातुधाना अ
पयांतु ॥ विष्णोदेवयजनंरक्षस्व ॥ ॥ तत्रस्थंडिलेपंचभूसंस्कारान्कृत्वा ॥ मूल
धृतैः ऐशानीमारभ्यभ्रामितैः प्रतीचीमारभ्यप्राक्संस्थैः निःसारितैः त्रिभिर्दर्भैः
त्रिःपरिसमुह्य ॥ गोमयेनोपलिप्यखादिरकीलेनोल्लिख्य ॥ प्रतीचीमारभ्यप्रा
गंतंत्रिरूर्ध्वरेखाकरणंयाम्यतउदक्संस्थाप्रादेशपरिमिता ॥ अनामिकांगुष्ठेनोल्लि
खितपांसूनांमृदमुद्धृत्योर्ध्वंप्रक्षिप्य ॥ उदकेनाभ्युक्ष्यन्युब्जपाणिना ॥ कांस्यपात्रे
अग्निमुपसमाधाय ॥ आनीतमग्निंस्थंडिलस्याग्नेय्यांनिधाय ॥ ॐ हुंफट्इतिमंत्रेण
क्रव्यादांशंनैर्ऋत्यांदिशिपरित्यज्य ॥ ततोग्निंदूतमितिमंत्रेणात्माभिमुखमग्निंसंस्था
पयेत् ॥ ॐ अग्निन्दूतंपुरोदधेहव्यवाहमुपब्रुवे ॥ देवाँ२ऽआसादयादिह ॥ १ ॥ अ

न्यानीतपात्रेसाक्षतोदकंनिषिच्य ॥ अग्निमुखंकृत्वाध्यायेत् ॥ ॐ चत्वारिश्रृंगात्र
योंऽअस्यपादाद्वेशीर्षेसप्तहस्तासोऽअस्य ॥ त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्यां
२ ऽआविवेश ॥ १ ॥ सप्तहस्तश्चतुःश्रृंगः सप्तजिह्वो द्विशीर्षकः ॥ त्रिपात्प्रसन्न
वदनः सुखासीनः शुचिस्मितः ॥ १ ॥ स्वाहांतुदक्षिणेपार्श्वेदेवींवामेस्वधांतथा ॥
बिभ्रद्दक्षिणहस्तैस्तुशक्तिमन्नंस्रुचं स्रुवम् ॥ २ ॥ तोमरंव्यजनंवामेघृतपात्रंचधारयन् ॥
आत्माभिमुखमासीनएवंरूपोहुताशनः ॥ ५ ॥ अग्नेवैश्वानरशांडिल्यगोत्रशांडिल्या
सितदेवलेतित्रिप्रवरान्वितभूमिर्मातावरुणःपितामेषध्वजप्राङ्मुखममसम्मुखोभव ॥
शांतिकेवरदनामाग्निंप्रतिष्ठाप्य ॐ अग्निपुरुषायनमः इतिमंत्रेणवायव्यकोणेबहिः
अग्निंषोडशोपचारैः संपूज्य प्रार्थयेत् ॥ अग्निंप्रज्वलितंवंदे जातवेदंहुताशनम् ॥

हिरण्यवर्णमनलंसमृद्धंविश्वतोमुखम् ॥ इत्यग्निंप्रतिष्ठाप्य ॥ ॥ अथऋतुशांतौवि
शेषः ॥ ततऐशान्यांयाम्यमारभ्यउदक्संस्थंपंक्तिरूपेणकलशचतुष्टयस्यमहीद्यौ
रित्यादिक्रमेण स्थापनम् ॥ तथाचनारदसंहितायाम् ॥ ऐशान्यांचतुरःकुंभान्स्थापये
द्विधिपूर्वकम् ॥ याम्यमारभ्योदक्संस्थान्पूर्णपात्रसमन्वितान् ॥ १ ॥ सूर्यंचतत्रवि
न्यस्यइंद्राणींचपुरंदरम् ॥ चतुर्थेविन्यसेद्विद्वान्प्रतिमांभौवनेश्वरीम् ॥ २ ॥ इति ॥
॥ ततो महीद्यौरिति भूमिंस्पृष्ट्वा ॥ ओषधयः समितियवान्क्षिप्त्वा ॥ आजिघ्र
मितिकलशंस्थापयेत् ॥ वरुणस्योत्तम्भनमितिजलंपूरयेत् ॥ त्वांगंधर्वाइतिगंधंप्र
क्षिपेत् ॥ याओषधीरितिसर्वौषधीः ॥ कांडात्कांडादितिदूर्वाः ॥ अश्वत्थेवइतिपं
चपल्लवान् ॥ स्योनापृथिवीतिसप्तमृदः ॥ आपोहिष्ठेतिपंचगव्यम् ॥ याः फलिनी
रितिफलम् ॥ परिवाजपतिरितिपंचरत्नानि ॥ हिरण्यगर्भेतिहिरण्यम् ॥ युवासुवासा

इतिरक्तसूत्रेणावेष्ट्य ॥ पूर्णादर्वीतिपूर्णपात्रंनिधाय ॥ तत्त्वायामीतिवरुणमावाह्यपं
चोपचारैः संपूज्यसर्वेसमुद्राइतिगंगाद्यावाहयेत् ॥ ततः सुवर्णमयचतुर्मूर्तीनां क
दलीसहितानामग्न्युत्तारणपूर्वकंप्राणप्रतिष्ठांकुर्यात् ॥ ततः साचार्योयजमानः दे
शकालौ स्मृत्वा आसांस्वर्णमयसूर्यइंद्रइंद्राणीभुवनेश्वरीकदलीमूर्तीनां घनादिदोषप
रिहारार्थमग्न्युत्तारणपूर्वकं प्राणप्रतिष्ठांकरिष्ये ॥ मूर्तिंघृतेनाभ्यज्य उपरि जलधारां
कुर्यात् ॥ अग्न्युत्तारणमंत्राः ॥ ॐ समुद्रस्यत्वावकयाग्नेपरिव्ययामसि ॥ पावकोऽ
अस्मभ्यंशिवोभव ॥ १ ॥ हिमस्यत्वाजरायुणाग्नेपरिव्ययामसि ॥ पावकोऽअस्म
भ्यंशिवोभव ॥ २ ॥ उपज्मन्नुपवेतसेवतरनदीष्वा ॥ अग्नेपित्तमपामसिमण्डूकि
ताभिरागहिसेमन्नोयज्ञम्पावकवर्णंशिवंकृधि ॥ ३ ॥ अपामिदन्न्ययनंसमुद्र

स्यंनिवेशनम् ॥ अन्याँस्तेऽअस्मत्तपन्तुहेतयंःपावकोऽअस्मभ्यंठंशिवोभव ॥ ४ ॥
अग्नेपावकरोचिषामन्द्रयादेवजिह्वया ॥ आदेवान्वंक्षियक्षिच ॥ ५ ॥ सनःपावक
दीदिवोग्नेदेवाँ २ऽइहावह ॥ उपयज्ञठंहविश्चनः ॥ ६ ॥ पावकयायश्चितयन्त्याकृ
पाक्षामंन्नरुरुचऽउषसोनभानुना ॥ तूर्वन्नयामन्नेतंशस्यनूरणऽआयोघृणेनततृषाणो
ऽअजरः ॥ ७ ॥ नमस्तेहरसेशोचिषेनमस्तेऽअस्त्वर्चिषे ॥ अन्याँस्तेऽअस्मत्तपंतुहे
तयंःपावकोऽअस्मभ्यठंशिवोभव ॥ ८ ॥ नृषदेवेड्प्सुषदेवेड्बर्हिषदेवेड्वनसदेवेड्स्वर्वि
देवेट्॥९॥ येदेवादेवानांयज्ञियायज्ञियानाठंसंवत्सरीणमुपभागमसंते ॥ अहुतादोहवि
षोयज्ञेऽअस्मिन्त्स्वयंपिबन्तुमधुंनोघृतस्य ॥ १० ॥ येदेवादेवेष्वधिदेवत्वमायन्येब्र

ह्मणः पुरऽएतारोऽअस्य ॥ येभ्योनऽऋतेपवतेधामकिञ्चननतेदिवोनपृथिव्याऽअ
धिस्नुषु ॥ १२ ॥ प्राणदाऽअपानदाव्यानदावर्च्चोदावरिवोदाः॥अन्याँस्तेऽअस्मत्तपन्तु
हेतयः पावकोऽअस्मभ्यंशिवोभव ॥ १३ ॥ ॥ ततःप्राणप्रतिष्ठांकुर्यात् ॥ॐ
आँह्रींक्रोंयंरंलंवंशंषंसंहंक्षंहंसःसोहम् ॥ आसांसूर्यइंद्रइंद्राणीभुवनेश्वरीकदलीमू
र्तीनांप्राणाइहप्राणाः पुनः ॐ आंह्रींक्रोंयंरंलंवंशंषंसंहंक्षंहंसः सोहम् ॥ आसांसूर्य
इंद्र०मूर्तीनांजीवाइहस्थिताः ॥ पुनः ॐ आंह्रींक्रोंयंरंलंवंशंषंसंहंक्षंहंसः सोहम् ॥
आसांसूर्यइं० मूर्तीनां सर्वेंद्रियाणि वाङ्मनस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणपाणिपादपा
यूपस्थानिइहैवागत्यसुखंचिरंतिष्ठंतुस्वाहा ॥ ॐ मनोजूतिर्ज्जुषता० ॥ एषवैप्र
ति० ॥ २ ॥ इतिप्रतिष्ठाप्य॥वृत्रस्यासीतिनेत्रोन्मीलनम्॥ ॐ वृत्रस्यासिकनीनकश्चक्षु

ह्रांऽअंमिचक्षुर्म्मेदेहि ॥ गंधादिपंचोपचारान्दत्त्वासंस्कारसिद्धियेषोडशप्रणवावृत्तिं
कुर्यात् ॥ ॐ अनेनआसांसूर्यादिदेवतामूर्तीनांगर्भाधानादिषोडशसंस्कारान्संपा
दयामीतिवदेत् ॥ इतिप्राणप्रतिष्ठा ॥ अथसूर्याद्यावाहनम् ॥ ॥ एह्येहिपद्मासनप
द्मपाणेसुरक्तसिंदूरसमानवर्ण ॥ सप्ताश्वरक्तांबरसूर्यशीघ्रंगृहाणपूजांभगवन्नमस्ते
ॐ आकृष्णेनरजंसावर्त० १ ॥ ॐ भूर्भुवः स्वः सूर्यइहागच्छइहतिष्ठ ॥ ॐ सूर्यायन
मः सूर्यमावाहयामि ॥ ॥ अथेंद्रध्यानम् ॥ एह्येहिनानाभरणप्रियेंद्रप्राचीपतेव
ज्रधरामरेश ॥ ऐरावतारूढशचीसखात्रगृहाणपूजांभगवन्नमस्ते ॥ २ ॥ ॐत्रातारमि
द्रम० ॥ २ ॥ ॐ भू० इंद्रइहा० ॥ ॥ अथेंद्राणीध्यानम् ॥एह्येहिदेवीश्वरिहेमवर्णेवि
शालपंकेरुहलोलनेत्रे ॥ अंभोजहस्तेशचिदिव्यरूपेगृहाणपूजांममयज्ञसिद्ध्यै ॥ ३ ॥

ॐ इंद्रंदेवीतिमंत्रेण ॥ इन्दुन्देवीर्विशोमरुतोनुवर्त्मानोभवन्यथेन्द्रन्दैवीर्विशो मरुतोनुवर्त्मानोभवन् ॥ एवमिमंयजमानन्दैवींश्चविशोमानुषीश्चानुवर्त्मानोभव न्तु ॥ ३ ॥ ॐ भू० इंद्राणिइ० ॥ अथभुवनेश्वरीध्यानम् ॥ एह्येहिदुर्गेदुरितौघनाशि निप्रचंडदैत्यौघविनाशकारिणि ॥ उमेमहेशार्धशरीरधारिणिस्थिराभवत्वंमम यज्ञकर्मणि ॥ ४ ॥ ॐश्रीश्चंतेल० ॥ ४ ॥ ॐ भू० भुवनेश्वरिइहा० भुवनेश्व० भुवने श्वरीमावाहयामि ॥ ॥ ततआकृष्णेत्यादिचतुर्मंत्रैर्नाममंत्रैर्वासर्वाएकतंत्रेणषोड शोपचारैः संपूज्यप्रार्थयेत् ॥ सूर्यप्रार्थना ॥ नमोनमस्तेसुरसेवितायसहस्रनेत्रायसु मंडलाय ॥ सिंदूरवर्णायसुपंकजायसुवर्णवस्त्राभरणायतुभ्यम् ॥ १ ॥ क्षमापनम् ॥ स प्तसप्तिसमारूढपद्महस्तसुमंगल ॥ क्षमांकुरुदयालोत्वंग्रहराजनमोस्तुते ॥ २ ॥

॥ अथेंद्रप्रार्थना ॥ पुरंदरनमस्तेस्तुवज्रहस्तनमोस्तुते ॥ शचीसखनमस्तेस्तुमेघवा
हनमोस्तुते ॥ १ ॥ क्षमापनम् ॥ देवराजगजारूढपुरंदरशतक्रतो ॥ शचीसखम
हाबाहोवांछितार्थप्रदोभव ॥ २ ॥ अथेंद्राणीप्रार्थना ॥ त्वांनमामिगजारूढां
शचींकमललोचनाम् ॥ सुरराजप्रियेदेविधृतसंतानमंजरीम् ॥ १ ॥ क्षमापनम् ॥
अंभोजहस्तेवरदेकमलायतलोचने ॥ सुरराजप्रियेदेविप्रसीदपरमेश्वरि ॥ २ ॥
अथ भुवनेश्वरीप्रार्थना ॥ नमोस्तुदेव्यैसुरपूजितायैविशालपंकेरुहलोचनायै ॥ न
गाधिराजप्रियकन्यकायैनमोस्तुतस्यैहरवल्लभायै ॥ १ ॥ क्षमापनम् ॥ ॥ दुर्गेदेविमहा
भागेमहादेवप्रियेनघे ॥ नीलोत्पलमुखेवंद्येममपीडांनिराकुरु ॥ २ ॥ इतिप्रार्थ्यअनया
पूजया श्रीसूर्येंद्रेंद्राणीभुवनेश्वरीदेवताः प्रीयंताम् ॥ ॥ वह्नेरुत्तरतोविद्वान्कदलीं
स्थापयेच्छुभाम् ॥ हेम्नः पंचपलाढ्यांचपलस्यापिसुलक्षणाम् ॥१॥ वंशपात्रेप्रतिष्ठाप्य

तंदुलानाढकोपरि ॥ कदल्यैइतिमंत्रेणपूजयित्वाप्रणम्यच ॥ दद्यात्तांद्विजवर्याय स
र्वदोषापनुत्तये ॥ २ ॥ ततोग्नेरुत्तरतः प्रसारितरक्तवस्त्रेवंशपात्रेआढकपरिमिततंदुल
राशिंकृत्वा तदुपरिहैमींकदलींसंस्थाप्य ॥ श्रीसूर्यदेवतायैकदल्यैनमइतिमंत्रेणषोड
शोपचारैः संपूजयेत् ॥ दानसमयेअस्यादानंकार्यमिति ॥ ॥ ततोजपार्थंकृतवरणो
ब्राह्मणः सूर्याद्यावाहितमूर्तिसमीपेउपविश्यकलशंस्पृष्ट्वाविभ्राडित्यनुवाकंजप्त्वाअ
प्रतिरथं श्रीसूक्तमइंद्राणीभुवनेश्वरीकलशद्वयेद्विवारमथवारुद्रैकादशनींजपेत् ॥ इत्थं
नारदोक्तऋतुशांतिविशेषः ॥ अथग्रहमंडलदेवतास्थापनम् ॥ उक्तप्रकारेणग्रहपीठं
विरचयेत् ॥ ॥ शास्त्रार्थः ॥ ग्रहनामानि ॥ स्कांदे ॥ जन्मभूर्गोत्रमग्निश्चवर्णस्था
नमुखानिच ॥ योऽज्ञात्वाकुरुतेशांतिंग्रहास्तेनावमानिताः ॥ १ ॥ रविः सोमोमहीपुत्रो
बुधोजीवोथभार्गवः ॥ शनैश्चरोराहुकेतू नव खेटाः प्रकीर्तिताः ॥ १ ॥ वर्णाः ॥ रविभौमौ

रक्तवर्णौश्वेतश्चंद्रस्तुभार्गवः ॥ बुधजीवौपीतवर्णौ कृष्णौमंदविधुंतुदौ ॥ धूम्रवर्णा
केतवश्चग्रहवर्णाःप्रकीर्तिताः ॥ प्रतिमाः ॥ रविभौमौताम्रमयौ राजतौसोमभार्ग
वौ ॥ बुधजीवौस्वर्णमयौ लौहौमंदविधुंतुदौ ॥ केतुःकांस्योथवासीसःप्रतिमाधातवः
स्मृताः ॥ ॥ मात्स्ये ॥ पद्मासनः पद्मकरः पद्मगर्भसमद्युतिः ॥ सप्ताश्वरथसंस्थश्च
द्विभुजःस्यात्सदारविः ॥ १ ॥ श्वेतःश्वेतांबरधरोदशाश्वःश्वेतवाहनः ॥ गदापाणिर्द्वि
बाहुश्चकर्तव्योवरदःशशी ॥ २ ॥ रक्तमाल्यांबरधरःशक्तिशूलगदाधरः ॥ चतुर्मुखो
मेषगमोवरदःस्याद्धरासुतः ॥ ३ ॥ पीतमाल्यांबरधरः कर्णिकारसमद्युतिः ॥ खड्गचर्म
गदापाणिःसिंहस्थोवरदोबुधः ॥ ४ ॥ देवदैत्यगुरूतद्वत्पीतश्वेतौचतुर्भुजौ ॥ दंडिनौ
वरदौकार्व्यौसाक्षसूत्रकमंडलू ॥ ५ ॥ इंद्रनीलद्युतिःशूलीवरदोगृध्रवाहनः ॥ बाण
बाणासनधरःकर्तव्योर्कसुतःसदा ॥ ६ ॥ करालवदनः खड्गचर्मशूलीवरप्रदः ॥ नी

लसिंहासनस्थश्च राहुश्चात्रप्रशस्यते ॥ ७॥ धूम्राद्द्विबाहवःसर्वे गदिताविकृताननाः ॥
गृध्रासनगतानित्यंकेतवःस्युर्वरप्रदाः ॥ ८ ॥ सर्वेकिरीटिनःकार्याग्रहालोकहिताव
हाः ॥ स्वांगुलेनोच्छ्रिताः सर्वेशतमष्टोत्तरावधि ॥ ९ ॥ देशाः ॥ उत्पन्नोर्कःकलिंगेषु
यमुनायांचचंद्रमाः ॥ अंगारकस्त्ववंत्यांचमगधायांहिमांशुजः ॥ १ ॥ सैंधवेषुगुरुर्जा
तःशुक्रोभोजकटेतथा ॥ शनैश्चरस्तुसौराष्ट्रेराहुर्वैराठिनापुरे ॥ अंतर्वेद्यांतथाकेतुरित्ये
ताग्रहभूमयः ॥ गोत्राणि ॥ आदित्यःकाश्यपेयस्तुआत्रेयश्चंद्रमाभवेत् ॥ भारद्वा
जोभवेद्भौमस्तथात्रेयश्चसोमजः ॥ गुरुश्चैवांगिरोगोत्रःशुक्रोवैभार्गवस्तथा ॥ शनिःका
श्यपएवाथराहुःपैठीनसःस्मृतः ॥ केतवोजैमिनीयाश्चग्रहगोत्राणिकीर्तयेत् ॥ सका
रेणतुवक्तव्यं गोत्रंसर्वत्रधीमता ॥ सकारः कुतुपोज्ञेयस्तस्माद्यत्नेनतंवदेत् ॥ ॥ स्था
नानिस्कांदे ॥ वृत्तमंडलमादित्येचतुरस्रंनिशाकरे ॥ महीपुत्रेत्रिकोणंतुबुधेवैबाणस

न्निभम् ॥ गुरौतुपट्टिशाकारंपंचकोणंतुभार्गवे ॥ धनुर्निभंशनौज्ञेयंशूर्पाकारंतुराहवे॥के
तवेतुध्वजाकारंमंडलानिप्रकल्पयेत ॥ मंडलव्यासश्चग्रहरत्नावल्याम् ॥ मंडलव्या
सःकथितःसूर्यस्यद्वादशांगुलः ॥ चतुरंगुलःसोमस्यत्र्यंगुलोलोहितस्यच ॥ चतुरंगु
लःसौम्यस्यगुरोश्चैवषडंगुलः ॥ नवांगुलस्तुशुक्रस्यअर्कपुत्रस्यद्व्यंगुलः ॥ द्वादशांगु
लोराहोश्चकेतोश्चैवषडंगुलइति ॥ मध्येतुभास्करंविद्याच्छशिनंपूर्वदक्षिणे ॥ दक्षिणे
लोहितंविद्याद्बुधंपूर्वोत्तरेपिच ॥ उत्तरेतुगुरुंविद्याद्भार्गवंपूर्वतोन्यसेत् ॥ शनिंपश्चिमतः
स्थाप्यनैर्ऋत्येराहुमेवच ॥ केतुंवायव्यकोणेचग्रहस्थानानिकीर्तयेत् ॥ दिङ्मुखानिप्र
तिष्ठाकल्पे ॥ शुक्रार्कौप्राङ्मुखौज्ञेयौगुरुसौम्यावुदङ्मुखौ॥प्रत्यङ्मुखौसोमशनीशेषा
दक्षिणतोमुखाः॥ एतादृक्दिङ्मुखाः खेटाःस्वस्वलोकेनिवासिनः॥यजमानात्माभिमु
खाःसर्वेसंस्थापयंतिच ॥ पूज्यपूजकयोर्मध्येयत्रप्राचींप्रकल्पयेत् ॥ तत्रसम्मुखः सं

स्थाप्यइतिन्यायोयथातथमिति ॥ मदनरत्नसंग्रहे ॥ ॥ ग्रहस्यदक्षिणेभागेस्थापये
दधिदेवताः ॥ ग्रहस्यवामपार्श्वेतुस्थाप्याः प्रत्यधिदेवताः ॥ अधिदेवतानामानि ॥
ईश्वरंचउमांचैवस्कंदंविष्णुंतथैवच ॥ब्रह्माणमिंद्रं तु यमंकालंचैवतुअष्टमम् ॥ चित्रगुप्तं
तुनवमंकीर्तिताअधिदेवताः ॥ ॥ प्रत्यधिदेवतानामानि ॥ अग्निश्चैवतथाआपःपृथि
वीविष्णुरेवच ॥ इंद्रश्चैवतथैंद्राणीप्रजापतिस्तथैवच ॥ सर्पश्चैवतुब्रह्माचएताःप्रत्य
धिदेवताः ॥ ॥ संग्रहे ॥ राहुमंदादिनेशानामुत्तरस्यांयथाक्रमम् ॥ गणेशदुर्गावायुश्च
राहुकेत्वोश्चदक्षिणे ॥ आकाशमश्विनौ देवौ स्थापयित्वाक्रमेणतु॥वास्तोष्पतिंक्षेत्रपा
लंस्थाप्यगुरूत्तरेषुच ॥ एताः सदैवसंस्थाप्याःकर्मसाद्गुण्यदेवताः ॥ इंद्राग्नियमनैर्ऋ
त्यावरुणोवायुरेवच ॥ कुबेरेशानावित्यष्टौप्रागादिमादिशाधिपाः ॥ ब्रह्माणंचततः ॥६३॥
स्थाप्यपूर्वेशान्योस्तुमध्यमे ॥ प्रतीचीनैर्ऋत्योर्मध्येह्यनंतंस्थापयेदिति ॥ यथावर्णं

प्रदेयानिवासांसिकुसुमानिच ॥ नवग्रहेभ्योदेयानिसुगंधसहितान्यपि ॥ गंधाः ॥
आदित्यभूमिपुत्रार्थंदापयेद्रक्तचंदनम् ॥ चंदनंसितवर्णंचप्रदद्यात्सोमभार्गवे ॥ कुं
कुमेनचसंयुक्तंचंदनंजीवसौम्ययोः ॥ अगुरोश्चंदनंदद्याद्राहुकेत्वर्कजेषुच ॥ ॥ धूपः ॥
रवेःकुंदरुकंधूपंशशिनस्तुघृताक्षताः ॥ भौमेसर्जरसंचैवअगरुम्मबुधेस्मृतम् ॥ सिल्ह
कंगुरवेदद्याच्छुक्रेबिल्वागरुंतथा ॥ गुग्गुलंमंदचारेतुलाक्षाराहोश्चकेतवे ॥ नैवेद्यम् ॥
गुडौदनंरवेर्दद्यात्सोमायघृतपायसम् ॥ लोहितायममूरान्नंबुधायक्षीरषाष्टिकम्॥दध्यो
दनंगुरोर्दद्याच्छुक्रायचघृतौदनम्॥ मिश्रितंतिलमाषान्नंनिवेद्यचशनैश्चरम् ॥ राहोर्मा
षौदनंदद्यात्केतोश्चित्रौदनंतथा ॥ ॥ हविर्द्रव्यम् ॥ तिलाज्यचरुभिर्द्रव्यंसमिधांचय
थातथम् ॥ ग्रहादीनांचसर्वेषांहविर्द्रव्यमुदीरितम् ॥ ॥ समिधस्तु ॥ अर्कःपलाशख
दिरावपामार्गोंथपिप्पलः ॥ औदुंबरःशमीदूर्वाःकुशाश्चसमिधःक्रमादिति ॥ ॥ हे

माद्रौभविष्योत्तरेसंग्रहेच ॥ एकैकस्यावाहनादिपुष्पांजल्यंतपूजनम् ॥ समाप्यचत
तोन्यस्यइतिकांडोनुकीर्तितः ॥ सर्वेषामेकतन्त्रेणख्यादीनांयथाविधि ॥ पूजनंतुप्र
कर्तव्यंपदार्थोनुप्रकीर्तितः ॥ गणाधिपतयेदेयात्प्रथमांतुवराहुतिम् ॥ अन्यथाविफ
लंविप्रभवतीहनसंशयः ॥ आघारावाज्यभागौतुआज्येनैवयथाक्रमम् ॥ एकैकस्याहु
तिंहुत्वाअन्यहोमस्ततःपरम्॥केवलंग्रहयज्ञश्चसर्वशांत्यादिकेषुच॥प्रथमोयुतहोमश्च
द्वितीयोलक्षहोमकः ॥ तृतीयःकोटिहोमःस्यात्त्रिविधोग्रहयज्ञकः ॥ अष्टोत्तरसहस्रं
तुशतमष्टाधिकंतथा ॥ अष्टाविंशतिसंख्याकैरेकैकस्यतुहोमयेत् ॥ कोटिलक्षायुत
मखेरव्यादीनांयथाक्रमम् ॥ प्रणवादिश्चतल्लिंगःस्वाहाकारांतएवच॥जुहुयात्सर्वदेवा
नांवेद्यांयेचोपकल्पिताः ॥ ॥ नृसिंहपुराणे ॥ ततोव्याहृतिभिःपश्चाज्जुहुयाच्चति

लादिकम् ॥ यावत्प्रपूर्यतेसंख्यालक्षंवाकोटिरेववा ॥ वाशब्देन अयुतमपिगृह्णीया
त् ॥ तिलाःकृष्णाघृताभ्यक्ताःकिंचिद्यवसमन्विताः ॥ होमेव्याहृतिभिश्चैवसर्वस्तत्रवि
धीयतेइतिशांतिरत्ने ॥ संग्रहे ॥ कोटावधिप्रत्यधेश्चशतमष्टाधिकाहुतिः ॥ विना
यकादिदिक्पालान्ताष्टाविंशतिसंख्यया ॥ १ ॥ लक्षेअष्टाविंशतिश्चअधिप्रत्यधिके
षुच ॥ विनायकादिदिक्पालान्ताष्टाष्टसंख्ययाहुतिः ॥ २ ॥ अयुतेष्टाष्टसंख्याकैर
धिप्रत्यधिकेषुच ॥ विनायकादिदिक्पालांतानांहुत्वाचतुश्चतुः ॥ ३ ॥ केवलेअधिप्रत्य
धिहुत्वाचैवचतुश्चतुः ॥ विनायकादिदिक्पालाद्वेद्वेसंख्याहुतीहुनेदिति ॥ ४ ॥ शौन
कः ॥ अंतेपूर्णाहुतिंहुत्वासमुद्राद्रूर्मिसूक्ततः ॥ सततामाज्यधारांतांपूर्णाहुतिमथाचरेत्
मात्स्येग्निपुराणेच ॥ मूर्धानंदिवमंत्रेणावशेषघृतधारया ॥ दद्यादुत्थायपूर्णांवैनो
पविश्यकदाचन ॥ इतिकातीयानांचावश्यंशांतिमयूखे ॥ शुक्रज्योत्यनुवाकेनघृतेना

च्छिन्नधारया ॥ होमांतेसर्वकल्याणीदेयापूर्णाहुतिः सदेतिग्रहयज्ञकल्पवल्ल्याम् ॥ पू
र्णाहुतिरन्याज्येनस्थाल्याज्येनकदाचनेतिग्रहयज्ञकल्पवल्ल्याम् ॥ कारिकायाम् ॥ अ
न्यदाज्यंसमानीयाधिश्रितेस्नुक्स्रुवावुभौ ॥ तौप्रतप्यचसंमार्गकुशैःसंमृज्यसिंचयेत्
पुनःप्रतप्ययाम्यायांनिदध्यात्स्नुक्स्रुवौचतौ ॥ आज्यमुद्वास्यचोत्पूयावेक्ष्यापद्रव्य
निष्कृतिः ॥ चतुर्गृहीतमाज्यंतद्गृहीत्वास्नुचिमध्यतः ॥ वस्त्रतांबूलपूगादिफलपुष्पसम
न्विताम् ॥ अधोमुखस्रुवच्छन्नांगंधाक्षतैरलंकृताम् ॥ पूर्वंदक्षिणहस्तेनपश्चाद्वामेनपाणि
ना ॥ अग्रमध्यममध्यस्थंमूलमध्यममध्यतः ॥ पाणिद्वयेनहोतव्यंपाणिरेकोनिर
र्थकः ॥ गृहीत्वाथस्रुवंकर्ताशंखसन्निभमुद्रया ॥ वामस्तनांतमानीयनाभिमूलात्स्रुचं
ततः ॥ सप्ततेत्यनुवाकांतेमखेसूक्तान्विशेषतः ॥ श्रावयेत्सूक्तमाग्नेयंवैष्णवंरौद्रमैंद
वम् ॥ महावैश्वानरंचापिचमकानिततःपठेत् ॥ समास्त्वेतिनवर्चमाग्नेयंसूक्तम ॥ वि

ष्णोर्नुकंवीर्याणिइतिषडर्चंवैष्णवंसूक्तम्॥ नमस्तेइतिषोडशर्चंरौद्रंसूक्तम् ॥ आप्यायस्वे
तिषडर्चमैंदवम् महावैश्वानरम् ॥ चमकंवाजश्चेत्यारभ्यसप्तविंशतिमृचामितिका
शीदीक्षितपद्धतौ ॥ ऐशान्यामाहरेद्धस्मस्रुचावाथस्रुवेणवा ॥ अंकनंकारयेत्तेनशि
रःकंठांसकेषुचेतिशांतिकमलाकरे ॥ ततोग्रहपीठमध्येसूर्यमंडलस्याग्रेउदक्संस्थपं
क्तिरूपेणगणपतिंदुर्गांक्षेत्रपालंचावाह्य ॥ ॥ तत्रमंत्राः ॥ ॐ गणानांन्त्वा० ॥ १ ॥
ॐगणपतेइहागच्छइहतिष्ठॐगणपतयेनमःगणपतिमावाहयामि ॥ ॐ अम्बेऽअम्बि
केम्बालिकेनमानयतिकश्चन ॥ ससस्त्यश्वकःसुभद्रिकाङ्काम्पीलवासिनीम् ॥ २ ॥
ॐभूर्भुव०दुर्गेइ०दुर्गायै० दुर्गामा० ॥ ॐ नहिस्पशमविदन्नन्यमस्माद्वैश्वानरात्पुरऽ
एतारमग्नेः ॥ एमैनमवृधन्नमृताऽअमर्त्यम्वैश्वानरंक्षैत्रंजित्यायदेवाः ॥ ३ ॥

ॐ भूर्भुवःस्वःक्षेत्राधिपतेइहागच्छइहतिष्ठक्षेत्राधिपतयेनमःक्षेत्राधिपतिमा० ॥ ॥
तत्रपीठमध्ये वर्तुलेद्वादशांगुलेमंडलेप्राङ्मुखंसूर्यंरक्तपुष्पाक्षतैरावाह्य ॥ ॐ आकृ
ष्णेनरजसावर्तमानोनिवेशयन्नमृतम्मर्त्यंच ॥ हिरण्ययेनसवितारथेनादेवोयातिभु
वनानिपश्यन् ॥ १ ॥ ॐ भू०कलिंगदेशोद्भवकाश्यपसगोत्ररक्तवर्णभोः सूर्यइहाग
च्छइहतिष्ठॐसूर्यायनमःसूर्यमावाहयामि ॥ तत आग्नेय्यांदिशिचतुरस्रेचतुर्विंश
त्यंगुलेमंडलेप्रत्यङ्मुखंसोमंशुक्लपुष्पाक्षतैः सह ॥ ॐ इमन्देवाऽअसपत्नꣳसुवध्व
म्महतेक्षत्रायमहतेज्यैष्ठ्यायमहतेजानराज्यायेन्द्रस्येन्द्रियाय ॥ इममुमुष्यपुत्रमु

१ प्रणवंत्वादितःकुर्याद्भूर्भुवःस्वस्ततःपरम् ॥ चतुर्थ्यानामसंयुक्तंनमस्कारांतयोजितम् ॥ एवंमंत्रः
समाख्यातोग्रहपूजाविधायकः ॥ अनेनावाहनंकुर्यादनेनैवविसर्जनमितिशांतिमयूखे ॥

मुष्यैपुत्रमुस्यैविशऽएषवोमीराजासोमोस्माकंम्ब्राह्मणानाथ्ठंराजा ॥ २ ॥ ॐ भू० यमुनातीरोद्भवआत्रेयसगोत्रशुक्लवर्णभोसोमइहागच्छ इ० ॥ ततोदक्षिणस्यांदिशि त्रिकोणेत्र्यंगुलेमंडले दक्षिणाभिमुखंभौमंरक्तपुष्पाक्षतैःसह ॥ ॐअग्निर्म्मूर्धादिवः ककुत्पतिःपृथिव्याऽअयम ॥ अपाथ्ठंरेताथ्ठंसिजिन्वति ॥ ३ ॥ ॐ भू० अवंतिदेशोद्भवभारद्वाजसगोत्ररक्तवर्णभौम इहा० ॥ ततश्चऐशान्यांदिशिबाणाकारेचतुरंगुलेमंडलेउदङ्मुखंबुधंपीतपुष्पाक्षतैःसह ॥ ॐ उद्बुध्यस्वाग्नेप्रतिंजागृहित्वमिष्टापूर्ते सर्ठ्ठसृजेथामयञ्च ॥ अस्मिन्त्सधस्थेऽअध्युत्तरस्मिन्विश्वेदेवायजमानश्चसीदत ॥ ॥ ४ ॥ ॐ भू० मगधदेशोद्भवआत्रेयसगोत्रपीतवर्णभोबुधइ० ॥ तत उत्तरस्यांदिशि

लंबदीर्घचतुरस्रेपट्टाकारेषडंगुलेमंडलेबृहस्पतिंपीतपुष्पाक्षतैः सह ॥ ॐ बृहस्पतेऽअ
तियदर्य्योऽअर्हाद्युमद्विभातिक्रतुमज्जनेषु ॥ यद्दीदयच्छवसऽऋतप्प्रजाततदस्मासु
द्रविणन्धेहिचित्रम्म ॥ ५ ॥ ॐ भू० सिंधुदेशोद्भवआंगिरसगोत्रपीतवर्णभोबृहस्पते
इ० ॥ततःपूर्वस्यांदिशिपंचकोणेनवांगुलेमंडलेप्राङ्मुखंशुक्रं शुक्लपुष्पाक्षतैः सह ॥ ॐ
अन्नात्परिस्रुतोरसम्ब्रह्मणाव्व्यपिबत्क्षत्रम्पयः सोमम्प्रजापतिः ॥ ऋतेनसत्यमिन्द्रि
यम्विपानंशुक्रमन्धसऽइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु ॥ ६ ॥ ॐ भू० भोजक
टदेशोद्भवभार्गवसगोत्रशुक्लवर्णभोशुक्र इ० ॥ ततःपश्चिमायांदिशिधनुराकारेद्व्यंगु
लेमंडलेप्रत्यङ्मुखंशनिंकृष्णपुष्पाक्षतैःसह ॥ ॐ शन्नोदेवीरभिष्टयऽआपोभवन्तुपी

तयें ॥ शंन्नोयोरभिस्त्रवन्तुनः ॥ ७ ॥ ॐ भू०सौराष्ट्रदेशोद्भवकाश्यपसगोत्रकृष्णवर्ण
भोशनैश्चरइ० ॥ ततोनैर्ऋत्यांदिशिशूर्पाकारेद्वादशांगुलेमं०दक्षिणाभिमुखंराहुंकृ
ष्णपुष्पाक्षतैःसह ॥ ॐ कयानश्चित्रऽआभुवदूतीसदावृधःसखा ॥ कयाशचिष्ठ
यावृता ॥ ८ ॥ ॐ भू०राठिनापुरोद्भवपैठिनसगोत्रकृष्णवर्णभोराहोइ० ॥ ततोवा
यव्यांदिशिध्वजाकारेषडंगुलेमंडलेदक्षिणाभिमुखंकेतुंधूम्रपुष्पाक्षतैः सह ॥ ॐ केतुं
कृण्वन्नकुतवेपेशोमर्य्याऽअपेशसे ॥ समुषद्भिरजायथाः ॥ ९ ॥ ॐ भू०अंतर्वेदिस
मुद्भवजैमिनिसगोत्रधूम्रवर्णभोकेतोइ० ॥ ततोधिदेवतास्थापनंग्रहदक्षिणपार्श्वे ॥
ॐत्र्यम्बकंयजामहेसुगन्धिम्पुष्टिवर्द्धनम् ॥ उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीय

मामृतांत्॥ १ ॥ सूर्यदक्षिणपार्श्वे ॥ ॐ भू० ईश्वरइहागच्छ इह तिष्ठईश्वरायनमः ई
श्वरमावाहयामि ॥ एवंसर्वत्र ॥ ॐ श्रीश्चतेलक्ष्मी० ॥ २॥ सोमदक्षिणपार्श्वे ॥ ॐ
भू० उमे इ० उमायै० उमामा० ॥ ॐ यदक्रन्दःप्रथमञ्जायमानऽउद्यन्त्समुद्रादुत
वापुरीषात् ॥ श्येनस्यपक्षाहरिणस्यबाहूऽउपस्तुत्यम्महिजातन्तेऽअर्वन्॥ ३ ॥ भौ
मदक्षिणपार्श्वे ॥ ॐ भू० स्कंदइहा० स्कंदाय० स्कंदमा० ॥ ॐ विष्णोरराटमसि
विष्णोःश्नप्त्रेस्थोविष्णोःस्यूरसिविष्णोर्ध्रुवोसि ॥ वैष्णवमसिविष्णवेत्वा ॥ ४ ॥
बुधदक्षिणपार्श्वे॥ ॐ भू० विष्णोइहागच्छइहतिष्ठविष्णवे० ॥ ॐ आब्रह्मन्ब्राह्मणोब्र
ह्मवर्चसीजायतामाराष्ट्रेराजन्यःशूरऽइषव्व्योतिव्याधीमहारथोजायतान्दोग्ध्रीधेनु ॥६८॥

वोंदानुज्ञानाशुःसप्तिःपुरंन्धिर्योषाजिष्णूरथेष्टाः ॥ सभेयोयुवास्ययजमानस्यवीरो
जायतान्निकामेनिकामेनःपर्जन्योवर्षतुफलवत्योनऽओषधयःपच्यन्तांयोगक्षेमो
नःकल्पताम् ॥ ५ ॥ गुरुदक्षिणपार्श्वेॐभू० ब्रह्मन्नइ० ब्रह्मणे न० ब्रह्माणमा०॥ ॐसु
योषाऽइन्द्रसगणोमरुद्भिःसोमम्पिबवृत्रहाशूरविद्वान् ॥ जहिशत्रूँ १ रपमृधोनुदस्वा
थाभयङ्कृणुहिविश्वतोनः ॥ ६ ॥ शुक्रदक्षिणपार्श्वे ॥ ॐ भू० इंद्रइहा० इंद्राय० इंद्र
मा० ॐ यमायत्वांगिरस्वतोपितृमतेस्वाहा ॥ स्वाहाघर्मायस्वाहाघर्म्मः पित्रे ॥ ७ ॥
शनिदक्षिणपार्श्वेॐयमइ०इहति०यमाय० यममा० ॥ ॐकार्षिरसिसमुद्रस्यत्वाक्षि
त्याऽउन्नयामि ॥ समापोऽअद्भिरग्मतसमोषधीभिरोषधीः ॥ ८ ॥ राहुदक्षिणपा

श्वें ॥ ॐ भू० कालइ० इहति० का० कालमा० ॥ ॐ चित्रांवसोस्वस्तितेंपारमंशीय ॥
केतुदक्षि० ॥ ॐ भू० चि० इ० इ० चि० चित्रगुप्तमा० ॥ ततःप्रत्यधिदे० स्थाप० ग्रहवामपा
श्वेंॐअग्निंदूतंपुरोदधेहव्यवाहमुपब्रुवे ॥ देवाँ२ऽआसादयादिह ॥ सु० वामपा० भू० अ०
अग्निं अ० अग्निम् ॥ ॐ आपोहि० ॥२॥ सोमवामपा० ॐभू० आ० इ० इ० अद्भयो० आ०
आ० ॥ ॐस्योनापृं० ॥ ३ ॥ भौमवामपार्श्वे ॥ ॐभू० पृथिवीइ० इ० पृ० पृ० पृथि
वीमावाहयामि॥ॐइदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपाᳫंसुरेस्वाहा ॥
॥ ४ ॥ बुधवामपार्श्वे ॥ ॐविष्णोइहागच्छइ० वि० विष्णुमा० ॥ ॐत्रातारमिन्द्रमविता
रमिन्द्रᳫंहवेहवेसुहवᳫंशूरमिन्द्रम् ॥ ह्वयामिशक्रम्पुरुहूतमिन्द्रᳫंस्वस्तिनोमघवाधा

त्विन्द्रः॥५॥ गुरुवामपार्श्वे ॥ ॐभू०इन्द्रइहा०इ०इं०इन्द्रं० ॐ अदित्यैरास्नासीन्द्रा
ण्याऽउष्णीषः पूषासिधर्म्मायदीष्व ॥ ६ ॥ शुक्रवामपार्श्वे॥ॐभू०इन्द्राणिइहा०इ०इ०
इन्द्राणीमा० ॥ ॐ प्रजापतेनत्वदेतान्न्यन्योविश्वारूपाणिपरिताबभूव॥यत्कामास्ते
जुहुमस्तन्नोऽअस्तुवयर्ठंस्यामपतयोरयीणाम् ॥ ७ ॥ शनिवामपार्श्वे ॥ ॐभू०प्रजा
पतेइहा०इ०प्र०प्रजापतिमा० ॥ ॐ नमोस्तुसर्पेभ्योयेकेचपृथिवीमनु ॥ येऽअन्त
रिक्षेयेदिवितेभ्यःसर्पेभ्योनमः ॥ ८ ॥ राहुवामपार्श्वेॐभू० सर्पा इ० इ० सर्पेभ्यो०
सर्पाना० ॥ ॐब्रह्मयज्ञानम्प्रथमम्पुरस्ताद्विसीमतःसुरुचोवेनआवः ॥ सबुध्न्या
ऽउपमाऽअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥ ९ ॥ केतुवामपार्श्वे ॥ ॐभू०

ब्रह्मन् इ० ब्रह्मणेन० ब्रह्माणमा० ॥ ततोविनायकादिपंचदेवताः वास्तोष्पतिक्षेत्र पालंचावाहयेत ॥ ॥ ॐगणानांन्त्वा० ॥ १ ॥ राहोरुत्तरतः ॐभू० गणपतेइ हा० ग० इ० गणपतिमा० ॥ ॐ अम्बेऽअम्बिके० ॥ २ ॥ शनेरुत्तरतः ॐभू० दुर्गे इ० इह० दुर्गा० दुर्गा० ॥ ॐ आनोनियुद्भिंःशतनीभिरध्वुरठंसहस्त्रिणीभिरुपया हियज्ञम् ॥ वायोऽअस्मिन्त्सववनेमादयस्वयूयम्पातस्वस्तिभिःसदानः ॥३॥ रवेरुत्तर तः ॐभू० वायो इहा०इ० वायवेन० वायुमा०॥ॐघृतङ्घृतपावानःपिबतवसांम्वसापा वानःपिबतान्तरिक्षस्यहविरसिस्वाहा ॥ दिशःप्रदिशऽआदिशोविदिशऽउद्दिशोदि



१ विनायकाद्याः पंच उत्तरे स्थाप्या इति सांप्रदायिकेतिशांतिमयूखे ॥

ग्भ्यःस्वाहा ॥ ४ ॥ राहोर्दक्षिणे ॐ भू० आकाशइहा० इ० आका० आकाशमा० ॥
ॐयावाङ्कशामधुमत्यश्विनासूनृतावती ॥ तयायज्ञम्मिमिक्षताम् ॥५॥ केतोर्दक्षिणे॥
ॐभू० अश्विनौइ० इ० अश्विभ्यां० अश्विनावा० ॥ॐ वास्तोष्पतेप्रतिजानीह्य
स्मान्त्स्वावेशोऽअनमीवोभवानः ॥ यत्वेमहेप्रतितन्नोजुषस्वशन्नोभवद्विपदेशञ्चतुष्प
दे ॥ १ ॥ उत्तरे ॐ भू० वास्तोष्पतेइ० इ० वा० वास्तोष्पतिमा० ॥ ॐ नहिस्पशम
विदं० ॥ २ ॥ उत्तरेॐभू० क्षेत्राधिपतेइ० इ० क्षे० क्षेत्राधिपतिमा० ॥ इतिक्रतुसा
द्गुण्यदेवताः ॥ अथप्रागादितः पीठसमंताद्दिक्पालानावाहयेत् ॥ त्रातारमिन्द्रं० ॥
॥ १ ॥ पूर्वेॐभू० इन्द्र इ० इ०इ०इन्द्रमा० ॥ ॐत्वन्नाऽअग्नेतवदेवपायुभिर्म्मघोनोरक्ष

---

१ मंगलोत्तरेक्षेत्रपालस्थापनमितिशांतिकमलाकरे ॥ क्षेत्र स्यपतिनाक्षेत्रपालंस्थाप्यभुजोत्तरे ॥ भुजोमंगलः ।

तन्वश्श्ववन्द्य ॥ त्रातातोकस्यतनंयेगवामस्य निमेषर्ठरक्षमाणस्तवंव्रते ॥ २ ॥ आग्ने
य्याम् ॥ ॐ भू० अग्नेइ० इ० अग्निमा० ॐ युमायुत्वांगिर० ॥३॥ दक्षिणे ॐभू०यम
इ०इ० य० यममा० ॥ ॐअसुंन्वन्तमयंजमानमिच्छस्तेनस्येत्यामन्विहितस्कं
रस्य ॥ अन्यमस्मदिच्छसातऽइत्यानमोदेविनिर्ऋतेतुभ्यंमस्तु ॥ ४ ॥ नैर्ऋत्याम् ॐ
भू० निर्ऋतेइ० इ० नि० निर्ऋतिमा० ॥ ॐतत्त्वायामि ॥५॥ पश्चिमेॐभू० वरुणइ०
इ० व० वरुणमा० ॥ ॐ आनोनियुद्भिःशतिनीभिरध्वरर्ठसहस्त्रि० ॥६ ॥ वायव्याम्
ॐ भू० वायो इहा०इ०वा०वायुमा० ॥ ॐ वयर्ठसोमव्रतेतवमनस्तनूषुबिभ्रतः ॥प्र
जावन्तःसचेमहि ॥ ७ ॥ उत्तरे सोमइहा०सो० सोममा ॥ ॐ तमीशानंजगतस्त

स्थुषस्पतिंन्धियञ्जिन्वमवंसेहूमहेवयम् ॥ पूषानोयथावेदंसामसंद्वृधेरक्षितापायुरद

ब्धहंस्वस्तये ॥ ८ ईशान्याम् ॐ भू० ऐश्वरइ०इ० इ० मावा० ॥ ॐ अस्मेरुद्रामेह

नापर्वतासोवृत्रहत्येभरहूतौसजोषाः ॥ यःशंसतेस्तुवतेधायिपज्रऽइन्द्रज्येष्ठाऽअ

स्माँ२ऽअंवन्तुदेवाः ॥ ९ ॥ पूर्वेशानयोर्मध्येऊर्ध्वायाम् ॐभू० ब्रह्मन्इहाग०इ०ब्र०ब्र

ह्माणमा० ॐ स्योनापृथिविनो० ॥ १० ॥ निर्ऋतिपश्चिमयोर्मध्येअधःस्थायाम् ॐ

भू०अनंतइहागच्छइ०अनंताय०अनंतमा० ॥ इतिक्रतुसंरक्षकदिक्पालदेवताः ॥

ॐमनोजूतिर्जु० ॥ एषवैप्रतिष्ठेतिऋग्भ्यामादित्यादिग्रहमंडलदेवताभ्योनमःसुप्रति

---

१ अत्रावसरेदर्पणेयच्छेषादिदेवतास्थापनमुक्तं तत्तुशिष्टैरनादृतत्वान्नात्रलिखितम् ।

ष्ठितावरदाभवत ॥ पूजामंत्रस्तु ॥ ॐ ग्रहाऽऊर्जाहुतयोयव्यन्तोविप्रायमतिम् ॥ तेषांविशिंप्प्रियाणाम्वोहमिषमूर्जंसमंग्रभमुपयामगृहीतोसीन्द्रायत्वाजुष्टंगृह्णाम्येषतेयोनिरिन्द्रायत्वाजुष्टंतमम् ॥ १ ॥ ॐ भूर्भुवःस्वःआदित्यादिनवग्रहमंडलदेवताभ्योनमः इतिमंत्रेणषोडशोपचारैः संपूज्यप्रार्थयेत् ॥ आदिदेवनमस्तुभ्यंसप्तसप्तेदिवाकर ॥ आयुरारोग्यंमेदेहिकुरुशांतिंशुभप्रदाम् ॥ १ ॥ रोहिणीशसुधामूर्तेसुधारूपसुधाशन ॥ सोमसौम्योभवास्माकंसर्वारिष्टंनिवारय ॥ २ ॥ कुजकुप्रभवोपित्वंमंगलःपरिगद्यसे ॥ अमंगलंनिहत्याशुसर्वदायच्छमंगलम् ॥ ३ ॥ बुधत्वंबुद्धिजननोबोधयवान्सर्वदानृणाम् ॥ नत्वावबोधंकुरुतेसोमपुत्रनमोस्तुते ॥ ४ ॥ वेदशास्त्रार्थतत्त्वज्ञज्ञानविज्ञानपारग ॥ विबुधार्तिहरोनित्यंदेवाचार्यनमोस्तुते ॥ ५ ॥ भार्गवोभर्गजन

नशुचिःश्रुतिविशारद ॥ हत्वाग्रहकृतान्दोषानायुरारोग्यंदेहिमे ॥ ६ ॥ कोणंनीलां
जनप्रख्यंमंदचेष्टाप्रसारिणम् ॥ छायामार्तंडसंभूतंतंनमामिशनैश्चरम् ॥ ७ ॥ महाशि
रामहावक्रोदीर्घदंष्ट्रोमहाबलः ॥ मुंडकायोर्ध्वकेशीचपीडांहरतुमेतमः ॥ ८ ॥ अधः
स्थार्धांगभोः केतोपलधूमसमप्रभ ॥ रौद्ररूपनमस्तुभ्यंममपीडांनिराकुरु ॥ ९ ॥ ॥
अनयापूजयादित्यादिग्रहमंडलदेवताःप्रीयंताम् ॥ इतिग्रहस्थापनम् ॥ ॥ ततऐ
शान्यांग्रहसंबंधिरुद्रकलशस्थापनम् ॥ महीद्यौरितिक्रमेणपूर्णपात्रनिधानांतंकृत्वात
त्त्वायामीत्यावाह्य॥ॐ असंख्यातासहस्त्राणियेरुद्राऽअधिभूम्यांम् ॥ तेषांᳫंसहस्त्रयो
जनेवधन्वांनितन्मसि ॥ १ ॥ इतिमंत्रेणषोडशोपचारैःसंपूज्यसर्वेसमुद्राः सरितइतिगं

---

१ अयंरुद्रकलशःयजमानस्यस्नानार्थमितिकमलाकरैः ।

गाद्यावाहयेत् ॥ तत्रकलशेसांगरुद्रजपः ॥ अनेनकलशोदकेनअभिषेकसमयेपत्न्यास
हयजमानमभिषिंचेत्॥अथकुशकंडिका॥ एतस्याव्याख्याग्रहरत्नावलीकुशकंडिका
भाष्यानुसारेणलिखिता ॥ यथा ॥ अग्नेर्दक्षिणतःस्थापितेवारुणादिपीठेउदगग्रांश्च
धिकान्कुशानास्तीर्याग्नेरुत्तरतः कुशासनेब्रह्माणंपूर्वाभिमुखमासीनंयजमानःस्वयमु
दङ्मुखमासीनोब्रह्मणोदक्षिणंहस्तंगृहीत्वाभोब्रह्मन्नत्रासनेउपविशेतिब्रूयात् ॥ उ
पविशामीतितेनपठितेदक्षिणपादेनाग्नेः पूर्वेणगत्वास्वासनादंगुष्ठानामिकाभ्यांकिंचि
त्तृणमादायदक्षिणापरस्यांनिरस्याग्न्यभिमुखउपविशतीतिग्रहयज्ञकल्पवल्ल्याम् ॥
अग्नेरुत्तरतःप्रागग्रैःकुशैरासनद्वयंकल्पयित्वाएकमग्नेरुत्तरतःद्वितीयंतत्पश्चिमे ॥ वा
यव्याश्रितंवारुणंद्वादशांगुलदीर्घंचतुरंगुलविस्तृतंचतुरंगुलखातम् ॥ यथा ॥ वारुणंपा
णिमात्रंचद्वादशांगुलविस्तृतम् ॥ पद्मपत्राकृतिर्वापिप्रोक्षणीपात्रसंस्थितिरितिकल्पव

ल्ल्याम् ॥ चमसंदक्षिणहस्तेनगृहीत्वासव्येपाणौप्रागग्रंनिधायतिष्ठन्दक्षिणहस्तोद्धृ
तपात्रजलेनात्माभिमुखंपूरयित्वापश्चिमासनेनिधायदक्षिणयानामिकया जलमाल
भ्याग्नेरुत्तरतःप्राक्कल्पितेप्रोक्षण्यासनादुदक्प्रणीतासनेस्थापयेत् ॥ यथा ॥ प्रणीता
उत्तरेस्थाप्याविस्तस्त्यंतरतोग्नितः ॥ इतिग्रहयज्ञकल्पवल्ल्याम् ॥ चमसंवारुणंप्रणीता
पात्रंप्रागग्रमुत्तानंवारुणोदकेनसंपूर्य ॥ दर्भमुष्टिमादायप्रदक्षिणंप्रागादिबर्हिर्भिः कु
डपरिमाणैःपरिस्तरणंनिधेयमितिकल्पवल्ल्याम् ॥ बर्हिर्दर्भमुष्टिः ॥ तच्चप्रागुदगग्रैः ॥
दक्षिणतःप्रागग्रैः ॥ प्रत्यगुदगग्रैः ॥ उत्तरतःप्रागग्रैः ॥ आसादनंतुपात्राणांप्रादेशां
तरकेबुधः ॥ अंगुलद्वयमानेनद्वंद्वंद्वंद्वांतरेन्यसेत् ॥ प्रागग्रोदग्बिलंतत्स्यादुत्तरासाद
नेग्नितः ॥ पात्रजातंप्राग्बिलंतदुदगग्रंतुपश्चिमे इतिकारिकाकारः ॥ उत्तरतश्चेदुदक्सं
स्थमसंभवेप्राक्संस्थंपश्चिमसंस्थमुदक्संस्थमपीतिदेवयाज्ञिकः ॥ अनंतरंगर्भिणंसाग्रं

कौशंद्दिदलमेवच ॥ प्रादेशमात्रंविज्ञेयंपवित्रंयत्रकुत्रचित् ॥ आज्यस्थालीकांस्य
मयीयद्वाताम्रमयीतथा ॥ प्रादेशमात्रदीर्घासागृहीतव्याऽव्रणाशुभा ॥ द्दढाप्रादेश
मात्र्यूर्ध्वंतिर्यङ्नातिबृहन्मुखी ॥ मृन्मय्यौदुंबरीवापिचरुस्थालीप्रशस्यतइतिरत्नमा
लायाम् ॥ स्रुवसंमार्जनार्थायपंचवाथत्रयोपिवा ॥ प्रादेशमात्रान्गृह्णीयात्संमार्ग
कुशसंज्ञकान् ॥ १ ॥ उपयमनकुशाःसप्तपंचवाथत्रयोपिवेतिग्रहयज्ञकल्पवल्ल्याम् ॥
समिल्लक्षणंपरिभाषायामुक्तम् ॥ अथस्रुवलक्षणम् ॥ खादिरादेःस्रुवः कार्योहस्तमात्रप्र
माणतः ॥ अंगुष्ठपर्वखातंतत्त्रिभागंदीर्घपुष्करम् ॥ १ ॥ षट्त्रिंशांगुलांस्रुचंकारये
त्खादिरादिभिः ॥ कर्दमेगोपदाकारंपुष्करंतद्वदेवहि ॥ १ ॥ पुष्कराग्रंषडंशंतुखा
तंद्व्यंगुलविस्तृतम् ॥ अंगुष्ठैकंस्थूलतरेदंडेतस्यचकंकणमित्यासादन्याम् ॥२॥ पूर्णपात्र
लक्षणंपरिभाषाया मुक्तम् ॥ एवमासादनंकृत्वापवित्रच्छेदनैःकुशैः ॥ अंगुष्ठांगुलिपर्व

भ्यांचिच्छिद्यात्प्रादेशसंमितमितिकल्पवल्ल्याम्॥ अंगुलिरनामिकाग्रपव ॥ प्रादेशमात्र
मुत्सार्योत्पवनंतुविधीयते ॥ उदिंगनंतुकर्तव्यमूर्ध्वमूध्वप्रमाणतइतिकल्पवल्ल्याम् ॥
प्रोक्षणेकारणमाहश्रुतिः ॥ अथपात्राणिप्रोक्षतीत्युपक्रम्यतदेवैषामत्राशुद्धस्तक्षान्योमे
ध्यः कश्चित्पराहंतीतितदेवैतेषामद्भिरमेध्यंकरोतीति ॥ तक्षावर्धकिः॥ तद्व्यतिरि
क्तोन्योवृषलादिःससर्वोप्यमेध्यत्वादशुद्धः ॥ तस्यस्पर्शकृतंयदेषांपात्राणांदोषजातं
तदनेनप्रोक्षणेननिवर्तयतीतिग्रहयज्ञकल्पवल्ल्याम् ॥ पात्राणिक्रमशःप्रोक्ष्यनिदध्या
त्तामसंचरे ॥ असंचरःप्रणीताग्न्योरंतरेणप्रकीर्तितः ॥ स्वालंभान्निर्वपेदापमाज्यस्था
ल्यांयथार्हतः ॥ इतिकारिकायाम् ॥ प्रणीतमुदकंकृत्वास्थाल्यांत्रिःक्षालितान्क्षिपे
त् ॥ तंडुलाननुमानेनचरुः पूर्णोयथाभवेत् ॥ दैवेत्रिःक्षालिताज्ञेयास्तंडुलाःपैतृकेसकृ
त् ॥ पात्रप्रोक्षणकालेतुचैतेषांप्रोक्षणंभवेदितिकल्पवल्ल्याम् ॥ तत्राज्यंब्रह्माधिश्रय

सं० ति॥तदुत्तरतआचार्यश्चरुमधिश्रयतीतियुगपत् ॥ इतिकल्पवल्ल्याम्॥कात्यायनसू भा०
॥७५॥ त्रेअवरोत्तरमुत्तरर्ठंहवीꣳषि ॥ श्रपणलक्षणंकारिकायाम् ॥ अन्वर्थःश्रपितःस्विन्नोह्य
दग्धोकठिनश्शुभः ॥ नचातिशिथिलःपच्योनचरुश्चारसस्तथेतिकारिकायाम् ॥ द्व
योःपर्यग्निकरणंकर्तव्यंज्वलदग्निना ॥ पर्यग्निकरणेकारणमाहश्रुतिः ॥ तंपर्यग्निक
रोत्यच्छिद्रमेवैनमेतदग्निनापरिगृह्णातिनाष्ट्रारक्षाꣳस्यभिमृषेयुरग्निर्हिरक्षसामपहंते
तिकल्पवल्ल्याम् ॥ ततः ॥ स्रुवंसंमार्जयेत्प्रांचमतःसंमार्जनैःकुशैः॥ मूलतःपुष्करंया
वत्कुशमूलैस्तथाग्रतः ॥ अग्नावभ्युक्ष्यचपुनःप्रतप्यनिदधातितम् ॥ अधोमुखंतापयि
त्वासंमृज्योर्ध्वमुखंततः ॥ अभ्युक्षणंतुप्रणीतोदकेनविशेषवचनाभावात्प्रणीतानांस
र्वार्थत्वाच्च ॥ पुनःप्रतपनंपूर्ववत् ॥ निधानंसमीपे ॥ सम्मार्गकुशानामपासनमुत्तर ॥७५॥
तः॥ शाखांतरेग्नौप्राशनंविहितम् ॥ आहवनीयेप्राशनमेकेइतिकात्यायनः ॥ अनुद्वा

सितानांपूर्वेणोद्वासितानामपरेणउत्तरतउपचारोहियज्ञइतिवचनादग्नेरुत्तरतउद्वासनम्॥
उद्वास्यप्रोक्षणीपश्चाद्धागउत्तरतोग्नेःस्थापनम् ॥ इतिकल्पवल्ल्याम् ॥ तदुद्वासित
माज्यंपवित्राभ्यामुत्पूयतदेवावेक्ष्य ॥ अवेक्षणमपद्रव्यनिरसनार्थमितिकल्पवल्ल्याम्
आज्यस्थालीताभ्यांप्रोक्षणीरुत्पुनातीतिश्रुतेः ॥ उत्पुनातिकरणेपवित्रमुदगग्रंवाम
हस्तेधृत्वातन्मूलंदक्षिणहस्तेधृत्वापवित्रकुशमध्यतउत्पुनाति ॥ उपग्रहार्थंदक्षिणह
स्तेनसव्येकुर्यात् ॥ रक्षसांतर्जनायवज्रोवाआपआपोहिकुशाः एवंपरंपरयाकुशेषुवज्र
त्वादितिकल्पवल्ल्याम् ॥ कारिकायाम् अधोमुखऊर्ध्वपादः प्राङ्मुखोहव्यवाहनः ॥
तिष्ठत्येवस्वभावेनआहुतिः कुत्रदीयते ॥ सपवित्रांबुहस्तेनवह्नेःकुर्यात्प्रदक्षिणाम् ॥
हव्यवाट्सलिलंदृष्ट्वाबिभेतिसंमुखोभवेत् ॥ तिष्ठंतीवहास्थीनीतिश्रुतेः अस्थिस्थाना
पन्नत्वात्समिधौत्तिष्ठायाधानमितिदेवयाज्ञिकः ॥ कारिकायाम् ॥ अन्वारंभेकृतेहोमे

ब्रह्मणादक्षिणेकरे ॥ बहुकाष्ठैः समिंधीयादर्चिष्मंतंक्रियाक्षमम ॥ स्रुवेणाज्यंगृहीत्वा
ग्नेःप्रत्यगुत्तरदेशतः ॥ आरभ्यदिशमाग्नेयीमाज्यधारामृजुंहरेत् ॥ मनसासंस्मरे
त्स्वाहायुक्तंचैवप्रजापतिम् ॥ नैर्ऋतिंदिशमाश्रित्यएशानींपूर्ववत्क्षिपेत् ॥ तत्रेंद्राय
पदंस्वाहायुक्तंचोपांशुकंभवेत् ॥ स्वाहेत्याघारयेदेतावाघाराविततिभाषितौ ॥ ॥ प्रा
च्यौवाजुहुयादेतावृजूसंततमेवच ॥ जुहुयादग्नयेस्वाहासोमायेतितथापराम् ॥ प्रथ
मेशानकोणाग्रेद्वितीयाग्नेयकोणगा ॥ सुसमिद्धेथवावह्नौहोतव्येचोत्तराहुती ॥
ननुउत्तरतउपचारोयज्ञइतिशास्त्रम् ॥ कथमेतेआहुतीदक्षिणसंस्थंहूयेतेइतिचेत्स
त्यम् ॥ आत्माभिमुखस्याग्नेर्दक्षिणवामाभिप्रायेणेत्यदोषः ॥ प्राजापत्याहुतौ
उपांशुत्वकारणंहविर्यज्ञकांडेद्रष्टव्यम ॥ उपांशुलक्षणंहौत्रसूत्रे ॥ यस्मिन्मंत्राद 
योनविज्ञायंतेनव्यंजनंकेवलमेवौष्ठचालनंश्वासोवातद्रुपाठंशुरिति ॥ भूरादिनवसु

स्विष्टकृतेचाद्यचतुष्टये ॥ अन्वारंभोभवेत्तेषुसोन्वारंभःकुशेनवै ॥ स्रुवधारणार्थंका
रिका ॥ अग्रेधृत्वार्थनाशायमध्येचैवमृतप्रजा ॥ मूलेचम्रियतेहोतास्रुवस्थानंकथं
भवेत ॥ अग्रमध्याच्चयन्मध्यंमूलमध्याच्चमध्यतः ॥ स्रुवंधारयतेविद्वाञ्ज्ञातव्यंच
सदाबुधः ॥ तर्जनींचबहिःकृत्वाकनिष्ठांचबहिस्तथा ॥ मध्यमानामिकांगुष्ठैःस्रुवंधा
रयतेद्विजः ॥ स्रुवहोमेसदात्यागःप्रोक्षणीपात्रमध्यतः ॥ पाणिहोमेत्यागोन ॥ ॥
इतिकुशकंडिकाभाष्यकारादयः ॥ ॥ अनेकस्रुवसाध्यहोमेअनेकस्रुवासादनंतेषां
प्रोक्षणचेतिसिंधुः सर्वत्रत्यागादौद्रव्यप्रक्षेपइतिगदाधरादयः ॥ उपविशतीवमाज्ये
तिश्रुतेःउपविश्यैवआहुतिंजुहुयात् ॥ आज्याहुतेराज्यस्थानीयत्वेनोक्तत्वादितिदे
वयाज्ञिकः ॥ अग्निपूजाबहिःप्रोक्तेतिवचनाद्बहिरेवसर्वपूजनमितिकेचिदाहुः ॥ तत्र
विशेषोविष्णुधर्मोत्तरे ॥ मध्येपिगंधपुष्पादीन्दद्यादग्नेर्नसंशयः ॥ बहिर्नैवेद्यमात्रं

तुदातव्यमितिनिश्चयइतिशांतिमयूखे ॥ ॥आज्येनव्याहृतीर्हुत्वाभूर्भुवःस्वरितिक्रमात् ॥ पंचवारुणकंतद्वदंतेचैवप्रजापतिमितिकारिकायाम् ॥ प्राङ्महाव्याहृतिभिःस्विष्टकृदन्यच्चेदाज्याद्धविरितिसूत्रम् ॥ ॥अस्यार्थः ॥ ॥यत्रहोमेआज्यादन्यद्धविःस्यात ॥ अत्रहविःशब्देनचरुरेवहविः ॥ यत्रचरुःस्यात्तत्रमहाव्याहृतिभिः प्राक्स्विष्टकृद्भवति ॥ अन्यत्रान्तेपीतिभाष्यकारः ॥ स्विष्टकृद्धोमः सर्वहोमद्रव्यैः कार्यः ॥ लक्षहोमादौचरुशेषस्यधार्यत्वोक्तेरितिशांतिकमलाकरः ॥ ततआचार्योग्निसमीपउपविश्यान्वादध्यात् ॥ अथान्वाधानम् ॥ यजुषामन्वाधानंगोभिलहरिहरगदाधरादिभिर्नोक्तत्वात्स्मार्तकर्मणिनान्वाधानंतथापिप्रयोगरत्नस्मार्तोल्लासस्मार्तगंगाधर्यादौअन्वाधानोक्तेःप्रचुरतरशिष्टाचारप्राप्तत्वाच्चात्राप्युच्यते ॥ ॥देशकालौ० ॥ अस्मि

न्सग्रहमखरजोदर्शनशांत्याख्येकर्मणिदेवतापरिग्रहार्थमन्वाधानंकरिष्ये ॥ अस्मि न्नन्वाहितेग्नौपूर्वेणब्रह्मणोगमनम् ॥ उत्तरतःपात्रासादनम् ॥ द्वेपवित्रे ॥ कांस्यमयी ताम्रमयीवाआज्यस्थाली ॥ ताम्रमयीचरुस्थाली ॥ पालाश्यःसमिधः ॥ प्राच्यांवा घारा ॥ समिद्धतमेआज्यभागौ ॥ पूर्णपात्रंदक्षिणावा ॥ एतान्वैकल्पिकान्पदार्था नहंकरिष्ये ॥ अथदेवताभिध्यानम्॥ तत्रप्रजापतिमिंद्रमग्निंसोममेताः आज्येनप्रत्येक मेकैकयाहुत्या ॥ अत्रप्रधानम् ॥ आदित्यादिनवग्रहानर्कादियथालाभसमिच्चरु तिलाज्यद्रव्यैःप्रत्येकंप्रतिद्रव्येणअष्टाष्टसंख्याकाभिराहुतिभिः ॥ अधिदेवताप्रत्य धिदेवताश्चतैरेवद्रव्यैः प्रत्येकंप्रतिद्रव्येणचतुश्चतुःसंख्याकाभिराहुतिभिः॥ विनायका

१दर्पणे नमुख्यदेवतान्वाधानोत्तरग्रहान्वाधानमुक्तं कमलाकरादिनिबंधेषुग्रहान्वाधानोत्तरं मुख्य-देवतान्वाधानमुक्तं तदनुसारेणात्र ॥ व्याहृतिहोमः सर्वत्रोक्तः ।

दिपंचदेवताःक्षेत्रपालंवास्तोष्पतिमिंद्रादिदशलोकपालांश्चतैरेवद्रव्यैःप्रत्येकंप्रतिद्रव्येण
द्वाभ्यांद्वाभ्यामाहुतिभ्यांयक्ष्ये। पुनरत्रप्रधानम्। सूर्यमिंद्रमिन्द्राणींभुवनेश्वरींशर्क
राघृतसंमिश्रपायसतिलाज्यद्रव्यैःप्रत्येकंप्रतिद्रव्येणअष्टाविंशत्यष्टाविंशतिसंख्या
काभिराहुतिभिर्यक्ष्ये ॥ न्यूनातिरिक्तार्थंघृताक्ततिलद्रव्येणसमस्तव्याहृतिभिरष्टावि
शतिसंख्याकाभिराहुतिभिर्यक्ष्ये ॥ शेषेणस्विष्टकृतम् ॥ अग्निंवायुंसूर्यमग्नीव
रुणौअग्नीवरुणौअग्निंवरुणंसवितारंविष्णुंविश्वान्देवान्मरुतःस्वर्कान्वरुणमादित्यमदि
तिंप्रजापतिमेताअंगप्रधानार्थादेवताआज्येनअस्मिन्सग्रहमखरजोदर्शनशांत्याख्ये
कर्मण्यहंयक्ष्ये ॥ ॥ दक्षिणतोब्रह्मासनास्तरणंतत्रब्रह्मोपवेशनम् ॥ उत्तरतःप्रणी
तासनम् ॥ वायव्यांद्वितीयमासनम् ॥ ततोवामकरेणप्रणीताः संगृह्यदक्षिणकरेणजलं
प्रपूर्यभूमौवायव्यासनेनिधायालभ्योत्तरतोग्नेरासनेस्थापनम् ॥ बर्हिषाप्रदक्षिणमग्निं

परिस्तीर्यवाईशानादिपूर्वाग्रैस्त्रिभिस्त्रिभिर्दर्भैः परिस्तरणम् ॥ तच्चप्रागुदगग्रैःदक्षिणतः प्रागग्रैः प्रत्यगुदगग्रैः ॥ उत्तरतःप्रागग्रैः ॥ अर्थवत्पात्रासादनम् ॥ पवित्रच्छेदनादर्भास्त्रयः ॥ पवित्रेद्वे ॥ प्रोक्षणीपात्रम्॥आज्यस्थाली॥चरुस्थाली॥ संमार्जनकुशाः पंच ॥ उपयमनकुशाःसप्त ॥ समिधस्तिस्रः ॥ स्रुवः ॥ आज्यम् ॥ तंडुलाः॥ पूर्णपात्रेदक्षिणा वरोवा ॥ पवित्रच्छेदनैःपवित्रकरणम् ॥ द्वयोःपवित्रयोरुपरिपवित्रत्रयंनिधाय ॥ द्वयोर्मूलेनद्वौकुशौप्रदक्षिणीकृत्यत्रयाणांमूलाग्रेएकीकृत्यअनामिकांगुष्ठेनद्वयोरग्रेछेदयेत् ॥ द्वयोर्मूलंत्रीणिचोत्तरतः क्षिपेत् ॥ प्रोक्षणीपात्रेप्रणीतोदकमासिच्यपात्रांतरेणचतुर्वारम् ॥ वामकरेपवित्राग्रंदक्षिणेमूलंधृत्वामध्यतः पवित्राभ्यामुत्पवनंप्रोक्षणीपात्रजलस्येति ॥ प्रोक्षणीनांसव्यहस्तेकरणम् ॥ दक्षिणहस्तमुत्तानंकृत्वामध्यमानामिकांगुल्योर्मध्यपर्वभ्यामपामुद्दिंगनम् ॥ प्रणीतोदकेनप्रोक्षणीनांप्रोक्षणम् ॥ प्रोक्षण्युद

केनआज्यस्थाल्याःप्रोक्षणम् ॥ चरुस्थाल्याःप्रोक्षणम् ॥संमार्गकुशानांप्रोक्षणम्॥उप
यमनकुशानांप्रोक्षणम्।समिधांप्रोक्षणम् ।स्रुवस्यप्रोक्षणम् । आज्यस्यप्रोक्षणम् ॥ तंडु
लानांप्रोक्षणम्॥ पूर्णपात्रस्यप्रोक्षणम्॥प्रणीताग्न्योर्मध्येअसंचरेप्रोक्षणीनिधानम् । आ
ज्यस्थाल्यामाज्यनिर्वापः ॥ सपवित्रकेचरुपात्रेप्रणीतोदकमासिच्यक्षालिततंदुल
प्रक्षेपः ॥ ब्रह्मणोदक्षिणतआज्याधिश्रयणम् ॥ आचार्यस्यचरोरधिश्रयणमाज्यस्यो
त्तरतः ज्वलतोल्मुकेनपर्यग्निकरणम् ॥ स्रुवस्यप्रतपनम् ॥ संमार्गकुशैः स्रुवस्यसं
मार्जनम् ॥ अग्रैरग्रंमूलैर्मूलम्॥प्रणीतोदकेनाभ्युक्षणम्॥ पुनःप्रतपनंदेशेनिधानम्॥आ
ज्योद्वासनम् ॥ चरोरुद्वासनम् ॥ प्रत्युत्पवनवत्पवित्रेणाज्योत्पवनम् ॥अवेक्षणम् ॥ अ
पद्रव्यनिरसनम्॥ प्रोक्षण्याःप्रत्युत्पवनम् ॥ उपयमनकुशानादाय ॥तिष्ठत्समिधोभ्या
धाय ॥ प्रोक्षण्युदकशेषेणसपवित्रहस्तेनाग्नेरीशानकोणादारभ्यप्रदक्षिणवत्पर्युक्ष

णम् ॥ पवित्रयोःप्रणीतासुनिधानम् ॥ दक्षिणंजान्वाच्यंजुहोति ॥ तत्राघारावाज्यभा
गौचब्रह्मान्वारब्धस्रुवेण जुहुयात् ॥ मृगीमुद्रयाघृतस्रुवेणाज्यमादायप्रजामतिमन
साध्यात्वास्वाहाकारमुच्चैः इदंप्रजापतयेउपांशुनममेत्युच्चैरुच्चारयेत्॥अग्नेरुत्तरभा
गे ॐ प्रजापतयेस्वाहा ॥ इदंप्रजापतयेनमम ॥ अग्नेर्दक्षिणभागे ॥ ॐ इंद्रायस्वा
हा ॥ इदमिन्द्रायनमम ॥ इत्याघारौ ॥ मध्येसमिद्धतमेवाज्यभागौ ॥ ॐ अग्नये
स्वाहा ॥ इदमग्नयेनमम ॥ ॐ सोमायस्वाहा ॥ इदंसोमायनमम ॥ ततोयजमाने
नद्रव्यत्यागःकार्यः ॥ यथाकालंप्रत्याहुतित्यागस्यकर्तुमशक्यत्वात्सर्वमेवहविर्जातं
देवताश्चमनसाध्यात्वाइदंयथादैवतमस्तुनममेतिएवंरूपंत्यागमुच्चारयेद्यजमानः ॥
तत्रच ॥ मंत्रेणोंकारपूतेनस्वाहांतेनविचक्षणः ॥ स्वाहावसानेजुहुयाद्ध्यायन्वैमंत्र
देवताम् ॥ १ ॥ योनर्चिषिजुहोत्यग्नौव्यंगारिणिचमानवः ॥ मंदाग्निरामयावीचदरि

द्रश्चैवजायते ॥ २ ॥ परिणामोवदानस्ययाजैश्वर्यंग्निपुष्टये ॥ तस्मात्समिद्धेहोतव्यं नासमिद्धेकथंचन ॥ ३ ॥ अर्कःपलाशखदिरावपामार्गोथपिप्पलः ॥ औदुंबरशमी दूर्वाकुशाश्चसमिधःक्रमात् ॥ ४ ॥ तिलाज्यचरुपक्कंचहविर्मुख्यंप्रकीर्तितमिति ॥ इदंसंपादितंसमिच्चरुतिलाज्यादिहविर्द्रव्यंयायायक्ष्यमाणदेवतातस्यैतस्यैदेवतायैन मम ॥ ॥ यथादैवतमस्तु ॥ ततंआदित्यादिनवग्रहान्क्रमेणपूर्वोक्तार्कादिसमिच्च रुतिलाज्यद्रव्यैरष्टाष्टसंख्ययाहुत्वा ॥ पूर्वोक्तग्रहहोमद्रव्येण अधिप्रत्यधिदेवताश्च तुश्चतुःसंख्ययाहुत्वा ॥ यस्यग्रहस्ययासमित्सातस्याधिदेवतायाः ॥ प्रत्यधिदेवताया श्चयोज्या॥ विनायकादिदिक्पालांतक्रतुसाद्गुण्यक्रतुसंरक्षकदेवताः पलाशोदुंबरान्य

---

१ गणाधिपतयेदेयाप्रथमातुवराहुतिः ॥अन्यथाविफलंविप्रभवतीहनसंशयः ॥ इतिकमलाकरे ॥

तमसमिच्चरुतिलाज्यद्रव्येणद्विद्विसंख्ययाजुहोति ॥ समित्सरलासत्त्वचाकनिष्ठि
काग्रवत्स्थूला द्वादशांगुलदीर्घाग्राह्या ॥ अत्रातिसृभिर्दूर्वाभिरेकाहुतिस्तथैवत्रिपत्र
कुशैरेकाहुतिः ॥ द्रवद्रव्यस्रुवेणैवपाणिनाकठिनंहविरिति ॥ प्रधानंपायसंप्रोक्तंसघृ
तंचसशर्करम् ॥ अष्टोत्तरशतंचैवजुहुयात्तिलसर्पिषा ॥ ॥ इतिक्रतुशांतौनारदसं
हितायाम् ॥ ॥ ततः सूर्येंद्रेंद्राणीभुवनेश्वरीणांप्रीत्यर्थंतिलपायसाज्यद्रव्येणप्रत्ये
कमष्टोत्तरशतमष्टाविंशतिसंख्ययावाजुहुयात् ॥ ततः समस्तव्याहृतिभिस्तिला
ज्यद्रव्येणाष्टोत्तरशतमष्टाविंशतिसंख्ययावाजुहुयात् ॥ एवंहोमंसमाप्याग्नेः
स्थापितदेवतानांचोत्तरपूजनंकार्यम् ॥ तत्रायंक्रमः ॥ पूजास्विष्टंनवाहुत्योबलिः पू
र्णाहुतिस्तथा ॥ संस्रवादिविमोकांतंहोमशेषसमापनम् ॥ श्रेयःसंपाद्यदानंचअभि
षेकोविसर्जनमिति ॥ अद्यपू॰ कृतस्यकर्मणःसांगतासिद्ध्यर्थंस्थापितदेवतानांमृडा

ग्रेश्वोत्तरपूजनंकरिष्ये ॥ मृडाग्निस्तु ॥ पूर्वंप्रज्वलितोह्यग्निर्हविर्द्रव्यबुभुक्षितः ॥ तृप्तोनि र्धूमनिर्ज्वालोमृडाग्निःपरिकीर्तित इतिग्रहरत्नावल्याम् ॥ ॐ अग्नेनयसुपथाराये॒ऽअ स्मान्विश्वानिदेववयुनानिविद्वान् ॥ युयोध्यस्मज्जुहुराणमेनोभूयिष्ठान्तेनमऽउक्तिं विधेम ॥ १ ॥ ॐ मृडाग्नयेनमः गंधादिपंचोपचारैःसंपूज्यस्थापितदेवतानामुत्त रपूजनम्ॐविश्वानिदेवसवितरितिमंत्रेण ॥ ॐ भू॰सूर्यादिस्थापितदेवताभ्योनमः गंधादिपंचोपचारैः संपूज्य ॥ अनयापूजयामृडाग्निःस्थापितदेवताश्चप्रीयंताम् ॥ ॥

१ अग्निपूजाबहिःप्रोक्तेतिवचनात्बहिरेवसर्वपूजनमितिकेचिदाहुः ॥ तत्रविशेषोविष्णुधर्मोत्तरे ॥ म ध्येपिगंधपुष्पादिदद्यादग्नेर्नसंशयः ॥ बहिर्नैवेद्यमात्रंतुदातव्यमितिनिश्चयः ॥ इतिशांतिमयूखे ॥

ततोहुतशेषहविर्द्रव्यंगृहीत्वाब्रह्मान्वारब्धःस्विष्टकृद्धोमंकुर्यात् ॥ ॥ ॐ अग्नयेस्वि
ष्टकृतेस्वाहा ॥ इदमग्नयेस्विष्टकृतेनमम ॥ ततोभूराद्यानवाहुतयः ॥ ॥ ॐ भूः स्वा
हा ॥ १ ॥ इदमग्नयेनमम ॥ ॐ भुवःस्वाहा ॥ २ ॥ इदंवायवेनमम ॥ ॐ स्वःस्वा
हा ॥ ३ ॥ इदंसूर्यायनमम ॥ ॐ त्वन्नोऽअग्नेवरुणस्यविद्वान्देवस्यहेडोऽअवयासिसी
ष्ठाः ॥ यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषाᳬसिप्रमुमुग्ध्यस्मत्स्वाहा ॥ ४ ॥
इदमग्नीवरुणाभ्यां० ॥ ॐ सत्वन्नोऽअग्नेवमोभवोतीनेदिष्ठोऽअस्याऽउषसोव्युष्टौ ॥

---

१प्र॥ महाव्याहृतिभिःस्विष्टकृदन्यच्चेदाज्याद्धविरितिसूत्रम्॥ अस्यार्थः॥यत्रहोमेआज्यादन्यद्धविःस्या
त् ॥ अत्रहविःशब्देनचरुरेवहविः। यत्रचरुःस्यात्तत्रमहाव्याहृतिभिःप्राक्स्विष्टकृद्भवतिअन्यत्रांतेतिभा
ष्यकाराः॥स्विष्टकृद्धोमःसर्वद्रव्यैःकार्यः॥लक्षहोमादौचरुशेषस्यधार्यत्वोक्तेरिति शांतिकमलाकरः ॥

अवंयक्ष्वनोवरुणठुंरराणोव्वीहिमृडीकठुंसुहवोनएधिस्वाहा ॥ ५॥ इदमग्नीवरुणाभ्यां० । ॐअयाश्चाग्नेस्यनभिशस्तिपाश्चसत्यमित्वमयाऽअसि ॥ अयानोयज्ञंवहास्ययानोधेहिभेषजठुंस्वाहा ॥ ६ ॥ इदमग्नयेअयसेन० ॥ ॐ येतेशतंवरुणयेसहस्रंयज्ञियाःपाशावितताममहान्तः ॥ तेभिर्नोऽअद्यसवितोतविष्णुर्विश्वेमुञ्चंतुमरुतःस्वर्काःस्वाहा ॥ ७ ॥ इदंवरुणायसवित्रेविष्णवेविश्वेभ्योदेवेभ्योमरुद्भ्यः स्वर्केभ्यश्चनमम ॥ ॐ उदुत्तमंवरुणपाशमस्मदवाधमंविमध्यमठुंश्रथाय ॥ अथावयमादित्यव्रतेतवानागसोऽअदितयेस्यामस्वाहा ॥ ८ ॥ इदंवरुणायादित्यायादितयेचन० ॥ ॐ प्रजापतयेस्वाहा ॥ ९ ॥ इदंप्रजापतयेनमम ॥ इतिनवाहुतयः ॥ ततोबलिदानम् ॥ तच्चैवम् ॥ ॥ अग्न्यायतनस्यसमंताद्दिक्षुविदिक्षुच दशदिक्पालानांमाषभक्तबलयो

देयाः ॥ ॥ अद्यपू० कृतस्यकर्मणःसांगतासिद्ध्यर्थंदिक्पालपूर्वकमादित्यादिग्रह
मंडलादिस्थापितदेवताभ्योबलिदानंकरिष्ये ॥ ॥ॐ त्रा॑तार॒मिंद्र॑० ॥ १ ॥ प्राच्यां
दिशिइन्द्रंसांगंसपरिवारंसायुधंसशक्तिकमेभिर्गंधाद्युपचारैस्त्वामहंपूजयामि ॥ इंद्रा
यसांगायसपरिवारायसायुधायसशक्तिकायइमंसदीपमाषभक्तबलिं समर्पयामि ॥
भोइंद्रदिशंरक्षबलिंभक्षममसकुटुंबस्याभ्युदयंकुरु ॥ आयुःकर्ताक्षेमकर्ताशांतिकर्ता
पुष्टिकर्तातुष्टिकर्तानिर्विघ्नकर्तावरदोभव ॥ ॥ अनेनबलिदानेनइंद्रः प्रीयताम् ॥ एवंसर्व
त्रोहः ॥ ॐ त्वन्नोऽअग्नेतवदेव० ॥ २ ॥ आग्नेय्यांदिशिअग्निंसांगं० एभिर्गंधा० अ
ग्नयेसांगायसप० भोअग्नेदिशं० आयुःकर्ता० अनेनबलि० अग्निःप्रीयताम् ॥ ॐयुमाय
त्वांगिं० दक्षिणस्यांदिशियमंसांगं० एभिर्गंधा० यमायसां० भोयमदिशं० आ

१ दर्पणे अहोइन्द्रगजेंद्रस्येत्यादिश्लोकाउक्ताः इदानींतनानामपाठदर्शनान्नात्रलिखिताः ।

युःकर्ता० अनेनबलिदा० यमःप्रीयताम् ॥ ॐअसुंन्वन्तमयंजमानमिच्छ० ॥ ४ ॥ 
 नैर्ऋत्यांदिशिनिर्ऋतिंसां० एभिर्गंधा० निर्ऋतयेसां० ॥ भोनिर्ऋतेदि० अनेनबलि०
निर्ऋतिः प्री० ॥ ॐतत्त्वायामि० ॥ ५ ॥ पश्चिमायांदिशिवरुणंसां० एभिर्गंधा० व
रुणायसां० भोवरुणदिशं० आयुःकर्त्ता० अनेनबलि० वरुणःप्री० ॥ ॐ आनानि
यु० ॥ ६ ॥ वायव्यांदिशिवायुंसां० एभिर्गंधा० वायवेसां० भोवायोदिशं० ॥ अ
नेनबलिदा० वायुःप्री० ॥ ॐ वयठंसोमव्र० ॥ ७ ॥ उदीच्यांदिशिसोमंसां० एभि
र्गंधा० सोमायसां० भोःसोमदिशं० अनेनबलि० सोमःप्री० ॥ ॐ तमीशानं० ॥
॥ ८ ॥ ईशान्यांदिशिईश्वरंसां० एभिर्गंधा० ॥ ईश्वरायसां० भोईश्वरदिशं० ॥ अ
नेनबलिदानेनईश्वरःप्री० ॥ पूर्वैशानयोर्मध्येऊर्ध्वायांदिशिब्रह्माणं० ॐ अस्मेरुद्रा० 

॥ ९ ॥ पूर्वैशानयोर्मध्येऊर्ध्वायांदिशिब्रह्माणंसांगं० एभिर्गंधा० ब्रह्मणेसां० भोब्रह्मन्
दि० आयुः क० अनेनबलि० ब्रह्माप्री० ॥ ॐ स्योनापृथि० ॥ १० ॥ निर्ऋतिपश्चि
मयोर्मध्येअधःस्थायांदिशि अनंतंसांगं० एभिर्गंधा० अनंतायसां० भोअनंतदि
शं० आयुःकर्ता० अनेनब० अनंतः प्री० ॥ ॥ ततआवाहनमंत्रेणगणेशदुर्गाक्षे
त्रपालबलिदानम् ॥ ततोग्रहवेदीसमीपेग्रहाणांबलिः ॥ ॐ आकृष्णेन० ॥१॥ सूर्याय
साङ्गायसपरिवारायसायुधायसशक्तिकायईश्वराग्निरूपाधिप्रत्यधिदेवतासहिताय
इमंसदीपमाषभक्तबलिंस० ॥ भोःसूर्यइमंबलिंगृहाणममसकुटुंबस्याभ्युदयंकुरु ॥
आयुःकर्त्ता क्षेमकर्ताशांतिकर्तापुष्टिकर्तातुष्टिकर्तानिर्विघ्नकर्तावरदोभवअनेनबलि
दानेनसूर्यः प्री० १ ॥ इमंदेवा० ॥ २ ॥ सोमायसां० उमांबुरूपाधिप्रत्यधि

देवतास० इमं० ॥ भोःसोमइमंब० ॥ ॐ अग्निर्मूर्द्धा० ॥ ३ ॥ भौमायसां० स्कंदभू
मिरूपाधिप्रत्यधिदेवतास० भोभौमइमंबलिंगृ० ॥ ॐ उद्बुध्यस्वा० ॥ ४ ॥ बुधा
यसाङ्गाय० नारायणविष्णुरूपाधिप्रत्यधिदेवतास० इमंमाषभ० भोबुधइमं० अ
नेनबलि० बुधः प्री० ॥ ॐ बृहस्पते० ॥ ५ ॥ बृहस्पतयेसां० ब्रह्मेंद्ररूपाधिप्रत्य
धिदेवतासहिताय० ॥ भोबृहस्पतेइमं० अनेनबलि० बृहस्पतिः प्री० ॥ ॐ अन्नां
त्परिस्रु० ॥ ६ ॥ शुक्रायसां० इंद्रेंद्राणीरूपाधिप्रत्यधिदेव० ॥ भोःशुक्रइमंबलिं० अ
नेनबलिदा० शुक्रः प्री० ॥ ॐ शन्नोदेवी० ॥ ७ ॥ शनैश्चरायसां०यमप्रजापतिरू
पाधिप्रत्यधिदे० भोःशनैश्चरइमं० अनेनबलि० शनैश्चरःप्री० ॥ ॐ कयानश्चि० ॥
॥ ८ ॥ राहवेसां०कालसर्परूपाधिप्रत्यधिदे० भोरा० इमंबलिं० अनेन० राहुः प्री० ॥

ॐ केतुंकृण्वन्न० ॥ ९ ॥ केतवेसां० चित्रगुप्तब्रह्मरूपाधिप्रत्यधिदेव० भोःके० इमंबलिं० अने० केतुः प्री० ॥ ततः क्रतुसाद्गुण्यदेवताभ्योबलिः ॥ ॐ गुणानान्त्वा० ॥ १ ॥ गणपतयेसां० सशक्तिकायइ० भोगण० इमंब० आयुः० अनेन० ॥ ॐ अम्बेऽअंबिके० ॥ २ ॥ दुर्गायैसाङ्गा० सशक्तिका० भोदुर्गेइ० आयुःकर्त्री० अनेनब० ॐ आनोंनि० ॥ ३ ॥ वायवेसां० इमं० भोवायोइमं० ॥ ॐ घृतंघृत० ॥ ४ ॥ आकाशायसां० भोआकाशइमं० ॥ ॐ यावाङ्कशा० ॥ ५ ॥ अश्विभ्यांसा० इमंस० भोअश्विनौ० अनेनब० ॥ ॐ वास्तोष्पस्ते० ॥ १ ॥ वास्तोष्प० सां० इमंस० भोवास्तो० इमंबलिं० अनेनब० ॥ नहिस्पश० ॥ २ ॥ क्षेत्राधिपतयेसा० इमंस० भोःक्षेत्राधिपतेइमंबलिं० ॥ अथ दिक्पालेभ्यएकतंत्रेणैकमेवबलिंदद्यात् ॥ ॐ प्रा

च्यैदिशेस्वाहार्वाच्यैदिशेस्वाहादक्षिणायैदिशेस्वाहार्वाच्यैदिशेस्वाहांप्रतीच्यैदिशे
स्वाहार्वाच्यैदिशेस्वाहोदींच्यैदिशेस्वाहार्वाच्यैदिशेस्वाहोर्ध्वायैदिशेस्वाहार्वाच्यै
दिशेस्वाहावांच्यैदिशेस्वाहार्वाच्यैदिशेस्वाहा ॥ १ ॥ इंद्रादिदशदिक्पालेभ्यइमं
सदीपमाषभक्तबलिंस० भोभोइंद्रादिदशदिक्पालाःदिशंरक्षत बलिं० आयुःकर्त्ता
रःक्षेम० अनेनबलि० इन्द्रादिदशदिक्पालाःप्री० एवंसर्वेभ्योग्रहेभ्यएकतंत्रेणैक
मेवबलिंदद्यात ॥ ॐ ग्रहाऊर्जा० तमम् ॥ १ ॥ आदित्यादिनवग्रहदेवताभ्यः अ
धिप्रत्यधिदेवताविनायकादिवास्तोष्पतिक्षेत्रपालदेव० स० प्रीयंताम् ॥ ॥ एवंमा
तृणामेकमेवबलिंदद्यात् ॐ समंख्येदेव्या० ॥ १ ॥ गौर्यादिमातृभ्यइमंसदीपमा
षभक्तबलिं०भोभोगौर्यादिमातरइमंबलिंगृह्णीतआयुःकर्त्र्यःक्षेम० अनेनबलि० गौ

यांदिमातरः प्रीयंताम् ॥ ॥ प्रधानदेवताभ्यएकतंत्रेणैकमेवबलिंदद्यात ॥ ॐ आ
कृष्णे० ॥ १ ॥ त्रातारमिंद्र० ॥ २ ॥ आदित्यैरा० ॥ ३ ॥ श्रीश्चंतेल० ॥ ४ ॥ सू
र्यैन्द्रेन्द्राणीभुवनेश्वरीदेवताभ्यइमंसदीपमाषभक्तबलिंस० ॥ भोभोःसूर्यइंद्रइंद्राणी
भुवनेश्वरीदेवताइमंबलिंगृह्णीत ममसकुटंब०आयुःकर्त्र्यःक्षेम० अनेनबलि०सूर्यइं
द्रइन्द्राणीभुवनेश्वरीदे०प्रीयन्ताम् ॥ अथक्षेत्रपालमहाबलिः॥ एकस्मिन्वंशपात्रेकुशा
नास्तीर्यतदुपरिआहारचतुर्गुणंद्विगुणंवामाषभक्तदध्योदनंजलपात्रंचनिधायहरिद्राकुं
कुमादिपताकायुतंकृत्वा ॥ अद्यपू० सकलारिष्टशांतिपूर्वकंप्रारीप्सितस्यकर्मणः
सांगतासिद्ध्यर्थंक्षेत्रपालपूजनंबलिदानंचकरिष्ये ॥ ॐ नुहिस्पश० ॥ १ ॥ इ
तिमंत्रेणक्षेत्रपालायनमःषोडशोचपरैःसंपूज्यप्रार्थयेत ॥ ॥ ॐनमःक्षेत्रपाल
स्त्वंभूतप्रेतगणैःसह ॥ पूजांबलिंगृहाणेमंसौम्योभवतुसर्वदा ॥ आयुरारोग्यंमेदे

हिनिर्विघ्नंकुरुसर्वदा ॥ १ ॥ ॐ नमोभगवन्क्षेत्रपालचित्रतुरंगवाहनसर्वभूतप्रेत
पिशाचशाकिनीडाकिनीवेतालादिपरिवृतदध्योदनप्रियसकलशक्तिसहितइमांपूजां
गृहाणअनयापूजयाक्षेत्रपालःप्रीयताम् ॥ ततोबलिदानम् ॥ ॥ क्षेत्रपालायसांगायभू
तप्रेतपिशाचशाकिनीडाकिनीवेतालादिपरिवारयुतायसायुधायसशक्तिकायसवाह
नायइमंसदीपमाषभक्तबलिंसमर्पयामि ॥ भोभोःक्षेत्रपालसर्वतोदिशंरक्षबलिंभ
क्षममसकुटुंबस्याभ्युदयंकुरु आयुःकर्ताक्षेमकर्ताशांतिकर्तापुष्टिकर्तातुष्टिकर्तानिर्वि
घ्नकर्तावरदोभव ॥ अनेनबलिदानेनक्षेत्रपालःप्रीयताम् ॥ अनवेक्ष्यमाणेनदुर्ब्राह्मणेन
बलिंनीत्वाचतुष्पथेनिक्षेपयेत् ॥ ॥ यस्यवेदश्चवेदीचविच्छिद्येतेत्रिपूरुषम् ॥ सवैदु
ब्राह्मणोज्ञेयः सर्वकर्मसुनिंदितइतिस्मृतौ ॥ ततोयजमानस्तस्यपृष्ठतोद्वारपर्यंतंगत्वा

जलंक्षिपेद्धिंकारेतिमंत्रेण ॥ ॐ हिंकारायस्वाहाहिंकृतायस्वाहाक्रन्दतेस्वाहांवक्रन्दा
यस्वाहाप्रोथतेस्वाहांप्रप्रोथायस्वाहांगन्धायस्वाहांघ्रातायस्वाहानिविष्टायस्वाहोपं
विष्टायस्वाहासन्दितायस्वाहावल्गंतेस्वाहासीनायस्वाहाशयानायस्वाहास्वपंते
स्वाहाजाग्रंतेस्वाहाकूजंतेस्वाहाप्रबुद्धायस्वाहांविजृम्भंमाणायस्वाहाविचृत्तायस्वा
हासंहानायस्वाहोपंस्थितायस्वाहायनायस्वाहाप्रायंणायस्वाहा ॥ १ ॥ यज
मानः पाणिपादंप्रक्षाल्याचम्यपूर्णाहुतिहोमंकुर्यात् ॥ ॥ अद्यपू० कृतस्यकर्मणः
सांगतासिद्ध्यर्थंवसोर्द्धारासमन्वितंपूर्णाहुतिहोमंकरिष्ये ॥ ततःपात्रांतरेस्रुवेणचतु
र्गृहीतमाज्यंद्वादशवारंगृहीत्वापात्रोपरिसमिधंधृत्वावस्त्रफलतांबूलचंदनमाल्यादि
भिरलंकृत्यगृहीत्वापात्रंस्रुगुपरिनिधायधृत्वोभयपाणिभ्यांयजमानस्तिष्ठेत् ॥ ॥

तत्रमंत्राः ॥ ॥ ॐ समुद्रादूर्म्मिर्मधुमाँ२ऽउदारदुपाꣳशुनासमंमृतत्वमानट् ॥
घृतस्यनामगुह्यंयदस्तिजिह्वादेवानाममृतस्यनाभिः ॥ १ ॥ वयन्नामप्रब्रवामाघृ
तस्यास्मिन्यज्ञेधारयामानमोभिः ॥ उपब्रह्माशृणवच्छस्यमानञ्चतुःशृंगोवमीद्गौर
ऽएतत् ॥ २ ॥ चत्वारिशृंगात्रयोऽअस्यपादाद्वेशीर्षेसप्तहस्तासोऽअस्य ॥ त्रिधाब
द्धोवृषभोरोरवीतिमहोदेवोमर्त्याँ२ऽआविवेश ॥ ३ ॥ त्रिधाहितम्पणिभिर्गुह्यमा
नंगविदेवासोघृतमन्वविन्दन् ॥ इन्द्रऽएकꣳसूर्यऽएकञ्जजानवेनादेकꣳस्वधयानि
ष्टतक्षुः ॥ ४ ॥ एताऽअर्षन्तिहृद्यात्समुद्राच्छतव्रजारिपुणानावचक्षे ॥ घृतस्यधारा
ऽअभिचाकशीमिहिरण्ययोवेतसोमध्यऽआसाम् ॥ ५ ॥ सम्यक्स्रवन्तिसरितोन

धेनाऽअन्तर्हृदा मनसा पूयमानाः ॥ एतेऽअर्षन्त्यूर्म्मयो घृतस्य मृगाऽइव क्षिपणोरीष
माणाः ॥ ६ ॥ सिन्धोरिव प्राद्ध्वने शूघनासो वातप्रमियः पतयन्ति जिह्वाः ॥ घृत
स्य धाराऽअरुषो न वाजी काष्ठा भिन्दन्नूर्म्मिभिः पिन्वमानः ॥ ७ ॥ अभिप्रवन्त सम
नेव योषाः कल्याण्यः स्मयमानासोऽ अग्निम् ॥ घृतस्य धाराः समिधो नसन्त ताजु
षाणो हर्य्यति जातवेदाः ॥ ८ ॥ कन्याऽइव वहतुमेतवाऽउऽअञ्ज्यञ्जानाऽअभिचाकशी
मि ॥ यत्र सोमः सूयते यत्र यज्ञो घृतस्य धाराऽअभि तत्पवन्ते ॥ ९ ॥ अभ्यर्षत सुष्टुति
ङ्गव्यमाजिमस्मासु भद्रा द्रविणानि धत्त ॥ इमं यज्ञन्नयत देवता नो घृतस्य धारा मधु
मत्पवन्ते ॥ ॥ १० ॥ धामन्ते विश्वम्भुवनमधिश्रितमन्तः समुद्रे हृद्यन्तरायुषि ॥ अ

पामनीकेसमिथेयऽआभृतस्तमस्यामुमधुमंतंतऽऊर्म्मिमम् ॥ ११ ॥ पुनस्त्वादित्या
रुद्रावसवःसमिन्धताम्पुनर्ब्रह्माणोवसुनीथयज्ञैः ॥ घृतेनत्वन्तन्वँवर्धयस्वसत्याः सं
न्तुयजमानस्यकामाः ॥ १२ ॥ सप्ततेऽअग्नेसमिधःसप्तजिह्वाःसप्तऽऋषयःसप्तधामं
प्रियाणि ॥ सप्तहोत्राःसप्तधात्वायजन्तिसप्तयोनीरापृणस्वघृतेनस्वाहा ॥ १३ ॥
पूर्णादर्विपरापत० ॥ १४ ॥ अथप्रातरहुतेप्राहुतेवायदरथाःकामयेतसोस्याऽअनि
रसितायैकुंभ्यैदर्व्योपहन्तिपूर्णादर्विपरापतसुपूर्णापुनरापत ॥ वस्नेवविक्रीणावहाऽ
इषमूर्जंशतक्रतोस्वाहा ॥ १ ॥ इदमग्नयेवैश्वानरायवसुरुद्रादित्येभ्यःशतक्रतवेस
प्तवतेअग्नयेअद्भ्यश्चनमम ॥ ॥ ततोवसोर्द्धारांजुहुयात् ॥ ॥ तत्रमंत्राः ॥ ॥ ॐ

सप्ततेअग्नेसमिधः० ॥१॥ शुक्रज्योतिश्चचित्रज्योतिश्चसत्यज्योतिश्चज्योतिष्माँश्च॥
शुक्रश्चऽऋतपाश्चात्यंहाः ॥ २ ॥ ईदृङ्चान्यादृङ्चसदृङ्प्रतिसदृङ् ॥ मितश्चसम्मि
तश्चसभराः ॥ ३ ॥ ऋतश्चसत्यश्चध्रुवश्चधरुणश्च ॥ धर्त्ताचविधर्त्ताचविधारयः ॥
॥ ४ ॥ ऋतजिच्चसत्यजिच्चसेनजिच्चसुषेणश्च ॥ अन्तिमित्रश्चदूरेऽअमित्रश्चगणः ॥
॥ ५ ॥ ईदृक्षासऽएतादृक्षासऊषुणःसदृक्षासःप्रतिसदृक्षासएतन ॥ मितासश्चस
म्मितासोनोऽअद्यसभरसोमरुतोयज्ञेऽअस्मिन् ॥ ६ ॥ स्वतवाँश्चप्रघासीचसान्तप
नश्चगृहमेधीच ॥ क्रीडीचशाकीचोज्जेषि ॥ ७ ॥ इन्द्रन्दैवीर्विशोमरुतोनुवर्त्मानोभ
वन्यथेन्द्रन्दैवीर्विशोमरुतोनुवर्त्मानोभवन् ॥ एवमिमन्यजमानन्दैवीश्चविशोमानु

षीश्वानुंवर्त्मानोभवन्तु ॥ ८ ॥ इमथ्ठंस्तनमूर्जस्वन्तन्धयापाम्प्रपीनमग्नेसरिसस्य 

 मध्ये ॥ उत्सुंञ्जुषस्वमधुमन्तमर्वन्त्समुद्रियठंसदनमाविशस्व ॥ ९ ॥ घृतम्मिमि

क्षेघृतमस्य० ॥ १० ॥ ॥ ब्राह्मणम् ॥ ॥ अथातोवसोर्धाराञ्जुहोति ॥ अत्रैषसुवो

ग्निःसंस्कृतःसएषोत्रवसुस्तुतस्मैदेवाऽएतान्धाराम्प्रागृह्णँस्तयैनमप्रीणँस्तद्यदेतस्मैवस

वऽएतान्धाराम्प्रागृह्णँस्तस्मादेनाम्वसोर्द्धारेत्याचक्षतेतयेवास्माऽ अयमेतान्धाराम्प्र

गृह्णातितथैनंप्रीणाति ॥ १ ॥ यद्वेवैताम्वसोर्धाराञ्जुहोति ॥ अभिषेकऽएवा

स्यैषऽएतद्वाऽएनन्देवाः ॥ सर्वंकृत्स्नठंसंस्कृत्याथैनमेतैः कामैरभिषिंचत्येतयावसो 

र्द्धारयातथैनमयमेतत्सर्वंकृत्स्नठंसंस्कृत्याथैनमेतैः कामैरभिषिंचत्येतयावसोर्द्धा

रयाज्येनपञ्चगृहीतेनौदुम्बर्यास्रुचातस्योक्तोबन्धुः ॥ २ ॥ वैश्वानरꣳहुत्वा ॥ शि
रोवैवैश्वानरः शीर्ष्णोवाऽअन्नमद्यतेथोशीर्षतोवाऽअभिषिञ्च्यमानाभिषिञ्च्यतेमा
रुतान्हुत्वाप्प्राणावैमारुताः प्राणैरुवाऽअन्नमद्यतेथोप्राणेषुवाऽअभिषिञ्च्यमानोभि
षिञ्च्यते ॥ ३ ॥ तद्वाऽअरण्येनूच्योवाग्वाऽ अरण्येनूच्योवाचोवाऽअन्नमद्यते
थोवाचावाऽअभिषिञ्च्यमानोभिषिञ्च्यतेतदेतत्सर्वम्वैसर्वेह्येतेकामाःसैषावसु
मयीधारायथाक्षीरसवासर्पिषोवैवमारम्भायैवेयमाद्याहुतिर्हूयतेतद्यदेषावसुमयी
धारातस्मादेनाम्वसोर्द्धारेत्याचक्षते ॥ ४ ॥ सऽआहाऽइदञ्चमऽइदञ्चम
ऽइत्यन्नेनचत्वाप्रीणाम्यन्नेनचान्नेनचत्वाभिषिंचाम्यन्नेनचेत्येतदथोऽइदंञ्चमेदेहीदञ्चम

संं॰ ऽइतिसायद्वैषाधाराग्निम्प्राप्नुयादथैतद्यजुःप्रतिपद्यते ॥ ५ ॥ एतद्वाऽएनन्देवाः ॥ भा॰
॥१०॥ एतन्नानेनप्रीत्यतैःकामैरभिषिञ्चत्येतयावसोर्द्धारयाथैनमेतान्कामानयाचन्तते
भ्यऽइष्टःप्रीतोभिषिक्तऽएतान्कामान्प्रयच्छन्तथैवैनमेतदेवतन्नानेनप्रीत्येतैः कामैर
भिषिञ्चत्येतयावसोर्द्धारयाथैनमेतान्कामान्याचक्षतेतस्माऽइष्टःप्रीतोभिषिक्तऽएता
न्कामान्प्रयतिद्वौद्वौकामौसंयुनक्त्युव्यवच्छेदाथस्रुच्यौव्योमाकसौसयजुन्देवन्यज्ञे
नकल्पतामिति ॥ ६ ॥ एतद्वैदेवाऽअब्रुवन् ॥ केनेमान्कामान्प्रतिगृहिष्यामऽइत्या
त्मनेनैवेत्यब्रुवन्यज्ञोवैदेवानामात्मायज्ञऽउऽएवयजमानस्यसयदाहयेनकल्पतामि
त्यात्मनामेकल्पतामित्येवैतदाह ॥ ७ ॥ द्वादशसुकल्पयति ॥ द्वादशमासाःसंव ॥१०॥

त्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणात्यथो तावतैवैन
मेतदन्नेनाभिषिञ्चति चतुर्दश सुकल्पयत्यष्टासु कल्पयति दश सुकल्पयति त्रयोदश
सुकल्पयति ॥ ८ ॥ अथार्धेन्द्राणि जुहोति ॥ सर्वमेतद्यदर्धेन्द्राणि सर्वेणैवैनमेतत्प्री
णात्यथो सर्वेणैवैनमेतदभिषिञ्चति ॥ ९ ॥ अथ ग्रहाञ्जुहोति ॥ यज्ञो वै ग्रहा यज्ञेनैवैनमे
तदन्नेन प्रीणात्यथो यज्ञेनैवैनमेतदन्नेनाभिषिञ्चति ॥ १० ॥ अथैतान्यज्ञक्रतूञ्जुहोति
॥ अग्निश्च मे घर्मश्च म इत्येतैरेवैनमेतद्यज्ञक्रतुभिः प्रीणात्यथो एतैरेवैनमेतद्यज्ञक्रतु
भिरभिषिञ्चति ॥ ११ ॥ अथायुष्टोमाञ्जुहोति ॥ स हैष यज्ञ उवाच नग्नतायै वै बिभे
मीति का ते नग्नतेत्यभित एव मा परिस्तृणीयुरिति तस्मादेतदग्निमभितः परिस्तृणन्ति
२६

तृष्णायावैबिभेमीतिकातेतृप्तिरितिब्राह्मणस्यैवतृप्तमनुतृप्येयमितितस्मात्सर्ठस्थि
तेयज्ञेब्राह्मणन्तर्प्पयीतवैब्रूयाद्यज्ञमेवैतत्तर्प्पयति ॥ १२ ॥ यत्कर्मणात्यरीरिचन्यद्वान्यू
नमिहाकरम् ॥ अग्निष्टत्स्विष्टकृद्विद्वान्स्विष्टर्ठसुहुतंकरोतुस्वाहा ॥ १३ ॥ ततस्त्र्यायु
षकरणम् ॥ श्रद्धांमेधांयशःप्रज्ञांविद्यांपुष्टिंश्रियंबलम् ॥ तेजआयुष्यमारोग्यंदेहिमेह
व्यवाहन ॥ १ ॥ ॐ त्र्यायुषञ्जमदग्नेःकश्यपस्यत्र्यायुषम् ॥ यद्देवेषुत्र्यायुषन्तन्नोऽ
अस्तुत्र्यायुषम् ॥ भस्मनाललाटेग्रीवायांदक्षिणेर्ठसेहृदिचत्र्यायुषमितिप्रतिमंत्रः ॥
ततःसंस्रवप्राशनम् ॥ पवित्राभ्यांमार्जनम् ॥ अग्नौपवित्रप्रतिपत्तिः ॥ ब्रह्मणेपूर्णपात्रदा ॥९१॥
नंप्रणीतोदकेन ॥ कृतस्यकर्मणः साङ्गतासिद्ध्यर्थंब्रह्मन्नइदंपूर्णपात्रंसदक्षिणाकंतुभ्य

महंसंप्रददे ॥ प्रतिगृह्यतामितियजमानोब्रूयात् ॥ देवस्यत्वेतिप्रतिगृह्णाति ॥ प्रणीताविमोकः ॥ आपः शिवेतिविमोकोदकंयजमानःस्वमूर्धानमभिषिञ्चति ॥ ॐ आपःशिवाःशिवतमाः शान्ताः शान्ततमास्तास्तेकृण्वन्तुभेषजम् ॥ १ ॥ ततः श्रेयःसंपादनम् ॥ तच्चैवम् ॥ आचार्यादयोवरणक्रमेणस्वस्वश्रेयोदानंकुर्युः ॥ ॥ अद्येत्यादि०कृतस्यसग्रहमखरजोदर्शनशांत्याख्यस्यकर्मणोयजमानायश्रेयोदानंकरिष्ये ॥ तत्रादौवचःप्रतिवचनम् ॥ शिवाआपःसंतु ॥ संतुशिवाआपः ॥ सौमनस्यमस्तु ॥ अस्तुसौमनस्यम् ॥ अक्षतंचारिष्टंचास्तु ॥ अस्त्वक्षतमरिष्टंच ॥ यजमानहस्तेगंधादिदानम् ॥ गंधाःपांतुसौमंगल्यंचास्तु ॥ अक्षताःपांतुआयुष्यमस्तु ॥ पुष्पाणिपांतुसौश्रियमस्तु ॥ यत्पापंरोगमशुभमकल्याणतद्दूरेप्रतिहतमस्तु ॥ यच्छ्रेयस्तदस्तु ॥ भवन्नियोगेनमयाअस्मिन्नारदोक्तसग्रहमखरजोदर्शनशांत्याख्येकर्मणियत्कृतमाचा

यत्वंतद्दुत्पन्नंश्रेयः ततअमुनासाक्षतेनसजलेनपूगीफलेनतुभ्यमहंसंप्रददे ॥ प्रतिगृह्य
तांप्रतिगृह्णामि ॥ तेनश्रेयसात्वंश्रेयोवान्भव ॥ भवामीतितेनवाच्यम् ॥ एवमेवब्रह्मा
दयश्चर्त्विजोवाजापकादयश्च ॥ यद्वाब्रह्मादयश्चर्त्विजोजापकाश्चआचार्यद्वाराश्रेयो
दानंकुर्युः ॥ तद्यथा ॥ भवन्नियोगेनमयाअस्मिन्सग्रहमखरजोदर्शनशांत्याख्येक
र्मणियत्कृतमाचार्यत्वंतथाचएभिर्ब्राह्मणैःसहयत्कृतंब्रह्मत्वंगाणपत्यं सादस्यं त
थाचयःकृतोहोमःयःकृतोजपः आचार्यत्वातब्रह्मत्वात्गाणपत्यात् सादस्यात् होमा
तजपातयद्दुत्पन्नंश्रेयः ततअमुनासाक्षतेनसजलेनपूगीफलेनतुभ्यमहंसंप्रददे ॥ ते
नश्रेयसात्वंश्रेयोवान्भव॥भवामीतितेनवाच्यम् ॥ततआचार्यादीनांगंधवस्त्रालंकारादि
भिर्यथाविभवंपूजनंकार्यम् ॥ दानानिच ॥ स्वर्णगोभूतिलान्दद्यात्सर्वदोषापनुत्तयेइ
ति ॥ ॥ तत्रस्वर्णदानमंत्रः ॥ हिरण्यगर्भसंभूतंसौवर्णंपीततैजसम् ॥ तस्यदानेनदेवे

शसर्वदोषान्निवारय ॥ १ ॥ इदंयथाशक्तिस्वर्णंवातन्निष्क्र० अमुकशर्म० नममेति ॥
गोदानमंत्रः ॥ यज्ञसाधनभूतायाविश्वस्याघौघनाशिनी ॥ विश्वरूपधरोदेवःप्रीयताम
नयागवा ॥ इमांगांवागोनिष्क्रयीभूतरजतमुद्राद्रव्यंरजोदर्शनशांतिसांगतासिद्ध्य
र्थमाचार्यायतुभ्यमहंसंप्रददे ॥ नममेति ॥ भूमिदानमंत्रः ॥ सर्वभूताश्रयाभूमिर्वरा
हेणसमुद्धृता ॥ अनंतसस्यफलदाअतःशांतिंप्रयच्छमे ॥ इदंभूमिदानंवातन्निष्क्रयीभू
तंयथाशक्तिरजतमुद्राद्रव्यंरजोद०सिद्ध्यर्थममुकशर्मणेब्रा० संप्रददे ॥ नममेति ॥
तिलपात्रदानमंत्रः ॥ तिलाःकाश्यपसंभूतास्तिलाःपापहराःस्मृताः ॥ तिलपात्रप्रदाने
नसर्वदोषोविनश्यतु ॥ इदंतिलपात्रंवातन्निष्क्र० अमुक० नममेति ॥ ॥ ततोहेम
कदलीदानम् ॥ तत्रमंत्रः ॥ सुपत्रेसुभगेदेविरंभेभास्करवल्लभे ॥ रक्षमांरजसोदोषा
द्दुष्टस्यास्य विगर्हितात् ॥ १ ॥ दानेनानेनमेदेवःसविताविश्वतोमुखः ॥ प्रीतोभवतु

मेसद्योदोषंहरतुदुष्करम् ॥ अनेनस्वर्णकदलीदानेन श्रीसूर्यःप्रीयताम् ॥ आचार्यत्वंम
हाभागसर्वदोषविनाशन ॥ दानस्यास्यप्रभावेणरजोदोषाच्चपाहिमाम् ॥ ॥ अथमूर्ति
दानम् ॥ देवदेवजगन्नाथजगतांकारणाव्यय ॥ मनोहरनमस्तुभ्यंभास्करःप्रीयतामि
ति ॥ इमाःसूर्यादिचतस्रोमूर्तयःसकलशाःसवस्त्राआचार्यायतुभ्यमहंसंप्रददे ॥ ॥
ततोग्रहकलशदेवताकलशानामुदकमेतस्मिन्पात्रेएकीकृत्यदूर्वापंचपल्लवैरुदङ्मुख
आचार्यस्तिष्ठन्चत्वारऋत्विजश्चसपत्नीकंयजमानंप्राङ्मुखमुपविष्टमभिषिंचेयुः ॥
॥ तत्रमंत्राः ॥ ॥ ॐ आपोहिष्ठा० ॥ १ ॥ ॥ योवःशिव० ॥ २ ॥ तस्माऽअरं० ॥
॥ ३ ॥ आपोऽअस्मान्मातरःशुन्धयन्तुघृतेननोघृतप्वःपुनन्तु ॥ विश्वꣳहिरिप्रम्प्र
वहन्तुदेवीरुदिदाभ्यःशुचिरापूतऽएमि ॥ ४ ॥ इदमापःप्रवहतावद्यञ्चमलञ्चयत ॥

यच्चाभिद्रुद्रोहान्नृतंन्यच्चशेपेऽअभीरुणम् ॥ आपोमातस्मादेनसःपवमानश्चमुञ्चतु ॥
॥ ५ ॥ स्तोकानामिन्दुम्प्रतिशूरऽइन्द्रोवृषायमाणोवृषभस्तुराषाट् ॥ घृतप्रुषामनसा
मोदमानाःस्वाहादेवाऽअमृतामादयन्ताम् ॥ ६ ॥ आयात्विन्द्रोवसऽउपनऽइहस्तु
तःसधमादस्तुशूरः ॥ वावृधानस्तविषीर्यस्यपूर्वीर्द्यौर्नक्षत्रमभिभूतिपुष्यात् ॥ ७ ॥
आनऽइन्द्रोदूरादानऽआसादभिष्टकृदवसेयासदुग्रः ॥ ओजिष्ठेभिर्नृपतिर्वज्रबाहुःस
ङ्गेसमत्सुतुर्वणिःपृतन्यून् ॥ ८ ॥ आनऽइंद्रोहरिभिर्यात्वच्छार्वाचीनोवसेराधसेच ॥
तिष्ठातिवज्रीमघवाविरप्शीमंयज्ञमनुनोवाजसातौ ॥ ९ ॥ त्रातारमिन्द्र० ॥ १० ॥
इमम्मेवरुणश्रुधीहवमद्याचमृडय ॥ त्वामवस्युराचके ॥ ११ ॥ तत्वायामि० ॥ १२ ॥

त्वन्नोऽअग्ने० ॥ १३ ॥ सत्वन्नोऽअग्ने॰ १४॥ उदुत्तमम्वरुण० ॥ १५॥ वरुणस्योत्तम्भं०
॥ १६ ॥ प्रातरग्निम्प्रातरिन्द्रॐहवामहेप्रातर्म्मित्रावरुणाप्रातरश्विना ॥ प्रातर्भगम्पूष
णम्ब्रह्मणस्पतिम्प्रातःसोममुतरुद्रॐहुवेम ॥ १७ ॥ भगप्रणेतर्भगसत्यराधोभगेमान्धि
यमुदवाददन्नः ॥ भगप्रनोजनयगोभिरश्वैर्भगप्रनृभिर्न्नृवन्तःस्याम ॥ १८॥ समुद्रायं
त्वावातायस्वाहासरितायत्वावातायस्वाहा ॥ अनाधृष्यायत्वावातायस्वाहाप्रतिधृ
ष्यायत्वावातायस्वाहा ॥ अवस्यवेत्वावातायस्वाहाशिमिदायत्वावातायस्वाहा ॥
आप्यायस्व० ॥ २० ॥ पञ्चनद्यःसरस्वतीमपियन्तिसस्रोतसः ॥ सरस्वतीतुपञ्चधासो
देशेभवत्सरित ॥ २१ ॥ पुनन्तुमादेवजनाः० ॥ २२ ॥ पवित्रेणपुनीहिमाशुक्रेणदे ॥९४॥

वदीर्घंत ॥ अग्नेक्रत्वाक्रतुंरनु ॥ २३ ॥ यत्तेंपवित्रंमार्चिष्यग्नेवितंतमन्तरा ॥ ब्रह्मते
नंपुनातुमा ॥ २४ ॥ पवंमानः सोऽअद्यनंःपवित्रेंणविचंर्षणिः ॥ यःपोतासपुंनातु
मा ॥ २५ ॥ उभाभ्यांन्देवसवितःपवित्रेंणसवेनंच ॥ माम्पुंनीहिविश्वतः ॥ २६ ॥
वैश्वदेवीपुंनतीदेव्यागाद्यस्यांमिमाबह्वयस्तन्वोवीतपृंष्ठाः ॥ तयामदंन्तःसधमादें
षुवयथंस्यांमपतयोरयींणाम् ॥ २७ ॥ चित्पतिंर्म्मापुनातुवाक्पतिंर्मापुनातुदेवोमांस
वितापुनात्वच्छिद्रेणपवित्रेंणसूर्यस्यरश्मिभिः ॥ तस्यंतेपंवित्रपतेपवित्रंपूतस्ययत्का
मःपुनेतच्छंकेयम् ॥ २८ ॥ शिरोंमेश्रीर्यशोमुखन्त्विषिःकेशांश्चश्मश्रूणि ॥ राजांमे
प्राणोऽअमृतंर्ठसम्राट्चक्षुर्विराट्श्रोत्रम् ॥ २९ ॥ जिह्वामेंभद्रंवाङ्महोमनोंमन्युःस्वरा

सं० ड्भामह॑ ॥ मोदाःप्रमोदाऽअङ्गुलीरङ्गानिमित्रम्मेसहः॥३०॥बाहूमेबलमिन्द्रियर्ठहस्तौ मा०
॥९८॥ मेकर्म्मवीर्यम् ॥ आत्माक्षत्रमुरोमम ॥ ३१ ॥ पृष्ठिर्म्मेराष्ट्रमुदरमर्ठसौग्रीवाश्चश्रो
णीं ॥ ऊरूऽअरत्नीजानुनीविशोमेङ्गानिसर्वतः ॥ ३२ ॥ नाभिर्म्मेचित्तंविज्ञानम्पा
युर्म्मेपचितिर्भसत ॥ आनन्दनन्दावाण्डौमेभगःसौभाग्यम्पसः ॥ जङ्घाभ्याम्प
द्भ्यान्धर्म्मोस्मिविशिराजाप्रतिष्ठितः ॥ ३३ ॥ पर्यःपृथि० ॥ ३४ ॥ देवस्य०सरस्व०
यन्त्रियै०म्यसौ ॥ ३५ ॥ देवस्य० सरस्व० यन्त्रेणाग्नेः०चामि ॥ ३६ ॥ देवस्य० अ
श्विनौर्भै० ॥ ३७ ॥ विश्वानिदेव० ॥ ३८ ॥ धामच्छदग्नि० ॥ ३९ ॥ त्वँयविष्ठ०॥ ॥९८॥
॥ ४० ॥ अन्नपते० ॥ ४१ ॥ पालाशाम्भ० ॥ ४२ ॥ औदुम्बरं० ॥ ४३ ॥ नैय्यग्रो

घपादं० ॥ ४४ ॥ आश्वत्थं० ॥ ४५ ॥ यद्देवकल्पाञ्जुहो० ॥ ४६ ॥ द्यौःशांतिरन्त
रिं० ॥ ४७ ॥ यतोयतःसमु० ॥ ४८ ॥ ॥ अथपुराणोक्तमंत्राः ॥ ॥सुरास्त्वामभिषिं
चंतुब्रह्मविष्णुमहेश्वराः ॥ वासुदेवोजगन्नाथस्तथासंकर्षणोविभुः ॥ १ ॥ प्रद्युम्नश्चा
निरुद्धश्चभवन्तुविजयायते ॥ आखंडलोग्निर्भगवान्यमोवैनैर्ऋतस्तथा ॥ २ ॥ वरुणः
पवनश्चैवधनाध्यक्षस्तथाशिवः ॥ ब्रह्मणासहिताःसर्वेदिक्पालाः पांतुतेसदा ॥ ३ ॥
कीर्तिर्लक्ष्मीर्धृतिर्मेधापुष्टिः श्रद्धाक्रियामतिः ॥ बुद्धिर्लज्जावपुः शांतिस्तुष्टिःकांतिस्तु
मातरः ॥ ४ ॥ एतास्त्वामभिषिंचंतुदेवपत्न्यः समागताः ॥ आदित्यश्चंद्रमाभौम
बुधजीवसितार्कजाः ॥ ५ ॥ ग्रहास्त्वामभिषिंचंतुराहुः केतुश्चतर्पिताः ॥ देवदानवगंध
र्वायक्षराक्षसपन्नगाः ॥ ६ ॥ ऋषयोमानवागावोदेवमातरएवच ॥देवपत्न्योद्रुमानागा

दैत्याश्चाप्सरसांगणाः ॥ ७ ॥ अस्त्राणिसर्वशस्त्राणिराजानोवाहनानिच ॥ औषधा
निचरत्नानिकालस्यावयवाश्चये ॥ ८ ॥ सरितःसागराः शैलास्तीर्थानिजलदानदाः ॥
एतेत्वामभिषिंचंतुसर्वकामार्थसिद्धये ॥ ९ ॥ सर्वेषांवा० ॥ ४९ ॥ अमृताभिषेको
स्तु ॥ एवमभिषेकानंतरंसर्वौषधीरनुलिप्यशुद्धोदकेनस्नात्वाउभयोःस्नानवस्त्रत्या
गः ॥ वस्त्राण्याचार्यायदद्यात् ॥ शुक्लमाल्यांबरधरोधृतमंगलतिलकः सपत्नीको
यजमानःस्वासनेउपविश्याचम्याज्यावलोकनंकुर्यात् ॥ ॐ रूपेणवोरूपमभ्यागां
न्तुथोवोविश्ववेदाविभजतु ॥ ऋतस्यपथाप्रेतंचन्द्रदक्षिणाविस्वःपश्यव्यन्त
रिक्षंयतस्वसदस्यैः ॥ १ ॥ रूपठंरूपम्प्रतिरूपोबभूवतदस्यरूपंप्रतिचक्षणा

१ स्नानवस्त्रमाचार्यायदद्यादितिमदनरत्ने ।

य ॥ इन्द्रोमायाभिःपुरुरूपऽएतेयुक्ताह्यस्यहरयःशतादशेत्ययंवैहरयोयंवैदशचस
हस्राणिबहूनिचनन्तानितदेतद्ब्रह्मपूर्वमनमबाह्यजमनुः सर्वानुशासनम् ॥ १ ॥ इदमाज्य
पात्रमाचार्यायतुभ्यमहंसंप्रददे ॥ ततोब्राह्मणभोजनसंकल्पः ॥ कृतस्यकर्मणः
सांगतासिद्ध्यर्थमाचार्यायदक्षिणांदद्यात् ॥ ऋत्विगादिभ्योयथाशक्तिदक्षिणां
दत्त्वा अन्येभ्योब्राह्मणेभ्योयथाशक्तिभूयसींदक्षिणांदातुमहमुत्सृजेइतिदत्त्वा ॥ ते
षामाशिषोगृह्णीयात् ॥ ततोदेवताग्निविसर्जनम् ॥ यांतुग्रहगणाः सर्वेस्वशक्त्यापू
जितामया ॥ इष्टकामप्रसिद्ध्यर्थंपुनरागमनायच ॥ १ ॥ ॐ उत्तिष्ठब्रह्मणस्प
तेदेवयन्तंस्त्वेमहे ॥ उपप्रयंन्तुमरुतंःसुदानवऽइन्द्रंप्राशूर्भवासचां ॥ १ ॥ आवाहि
तदेवताःस्वस्थानेगच्छत ॥ गच्छगच्छसुरश्रेष्ठस्वस्थानेपरमेश्वर ॥ यत्रब्रह्मादयोदे

वास्तत्रगच्छहुताशन ॥ १ ॥ ॐ यज्ञंयज्ञंगच्छयज्ञपतिंगच्छस्वांयोनिंगच्छस्वाहा
एषतेयज्ञोयज्ञपतेसहसूक्तवाकःसर्ववीरस्तञ्जुषस्वस्वाहा ॥ १ ॥ यज्ञनारायण
स्वस्थानेगच्छ ॥ मयाअमुकमासपक्षतिथ्यादियथाकालेयथादेशेयथाशक्तिद्रव्या
दिकेनयत्कृतंनारदोक्तरजोदर्शनशांत्याख्यंकर्मतत्कालहीनंभक्तिहीनंश्रद्धाहीनंवा
ब्राह्मणानांवचनात् श्रीसूर्याद्यावाहितदेवताप्रसादात्सर्वंपरिपूर्णमस्त्वितिभवंतोब्रुवंतु
॥ अस्तुपरिपूर्णमितिब्राह्मणाब्रूयुः ॥ प्रमादात्कुर्वतांकर्मप्रच्यवेताध्वरेषुयत् ॥ स्मर
णादेवतद्विष्णोःसंपूर्णंस्यादितिश्रुतिः ॥ १ ॥ यस्यस्मृत्याचनामोक्त्यातपोयज्ञक्रि
यादिषु ॥ न्यूनंसंपूर्णतांयातिसद्योवंदेतमच्युतम् ॥ २ ॥ ॐविष्णवेनमोविष्णवेनमो
विष्णवेनमः ॥ ३ ॥ एवंयःकुरुतेशांतिंनारदोक्तप्रमाणतः ॥ तदनिष्टंतुसकलंसद्यए

वविनश्यतीति ॥ इतिसंस्कारभास्करेसग्रहमखनारदोक्तरजोदर्शनशांतिप्रयोगः ॥
॥ ॥ अथ गर्भाधानसंस्कारनिर्णयः॥ ॥ गर्भाधानसीमंतोन्नयनेतुस्त्रीसंस्का
रत्वात्प्रतिगर्भेनावर्तेते ॥ किंतुप्रथमगर्भेएवकार्ये ॥ इतिधर्मसिंधौ ॥ तत्रप्रथमर
जोदर्शनेत्रयोदशदोषाः तेषांफलानिचज्योतिःशास्त्रेउक्तानि ॥ अथप्रथमर्तौशिष्टा
चारात्कर्तव्यमाहसंस्कारकौस्तुभेकश्यपः ॥ प्रथमर्तौतुपुष्पिण्याःपतिपुत्रवती
स्त्रियः ॥ अक्षतैरासनंकुर्युस्तस्मिंस्तामुपवेशयेत् ॥ हरिद्रापुष्पगंधादीन्दद्यात्तांबू
लकंस्रजम् ॥ आशिषोवाचयेयुस्ताः पतिपुत्रवतीभव॥दीपैर्नीराजनंकुर्युःसदीपेवास
येद्गृहे ॥ ताःसर्वाःपूजयेत्पश्चाद्गंधपुष्पाक्षतादिभिः ॥ लवणापूपमुद्गादिदद्यात्ताभ्यः
स्वशक्तितइति ॥ ॥ सर्वर्तुसाधारणविशेषमाह वसिष्ठः ॥ ॥ त्रिरात्रंरज
स्वलाऽशुचिर्भवति ॥ साज्यान्नंभुंजीयान्नाप्सुस्नायादधःशयीतनदिवास्वप्यान्ना

ग्निस्पृशेन्नरज्ज्वादिस्पृशेन्नदंतान्धावयेन्नपुष्पाद्यलंकरणंनग्रहान्निरीक्षेतनाश्लीलंकिं 
चिदाचरेन्ननूतनजीर्णखर्परेणजलंपिबेन्नांजलिनापिबेन्नलोहेनायसेन ॥ ताम्रेणविज्ञा
यतआहारेगोरसंवर्जयेदिति ॥ ॥ अथरजस्वलाशुद्धिप्रकारः ॥ ॥ स्मृत्यर्थ
सारे ॥ रजस्वलाषष्टिमृत्तिकाभिःशौचंकृत्वामलंप्रक्षाल्यदंतधावनपूर्वकं संगवेस
शिराःस्नायादिति ॥ ॥ अथगर्भाधानंकालः ॥ पारस्करः ॥ तामुदुह्ययथर्तुप्रवे
शनम् ॥ तांवधूंपूर्वोक्तविधिनाउदुह्यविवाहयित्वायथर्तुंऋतावृतौप्रवेशनमभिगमनंकु
र्यादित्यर्थः ॥ याज्ञवल्क्यः ॥ षोडशर्तुनिशाःस्त्रीणांतस्मिन्युग्मासुसंविशेत ॥ ब्र
ह्मचार्येवपर्वाण्याद्याश्चतस्रश्चवर्जयेत् ॥ स्त्रीणांगर्भधारणयोग्यावस्थोपलक्षितः का
लऋतुः ॥ सचरजोदर्शनदिवसादारभ्यषोडशाहोरात्रम् ॥ तस्मिन्नृतौयुग्मासुसमासु 
रात्रिषु ॥ रात्रिग्रहणाद्दिवसप्रतिषेधः संविशेद्गच्छेत् ॥ पुत्रार्थम् ॥ युग्मास्वितिब

हुवचनंसमुच्चयार्थमतश्चैकस्मिन्नपिऋतौअप्रतिषिद्धासुयुग्मासुसर्वासुरात्रिषुगच्छेत् ॥
एवंगच्छन्ब्रह्मचार्येवभवति ॥ अतोयत्रब्रह्मचर्यंश्राद्धादिषुचोदितंतत्रगच्छतो
पिनब्रह्मचर्यस्खलनदोषोस्ति ॥ किंचपर्वाण्याद्याश्चतस्रश्चवर्जयेत्पर्वाणीतिबहुवच
नावगमादष्टमीचतुर्दश्योर्ग्रहणम् ॥ अत्रसर्वासुयुग्मासुरात्रिषुगमनमावश्यकम् ॥ त
त्रैकस्यांरात्रौसकृदेवकार्यम् ॥ इदंचर्तौगमनमन्यकालेप्रतिबंधादिनाश्राद्धैका
दश्यादावपिनकार्यम् ॥ यत्तुहेमाद्रौचरहस्ये ॥ दिवाजन्मदिनेचैवनकुर्यान्मैथुनंव्रती ॥
श्राद्धंदत्त्वाचभुक्त्वाचश्रेयोर्थीनचपर्वसुइतितदन्तृतुविषयम् ॥ तथागृह्यपरिशिष्टे ॥ य
दिदिवामैथुनंव्रजेत्क्लीबाल्पवीर्याऽल्पायुषश्चप्रसूयन्ते तस्माद्देतद्वर्जयेदिति ॥
स्त्रीणांयौगपद्येतुऋतौगमनक्रममाह ॥ यौगपद्येतुतीर्थानांविप्रादिक्रमतोव्रजेत् ॥
रक्षणार्थमपुत्राणांग्रहणंक्रमशोपिवेति ॥ तीर्थमृतुः ॥ विप्रादिवर्णक्रमेणपात्रविवा

हत्क्रमश्चेति ॥ ॥ अगमनेदोषमाह ॥ पराशरः ॥ ऋतुस्नातांतुयोभार्यांसन्निधौनो 
पगच्छति ॥ घोरायांब्रह्महत्यायांयुज्यतेनात्रसंशयइति ॥ अस्यापवादमाहमदन
 रत्नेव्यासः ॥ व्याधितोबंधनस्थोवाप्रवासेष्वथपर्वसु ॥ ऋतुकालेपिनारीणांब्रह्मह
त्याप्रमुच्यतइति ॥ गर्भाधानाकरणेप्रायश्चित्तमाह ॥ पारिजाते आश्वलायनः ॥ ग
र्भाधानस्याकरणात्तस्यांजातस्तुदुष्यति ॥ अकृत्वागांद्विजेदत्त्वाकुर्यात्पुंसवनंपतिः ॥
अकृत्वेत्यनंतरमपिशब्दोअध्याहारार्थः ॥ प्रायश्चित्तेकृतेपश्चादतीतमपिकर्मवै ॥ का
र्यमित्येकआचार्यानेत्यन्येतुविपश्चितइतिवचनसंवादात ॥ गांद्विजायदत्त्वाअकृत्वा
गर्भाधानंपतिः पुंसवनंकुर्यादितिउत्तरार्धार्थः ॥ इतिसंस्काररत्नमालायाम् ॥ ऋतौग
मनेपराशरः ॥ ऋतौतुगर्भशंकित्वात्स्नानंमैथुनिनः स्मृतम् ॥ अनृतौतुयदागच्छे 
च्छौचंमूत्रपुरीषवत् ॥ स्त्रियास्तुनस्नानम् ॥ उभावप्यशुचीस्यातांदंपतीशयनंगतौ ॥

शयनादुत्थितानारीशुचिःस्यादशुचिःपुमानितिवृद्धशातातपोक्तेः ॥ ॥ प्रथमतौपूर्वं स्त्रीगमनंनकायमित्याहाश्वलायनः ॥ प्राग्रजोदशनात्पत्नींनेयाद्गत्वापतत्यधः ॥ व्यर्थीकारेणशुक्रस्यब्रह्महत्यामवाप्नुयादिति ॥ ॥ आद्यर्तौगर्भाधानंचमलमासशुक्रास्तादावपिकार्यम् ॥ उत्सवेषुचसर्वेषुसीमंतेऋतुजन्मसु ॥ सुरासुरगुरोश्चैवमौढ्यदोषो नविद्यतेइतिनिबंधेभृगूक्तेः ॥ दिनशुद्धिस्तुज्योतिःशास्त्रेउक्ता ॥ ॥ अथगर्भाधानप्रयोगः ॥ ॥ तच्चऋतुदर्शनमारभ्यआद्यरात्रिचतुष्कंपर्वादिनिषिद्धदिनानिचवर्जयित्वा ॥ आद्यर्तुनियतेचगुरुशुक्रास्तमलमासादिदोषोनास्ति ॥ तच्चज्योतिःशास्त्रोक्तशुभेदिनेशुभकालेकार्यम् ॥ तत्रयुग्मासुरात्रिषुपुत्रः अयुग्मासुकन्याजायतेइति ॥ तत्रायंक्रमः ॥ गर्भाख्यमातृनांदीयजतिविधुबलंप्रातःसुस्नापयेत्तांदोषेशांतिप्रकुर्याद्वसनसुफलधान्यार्पणंसूर्यवीक्ष्य ॥ यत्तद्रात्रौस्वभार्यांरमयतिकुशलोबाह्यरत्यासु

सं०

॥१००॥ ताप्त्यैंगत्वातांनागरेणप्रतिकुसुममुरोलंभनंस्यात्तुयत्ते ॥ १ ॥ अथर्तुमतीस्त्रीनूतनवस्त्रं कंचुकींचपरिधायमाल्याभरणैरलंकृत्यशुभासनेप्राङ्मुखमुपविशेत् ॥ ततः पतिपु त्राद्यविच्छिन्नसंतत्यन्विताभिः कुलवृद्धसुमंगलस्त्रीभिर्गोधूमैर्नारिकेलादिनानाफलै स्तत्पल्लवैश्चप्रक्षेपणंवृद्धाचारंयाःफलिनीरितिमंत्रेणकारयेत् ॥ आचम्यप्राणानाय म्यदेशकालौसंकीर्त्यअस्याः ममभार्यायाःप्रथमगर्भातिशयद्वाराअस्यांजनिष्यमा णसर्वगर्भाणांबीजगर्भसमुद्भवैनोनिबर्हणार्थंगर्भाधानाख्यसंस्कारकर्माहंकरिष्ये इ तिकर्तानिशिकर्मणोमंत्राभिज्ञानेसतिसूर्यावलोकनोत्तरंविप्राशिषोगृहीत्वामातृविस र्जनादिकंसंपाद्यरात्राववभिगमनादिकंकुर्यात ॥ अथमंत्राणामज्ञानेविशेषः ॥ अस्याः ममभार्यायाबी०निबर्हणार्थंगर्भाधानसंस्कारनिशिकर्मणांदिवापकृष्यमाणसद्योमंत्र जपपूर्वकंगर्भाधानाख्यंकर्माहंकरिष्येइतिसूर्यावलोकनोत्तरंसर्वान्मंत्रान्पठित्वामातृ

भा०

॥१००॥

गणंविसर्जयेदित्येकः पक्षः । तदंगविहितंगणपतिपूजनंस्वस्तिपुण्याहवाचनंमातृकापू
जनंनांदीश्राद्धंचकरिष्येइतिकृत्वा ॥ आदित्यंगर्भमित्यादित्यमवेक्षते ॥ॐ आदित्यङ्ग
र्भम्पयसासमङ्ग्धिसहस्रस्यप्रतिमाम्विश्वरूपम् ॥ परिवृङ्ग्धिहरसामाभिमंस्थाःशु
तायुषङ्कणुहिचीयमानाः ॥ १ ॥ अनेनमंत्रेणदंपतिभ्यांसूर्यावलोकनंनमस्कारश्च ॥ त
तः सायंकालीनंनित्यकर्मकृत्वोभौशुक्लांबरधारणानुलेपनमाल्याभरणालंकृतौसदी
पेशयनागारेसुखशय्याप्रसारितशुभमंचकमारुह्यसुमुहूर्तेस्त्रियमुत्तानांप्राक्छिरः श
यितांकृत्वाभर्तातस्यानाभिदेशेहस्तंदत्त्वाभिमृश्यजपेत् ॥ ॐ पूषाभगंसवितामे
ददातुरुद्रःकल्पयतुललामगुंविष्णुर्योनिङ्कल्पयतुत्वष्टारूपाणिपिंशतु ॥ आसिञ्च
तुप्रजापतिर्धातागर्भन्दधातुते ॥ गर्भंधेहिसिनीवालिगर्भंधेहिपृथुष्टुके ॥ गर्भंतेअ
श्विनौदेवावाधत्तांपुष्करस्रजौ ॥ तेजोवैश्वानरोदद्यादथब्रह्मानुमंत्रयते ॥ ब्रह्मागर्भं

न्दधातुते ॥ अथाभिगमनम् ॥ ॐ गायत्रेणंत्वाच्छन्दसामन्थामित्रैष्टुभेनत्त्वाच्छन्दं
सामन्थामिजागंतेनत्वाच्छन्दंसामन्थामि ॥ १ ॥ रेतोमूत्रंविजंहातियोनिंम्प्रविश
दिंन्द्रियम् ॥ गर्भोंजरायुणावृंतउल्बंञ्जहातिजन्मंना ॥ ऋतनंसत्यमिंन्द्रियविपा
नंठंशुक्रमन्धंसऽइन्द्रंस्येन्द्रियमिदम्पयोमृतम्मधुं ॥ १ ॥ अभिगमनोत्तरंतस्याःदक्षि
णस्कंधस्योपरिहस्तंनीत्वातेनहृदयमालभते ॥ ॐ यत्तेसुशीमेहृदयन्दिविचन्द्रमसि
श्रितम् ॥ वेदाहन्तन्मान्तद्विद्यात्पश्येमशरदःशतञ्जीवेमशरदःशतठंश्रृणुयामशर
दःशतम् ॥ १ ॥ कृतस्यकर्मणःसांगतासिद्धयर्थंयथाशक्तिब्राह्मणान्भोजयिष्ये ॥ तेन
श्रीकर्मांगदेवताः प्रीयंताम् ॥ ब्राह्मणेभ्योदक्षिणांदत्त्वातेषामाशिषोगृहीत्वा॥यांतुमातृ ॥१०१॥
गणाःसर्वेइतिमातृणांविसर्जनंकार्यम् ॥ इतिसंस्कारभास्करेगर्भाधानसंस्कारः ॥ ॥

सायदिगर्भंनदधीततदौषधंपतिः कुर्यात् ॥ ऋतुस्नातायांचतुर्थेहनिवाषोडशरात्रि
मध्येकस्मिँश्चिद्युग्मेह्निपुष्यनक्षत्रादिनाचन्द्रमायुज्येततदह्निऋतुमतीमुपोष्यतद्रात्रौ
सिर्ठंह्याः१श्वेतंपुष्पाबृहत्यामूलमुत्थाप्योदपेषंपिष्ट्वादक्षिणस्यांनासिकायामासिंचति
भर्ता ॥ ॥ तत्रमंत्रः ॥ ॥ ॐ इयमोषधीत्रायमाणासहमानासरस्वती ॥ अस्या
अहंबृहत्याःपुत्रःपितुरिवनामजग्रभम् ॥ १ ॥ इतिसंस्कारभास्करेगर्भधारणार्थमौ
षधम् ॥ अथपुंसवनकर्मणोनिर्णयः क्रमश्चोच्यते ॥ पुंसवनंतुगर्भसंस्कारत्वात्प्रतिगर्भे
कार्यमितिधर्मसिन्धौ ॥ पुंसवनसंस्कारेगुरुशुक्रास्तमलमासादिदोषोनास्तीतिसंस्का
ररत्नमालायाम् ॥ ॥ प्रयोगपारिजातेजातूकर्ण्यः ॥ ॥ द्वितीयेवातृतीयेवामासिपुंस

---

१ भूयरिंगणी श्वेतपुष्पा ।

वनंभवेत ॥ व्यक्तेगर्भेभवेत्कार्यंसीमंतेनसहाथवेति ॥ तत्रगर्भाधानप्रभृतिमासेद्वितीये
तृतीयेवायस्मिन्नहनिपुंनक्षत्रेणचंद्रमायुज्येततस्मिन्नहनिगर्भिणीमुपवास्यरात्रौन्य
ग्रोधावरोहाञ्छुंगांश्चोदकेनपिष्ट्वानासिकायांदक्षिणपुटेआसिंचतिभर्त्ता ॥ हिरण्यग
र्भोऽद्भ्यःसम्भृतइत्येताभ्यामृग्भ्याम् ॥ न्यग्रोधोवटवृक्षः तस्यअवरोहाःअतिलंबमवा
चीनंजायमानाअंकुराःतस्यशाखायाः शुंगांश्चतदंकुरानुदकेनपिष्ट्वेत्येकःपक्षः । कु
शकंटकर्कंसोमांशुंचैके ॥ एकेषामाचार्याणांमतेन्यग्रोधावरोहांकुरेषुपिष्यमाणेषुकु
शकंटकंकुशमूलांकुरंसोमांशुंसोमलताखंडंचतन्मध्येपेषणेनवस्त्रगालितंकार्यम् ॥सोम
लताभावेगुडूचीलताब्राह्मीवाग्राह्या ॥ एतत्पक्षेद्रव्यचतुष्टयपेषणंकार्यमिति ॥तत्रायंक्र
मः ॥ पुंसाख्येमातृनांदीन्यजतिपुरुषभेस्यंदनात्प्राग्द्विमासेत्रिमासेवाप्युपोष्यानिशि
सुवटभवानंकुरान्पेष्यवार्भिः॥सोमांशुंकौशकंटकान्क्षिपतिचवसनेगालितंदक्षिणनासा

रंध्रेक्षिप्त्वासमंत्रंसजलमभिमृशेदंकमध्येशरावम् ॥ १ ॥ अथप्रयोगः ॥ ॥ आचम्य
प्राणानायम्य देशकालकीर्तनांतेअस्याःममभार्यायाः उत्पत्स्यमानगर्भस्यबैजिक
गार्भिकदोषपरिहारार्थंपुंरूपताज्ञानोदयप्रतिरोधपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थं
पुंसवनंकरिष्ये ॥ तत्रनिर्विघ्नार्थंगणपतिपूजनंस्वस्तिपुण्याहवाचनंवसोर्द्धाराआयुष्य
मंत्रजपंनांदीश्राद्धंचकरिष्ये इतिकृत्वाअत्रपुण्याहवाचनांतेप्रजापतिः प्रीयतामितिव
देत् ॥ तास्तांगर्भिणींस्नापयित्वाऽहतेवाससीपरिधाय्योपवास्य ॥ ततोरात्रौन्यग्रोधा
वरोहांकुरांश्चकुशकंटकंसोमलताखंडंचोदकेनपिष्ट्वा पेषितोदकंवस्त्रगालितंकृत्वाग
र्भिणीदक्षिणनासिकायामासिंचतिभर्ता ॥ तत्रमंत्रौ ॥ ॐ हिरण्यगर्भः॰ ॥ १ ॥ अ
द्भ्यःसम्भृतःपृथिव्यैरसाच्चविश्वकर्मणःसमवर्त्तताग्रे ॥ तस्यत्वष्टाविदधद्रूपमेति
तन्मर्त्यस्यदेवत्वमाजानमग्रे ॥ २ ॥ कूर्मपित्तंचोपस्थेकृत्वेतिउदकपूर्णशरावमंकेनि
१८

धायेति ॥ सयदिकामयेतवीर्यवान्स्याद्गर्भस्तदातस्याःस्त्रियाअंकेउदकपूर्णंशरावं
निधायभर्तागर्भिण्याउदरंअनामिकाग्रेणस्पृशन्गर्भमभिमन्त्रयते ॥ ॐ सुपर्णोसिग
रुत्मांस्त्रिवृत्तेशिरोगायत्रञ्चक्षुर्बृहद्रथंतरेपक्षौ ॥ स्तोमऽआत्माच्छन्दाᳪंस्यङ्गानि
यजूᳪंषिनाम ॥ सामतेतनूर्वामदेव्यंयज्ञायज्ञियम्पुच्छन्धिष्ण्याःशफाः ॥ सुपर्णो
सिगरुत्मान्दिवङ्गच्छस्वःपत ॥ १ ॥ इत्यनेनमंत्रेण ॥ कृतस्यकर्म० स्मृत्युक्तान्द
शसंख्याकान्ब्राह्मणान्भोजयिष्ये ॥ ब्राह्मणेभ्योदक्षिणांदत्त्वातेभ्यआशिषोगृहीत्वा ॥
यांतुमातृगणाःसर्वेइतिमातॄणांविसर्जनंकुर्यात् ॥ ॥ इतिसंस्कारभास्करेपुंसवनसं
स्कारप्रयोगः ॥ अथगर्भिणीधर्माः पाद्मे ॥ गर्भिण्यधिकारेअदितिंप्रतिकश्यपः ॥ ना ॥१०३॥
वस्करेषूपविशेन्मुसलोलूखलादिषु ॥अवस्करेषुमार्जन्यादिषु ॥ नोपस्करेतिपाठांतरे

उपस्करशब्देनशूर्पादिर्ज्ञेयम् :॥ जलंचनावगाहेतशून्यागारंविवर्जयेत् ॥ वल्मीकेना
धितिष्ठेतनचोद्विग्नमनाभवेत्॥विलिखेन्ननखैर्भूमिंनांगारेणनभस्मना ॥ नशयालुःसदा
तिष्ठेद्व्यायामंचविवर्जयेत् ॥ नतुषांगारभस्मास्थिकपालेषुसमाविशेत् ॥ वर्जयेत्कल
हंगेहेगात्रभंगंतथैवच ॥ नमुक्तकेशातिष्ठेतनाशुचिःस्यात्कदाचन ॥नशयीतोत्तरशिरा
नचैवाधःशिराः क्वचित् ॥ नवस्त्रहीनानोच्छिष्टानचार्द्रचरणातथा ॥ नामंगल्यां
वदेद्वाणींनचहास्याधिकाभवेत् ॥ कुर्याच्छुश्रूषयानित्यंपूजामांगल्यतत्परा ॥ ति
ष्ठेत्प्रसन्नवदनासदाभर्तुर्हितेरतेति ॥ ॥ भविष्ये ॥ संध्यायांनैवभोक्तव्यंगर्भिण्या
वरवर्णिनि ॥ स्थातव्यंनचगंतव्यंवृक्षमूलेचसर्वदा ॥ नदुर्मुखीसदातिष्ठेत्खट्वाछा
यांविवर्जयेत् ॥सर्वौषधीभिः कोष्णेनवारिणास्नानमाचरेत् ॥ ईषदुष्णंकोष्णम् ॥ कृत
भूतरक्षासुप्ताचवास्तुपूजनतत्परा ॥ दानशीलातृतीयायांपार्वत्यानक्तमाचरेत् ॥ ग

र्भिणीकुंजराश्वादिशैलहर्म्यादिरोहणम् ॥ व्यायामंशीघ्रगमनंशकटारोहणंत्यजेत् ॥
॥१०४॥ शोकंरक्तविमोक्षंचसाहसंकुक्कुटासनम् ॥ व्यवायंचदिवास्वापंरात्रौजागरणंत्यजेत् ॥
अतिरूक्षंतुनाश्नीयादत्यम्लमतिभोजनम् ॥ अत्युष्णमतिशीतंचगुर्वाहारंविवर्जयेत् ॥
इतिवृत्ताभवेन्नारीविशेषेणतुगर्भिणी॥यश्चतस्यांभवेत्पुत्रःस्थिरायुर्वृद्धिसंयुतः ॥ अन्य
थागर्भपतनमवाप्नोतिनसंशयइति ॥ मार्कंडेयोपि ॥ वृक्षंमहींचनाक्रामेन्नप्राकारंपयो
निधिम् ॥ परिखांचनचाक्रामेदबलागर्भधारिणी ॥ गर्भरक्षासदाकार्यानित्यंशौचनि
षेवणात् ॥ प्रशस्तमंत्रलिखनाच्छस्तमाल्यानुलेपनेति ॥ स्मृत्यंतरे ॥ भूम्यांचै
वोच्चनीचायामारोहश्चावरोहणम् ॥ नदीप्रतरणंचैवशकटारोहणंतथा ॥ उग्रौषधंतथा
क्षारंमैथुनंभारवाहनम् ॥ कृतेपुंसवनेचैवगर्भिणीपरिवर्जयेत् ॥ गर्भग्रहणंचश्रमा ॥१०४॥
दिलिंगैर्वेदितव्यम् ॥गृहीतगर्भायाःसद्यःश्रमोग्लानिश्चजायते॥पिपासाआयासःसक्थि

स्पंदनंशुक्रशोणितयोरनुसंबंधोयोन्याःस्फुरणंचेत्यादि ॥ अन्यच्चप्रयोगार्णवेस्मृत्यं
तरे ॥ दानंपक्वान्नभिक्षायाः परिवेषणमेवच ॥ पचनंनचकर्तव्यंगर्भिण्यासर्वथैवतु इ
ति ॥ इतिसंक्षेपेणगर्भिणीधर्माः ॥ ॥ अथगर्भिणीपतिधर्माः ॥ ॥ गर्भिणीवांछितं
द्रव्यंतस्यैदद्याद्यथोचितम् ॥ सूतेचिरायुषंपुत्रमन्यथादोषमर्हति इति याज्ञवल्क्यः ॥
दोहदस्याप्रदानेनगर्भोदोषमवाप्नुयात् ॥ वैरूप्यंमरणंवापितस्मात्कार्यंप्रियंस्त्रियाइ
ति ॥ दोहदंगर्भिणीप्रियम् ॥ स्मृतिचिंतामणौ ॥ पुंसोभार्यागर्भिणीयस्यचेत्स्यात्सू
नोश्चौलंक्षौरकर्मात्मनश्च ॥ गेहारंभंस्तंभसंस्थापनंचवार्धिस्नानंनैवकुर्याच्चयात्रामि
ति ॥ ॥दक्षः ॥ ॥ ऋतुद्वयेव्यतीतेतुनकुर्यान्मौंजिबंधनम् ॥ अग्न्याधानंगयाश्राद्धं
वपनंचविवर्जयेदिति ॥ कालविधाने ॥ क्षौरंशवानुगमनंनखकृंतनंचयुद्धंचवास्तुक
रणंत्वतिदूरयानम् ॥ उद्वाहमौपनयनंजलधेर्वगाहमायुःक्षयोभवतिगर्भिणिकापती

नाम्॥वगाहइत्यत्रअवेत्युपसर्गावयवाकारस्यभागुरिमतेनलोपः ॥ ॥क्षौरं वपनम् ॥ भा०
सं० तच्चात्रकर्तनस्याप्युपलक्षणम् ॥ नोदन्वतोंभसिस्नायान्नचश्मश्रवादिकर्तयेत् ॥ अंतर्व
॥१०८॥ त्न्याःपतिःकुर्वन्नप्रजाभवतिध्रुवमिति ऋतुस्मरणात् ॥ यत्तु ॥ वपनस्यनिषेधेपिकर्त
नंवैविधीयते इतिस्मृत्यंतरवचनम् ॥ तद्गर्भिणीपतिभिन्नानांजीवत्पितृकादीनांयोवप
ननिषेधस्तत्रकर्तनविधानपरम् ॥ ॥ संग्रहे ॥ दहनंपवनंचैवपर्वतारोहणंतथा ॥ ना
वआरोहणंचैववर्जयेद्गर्भिणीपतिरिति ॥ स्मृत्यंतरे ॥ ॥ गर्भिण्यामपिभार्यायां
विवाहेप्यथवाव्रते ॥ सपितापिवपेत्केशान्गौतम्यांसिंहगेगुराविति ॥ विवाहेइत्यत्र
निवृत्तेपीतिशेषः ॥ एवंव्रतेइत्यत्र ॥ गौतम्यामितिगौतम्यसन्निहितदेशनिवृत्त्यर्थम् ॥
सिंहगेगुराविततितीर्थयात्रांतरोपलक्षणम् ॥ विवाहेव्रतबंधेचगर्भिणीपतिरेवच ॥ मुंड ॥१०८॥
नंसर्वतीर्थेषुकुर्यादेवाविचारयन्निति स्मृतिदर्पणधृतसंग्रहवचनसंवादात ॥ ॥

स्मृत्यंतरे ॥ ॥ सिंधुस्नानंद्रुमच्छेदंवपनंप्रेतवाहनम् ॥ विदेशगमनंचैवनकुर्याद्गर्भि
णीपतिरिति ॥ प्रेतवाहनमित्यनेनप्रेतविधानमप्युपलक्ष्यते ॥ ज्योतिर्निबंधे गालवः॥
प्रव्यक्तगर्भापतिरब्धियानंमृतस्यवाहंक्षुरकर्मसंगम् ॥ तथैवयत्नेनगयादितीर्थयागा
दिकंवास्तुविधिंनकुर्यादिति ॥ आदिशब्देनव्रतोद्यापनादि ॥ शुद्धिदर्पणेदक्षः ॥ मुं
डनंपिंडदानंचप्रेतकर्मतथैवच ॥ नजीवत्पितृकःकुर्याद्गर्भिणीपतिरेवचेति ॥ पिंड
दानशब्देनश्राद्धमुपलक्ष्यते इतिकेचित् ॥ वपनंप्रेतविधानापवादस्तत्रैव ॥ क्षौरं
नैमित्तिकंकुर्यान्निषेधेसत्यपिध्रुवम् ॥ पित्रोःप्रेतविधानंचगर्भिणीपतिरेवचेति ॥ एतेच
नियमाःसप्तममासादूर्ध्वंभवंति ॥ वपनंमैथुनंतीर्थंवर्जयेद्गर्भिणीपतिः ॥ श्राद्धंचस
प्तमान्मासादूर्ध्वंनैवसमाचरेदित्यादि आश्वलायनोक्तेः ॥ अत्रकेचित्सप्तममासोत्त
रंयोवपनादिनिषेधः सदोषातिशयार्थः ॥ तेनतत्पूर्वमपिशक्तौसत्यांवपनादिनिषेध

सं०

परिपालनमस्त्येवेत्याहुः ॥ ऊर्ध्वंनैवसमाचरेदितिवचनात्सप्तममासात्पूर्वंकदाचिद्व
पनादिकरणमस्तीतिगम्यते ॥ दक्षः ॥ मासषट्केऽव्यतीतेतुनकुर्यान्मौंजिबंधनम् ॥ अ
॥१०६॥ ग्न्याधानंगयाश्राद्धंवपनंचविवर्जयेदिति ॥ ॥ संस्कारदर्पणे सत्यव्रतः ॥ ॥ ऋतुत्र
येऽव्यतीतेतुनकुर्यान्मौंजिबंधनम् ॥ अग्न्याधानंगयाश्राद्धंवपनंचविवर्जयेदिति ॥ संक
टवशेनशक्ताशक्तपरतयावाव्यवस्थायथायथंबोध्या ॥ तीर्थंतीर्थयात्रा ॥ श्राद्धंश्रा
द्धभोजनमितिकेचित् ॥ पित्रोः क्षयाहश्राद्धादिकंतुसप्तममासादूर्ध्वमपिभवति ॥
पित्रोःक्षयाहंदर्शंचगयाश्राद्धंमहालयम् ॥ ग्रहणान्वष्टकाश्राद्धेकुर्याद्गर्भवतीपतिरि
तिसत्यव्रतोक्तेः ॥ एतच्चनित्यानांयुगादिश्राद्धानामुपलक्षणम् ॥ पिंडयज्ञोपिभवत्ये
व ॥ नित्यत्वात् ॥ मुंडनंपिंडदानंचेत्युदाहृतदक्षवाक्ये ॥ पिंडदानशब्देन श्रा ॥१०६॥
द्धमुपलक्ष्यतइतिश्राद्धस्यैवनिषेधप्राप्तौपित्रोःक्षयाहमितिसत्यव्रतवाक्येननित्यश्रा

भा०

द्धानांप्रतिप्रसवः क्रियते ॥ पिंडदानशब्देनपिंडदानमेवनिषिध्यतइतिमातापित्रोः
क्षयाहादिश्राद्धेष्वपिपिंडदाननिषेधः ॥ तच्चनिर्वपणंकार्यंतस्यामपिनृसत्तमेति ॥
अन्वष्टक्यविषयएवगर्भिणीपतित्वप्रयुक्तोयःपिण्डदाननिषेधःप्राप्तः सनास्तिइतिनिबं
धकारलेखनादान्वष्टक्यव्यतिरिक्तसांवत्सरिकादिस्थले कथं पिंडदानप्राप्तिरिति वा
च्यम ॥ अपिशब्देनसांवत्सरिकादीनामपिसंगृहीतत्वेनतत्प्राप्तिसंभवात् ॥ नचपि
तृशब्दस्यपिण्डनिर्वपणशब्देनान्वयात्कथमेतदितिवाच्यम् ॥ सन्निहितपदान्वयसंभ
वेऽव्यवहितान्वयकल्पनस्यानुचितत्वात् ॥ सांवत्सरिकादिषुगर्भिणीपतिकर्तृकाऽपिंड
दानाचारस्यबहुशोदृष्टत्वाच्चेतिकेचित ॥ वस्तुतस्तुएतन्मतेपिक्षयाहादिश्राद्धेष्वपिपिं
डदाननिषेधोनैवास्ति।श्राद्धंचसप्तमान्मासादूर्ध्वंनैवसमाचरेदित्याश्वलायनवचनस्य
श्राद्धशब्दार्थः श्राद्धभोजनपरइतिमतेश्राद्धकरणस्यैतस्मादेववचनात्प्राप्तत्वात्पित्रोः

क्षयाहमितिवचनंसपिंडकत्वविधानार्थंद्रष्टव्यम् ॥ यथाचारंव्यवस्था ॥ ॥ इतिगर्भि
णीपतिधर्माः ॥ ॥ अथगर्भवृद्ध्युपायः ॥ ॥ वरीविश्वाचगंधाचमधुकंभृंगराट्समम् ॥
अजादुग्धेनपानंतुनार्यागर्भस्यवृद्धिकृदिति ॥ वरीशतावरी ॥ विश्वाशुण्ठी ॥ गंधा
अश्वगंधा ॥ भाषायामास्कंदइत्युच्यते ॥ मधुकंज्येष्ठीमधुम् ॥ भृंगराट् ॥ भाषायां
माकाइति ॥ ॥ अथगर्भरक्षोपायः ॥ ॥ शांखायनगृह्ये ॥ चतुर्थेमासिगर्भरक्ष
णम् ॥ ब्रह्मणाग्निःससंविदानइतिस्थालीपाकेनहुत्वाक्षीभ्यांतइतिप्रत्यृचमाज्यलेपेनां
गान्यवमृजेदिति ॥ ब्रह्मणाग्निःसंविदानइतिरक्षोघ्नम् ॥ अथवास्वशाखोक्तरक्षोघ्नीसू
क्तग्रहणम् ॥ शास्त्रांतरोक्तत्वाल्लौकिकाग्नाविदंकार्यम् ॥ इतिगर्भरक्षणोपायः ॥ ॥ अ
थगर्भिण्यागर्भस्रावहरोपायः ॥ ॥ तत्रेदंगृह्यम् ॥ यदिगर्भःस्रवेदार्द्रेणास्याः पाणिना ॥१०७॥
त्रिरूर्ध्वंनाभेरुन्मार्ष्टि ॥ पराचंत्वानार्वाचंत्वष्टाबंधातुबंधने ॥ सक्तूनुपवेश्यदशा

मासोऽवीरहेति ॥ यदिगर्भोगर्भिण्याः स्रवेत्तदातस्यानाभेरूर्ध्वंयोदेशः ॥ गर्भाव स्थितियोग्यःसस्वेनपाणिनापराचंत्वेतिमंत्रेण त्रिरुन्माष्टिंऊर्ध्वापवर्गंसंमृजीतेत्यर्थः । सकृदेवमंत्रः ॥ यत्रैकस्मिन्द्रव्यइतिसूत्रात् ॥ नैमित्तिकमिदंकर्म ॥ औषधमपि ॥ पीत्वातंदुलतोयेनतंदुलीयजटाकृतौ ॥ पतद्गर्भाचयानारीस्थिरगर्भाप्रजायते ॥ श र्कराथचतिलैःसमांशकैर्माक्षिकेणसहभक्षितैस्त्रियाः ॥ नास्तिगर्भपतनोद्भवंभयंपाप भोक्तुरिवतीर्थसेवनमिति ॥ तंदुलीयजटातंदुलजामूलम् ॥ माक्षिकंमधु ॥ ॥ इतिग र्भस्रावहरोपायः ॥ अथ सीमंतोन्नयनम् ॥ ॥ तत्रनिर्णयः ॥ हारीतः ॥ सकृत्संस्कृत

---

१ इदंचकर्मसकृदेवकार्यम् ॥ स्त्रीसंस्कारत्वान्नप्रतिगर्भमावर्ततइतिवृत्तिकाराद्युक्तेः ॥ यत्तुविष्णुः सीमं तोन्नयनंकर्मनस्त्रीसंस्कारइष्यते ॥ केचिद्गर्भस्यसंस्कारात्प्रतिगर्भंप्रयुंजतेइति ॥ तत्कात्यायनविषयम् ॥ ममतुबहुसंमतेसकृत्कार्यमित्युक्तम् ॥ तदुक्तंभवति ॥

सं० संस्काराःसीमंतेनद्विजस्त्रियः ॥ यंयंगर्भंप्रसूयंतेससर्वः संस्कृतोभवेदिति ॥ यदिसी भा०
॥१०८॥ मंतस्यमुख्यकालातिक्रमस्तदाप्रसवादर्वागपिकर्तव्यम् ॥ तथाचोक्तम् ॥ सीमंतो
न्नयनंमुख्यकालेनस्यात्कथंचन ॥ कार्यमाप्रसवादेतदितिशंखोब्रवीत्स्फुटमिति॥अकृ
तसीमंतायाःप्रसवेविशेषःसत्यव्रतेनोक्तः स्त्रीयद्यकृतसीमंताप्रसूयेतकदाचन ॥ पु
त्रंगृहीत्वाविधिवत्सातंसंस्कारमर्हतीति ॥ ॥ अथसीमंतोन्नयनंनामक्षेत्रगर्भसंस्का
रकर्मव्याख्यायते ॥ ॥ तच्चप्रथमगर्भसंभवान्मासेषष्ठेष्टमेवापुन्नक्षत्रे शुक्लपक्षादिज्यो
तिःशास्त्रोक्तशुभदिनेकार्यम् ॥ अत्रापिनियतकालेअधिमासगुरुशुक्रास्तादिदोषोना
स्ति ॥ असंभवेयावत्प्रसवकालपर्यंतम् ॥ अत्राप्यनियतकालेअधिमासादिप्रत्यवा
योनास्ति ॥ ॥ अथसीमन्तोन्नयनप्रयोगः ॥ ॥ तत्रायंक्रमः ॥ ॥ सीमंताख्यं
रवीज्येभवतिचयुवतेर्वाष्टमेमासिषष्ठेशालाकर्मादिनांदीश्रपयतिसतिलं मुद्गमिश्रंच ॥१०८॥

रुप्राक् ॥ प्राजापत्यैकहुत्वोदितमनुहवनंसर्वपंचादशस्यात्पश्चात्पीठोपविश्यंविनय
तिपुलिकास्थाप्यतांप्रेष्यगानम् ॥ १ ॥ तत्रपत्न्यासहमंगलस्नापितअहतवासो
युगुलालंकृतःपत्न्यासहबहिःशालायांशुभासनेउपविश्याचम्यप्राणानायम्यदेशकाल
कीर्तनांतेअस्याममभार्यायाः गर्भावयवेभ्यस्तेजोवृद्ध्यर्थंक्षेत्रगर्भयोः संस्कारार्थं
प्रतिगर्भसमुद्भवैनोनिबर्हणेनबीजकोत्पत्त्यातिशयद्वाराश्रीपरमेश्वरप्रीत्यर्थं सीमंतो
न्नयनाख्यसंस्कारकर्मकरिष्ये ॥ तत्रनिर्विघ्नार्थंगणपतिपूजनंस्वस्तिपुण्याहवाचन
मविघ्नपूजनंमंडपस्थापनंमातृकापूजनंवसोर्द्धारमायुष्यमंत्रजपंनांदीश्राद्धंच करिष्ये

१यद्यपिसीमंतेबहिःशालाउक्तातथापीदानींतनानांनामकरणान्नात्रलिखिता ॥ पुंसवनंसीमंतेनसह
कार्यमित्युक्तंसीमंतेनसहकरणेअनादिष्टपूर्वंकार्यमितिप्रयोगरत्ने॥ गर्भसंस्कारएवस्यादित्यादिनिर्णयो
गदाधरादौज्ञेयः अनादिष्टपूर्वंकार्यमित्युक्तंप्रयोगरत्नेगदाधरादौ ॥

इतिकृत्वा ॥ अत्रपुण्याहवाचनांतेधाताप्रीयतामित्यूहः कर्तव्यः ॥ तत्रबहिः शालायांस्थंडिलेपंचभूसंस्कारपूर्वकंमंगलनामाग्नेःस्थापनम् ॥ ततोदक्षिणतोब्रह्मासनादिआज्यासादनानंतरंतंदुलतिलमुद्गानामासादनम् ॥ अनंतरमुपकल्पनीयानि ॥ मृदुपीठम् ॥ युग्मान्यौदुंबरफलान्यपक्वान्येकस्तबकनिबद्धानि ॥ त्रयोदशपरिमाणकास्त्रयोदर्भपिंजूलाः ॥ [१]त्र्येणीशलली ॥ वी[२]रतरशंकुः ॥ केचिदश्व[३]त्थशंकुः ॥ पूर्णचात्रम् ॥ अलोहितम्॥ सूत्रेणपूर्णम्॥ वीणागाथिनौचेति॥गानंगायनम्॥ त्रैवर्णिकौवीणागायिनौराजवर्णनसंबंधिगानंकुरुतः ॥ ॥ अथवानलादिसंबंधिगानंकुरुतः ॥ ॥

---

१ त्रिस्थाने कर्बुरा ॥ २ वीरतरोवीरतरुशिरेतिजयरामः ॥ ३ अश्वत्थशंकुः परैषिकैवेतिहरिहररेणुकारिकाकारौ ॥ अश्वत्थशंकुरितिकारिकाकारः कर्कश्च ॥ खादिरः शंकुरितिगर्गः ॥

आज्यनिर्वपणानंतरम् ॥ चरुपात्रेमुद्गप्रक्षेपंकृत्वाधिश्रपणम् ॥ ईषच्छ्रितेषुतिलतंदु
लप्रक्षेपः ॥ पर्यग्निकरणांतेआघारावाज्यभागौस्रुवेणजुहुयात् ॥ मनसा ॥ ॐ प्रजा
पतयेस्वाहा इदंप्रजा० ॥ ॐइंद्राय० इदमिं० ॥ ॐअग्नयेस्वाहा इदम० ॥ ॐ
सोमायस्वा० इदंसो० ॥ ततश्चरुमभिघार्यस्रुवेणचरुंजुहुयात् ॥ ॐ प्रजापतये०
इदंप्र० ॥ ५ ॥ ततःस्थालीपाकेनोत्तरार्धात्स्विष्टकृत् ॥ ॐ अग्नयेस्विष्टकृतेस्वा० इ
दम० ॥ ६ ॥ ततोभूराद्यानवाहुतयः ॥ ॐ भूःस्वाहा इदम० ॥ ७ ॥ ॐ भुवः
स्वा० इदंवा० ॥ ८ ॥ ॐ स्वःस्वा० इदंसूर्या० ॥ ९ ॥ ॐ त्वन्नोऽअग्ने० इदम०
वरु० ॥ १० ॥ ॐ सत्वन्नोऽअग्ने० ॥ इदमग्न०वरु० ॥ ११ ॥ ॐ अयाश्चाग्ने० ॥ इ
दम०अयसे०॥१२॥ॐयेतेशतं०इदंवरु०सवित्रे० ॥ १३॥ ॐ उदुत्तमम्०इदंवरु०दित्या

याद्वि० ॥ १४ ॥ मनसा ॐ प्रजाप० इदंप्र० ॥ १५ ॥ ततःसंस्रवप्राशनादिप्रणीताविमोकांतंहोमशेषंसमाप्य ॥ ततःपश्चादग्नेर्भद्रंपीठेमृद्वासनंसंस्थाप्यतदुपरिगर्भिणीमुपवेशयेत् ॥ ततोयुग्मेनसटालुग्रप्सेनौदुंबरेणत्रिभिर्वेण्याकृतिदर्भपिंजूलैस्त्रयेण्याशलल्यावीरतरशंकुनासूत्रपूर्णचात्रेणचेत्येतैः सर्वैः पुंजीकृतैःसीमंतंमूर्ध्निविनयति ॥ ललाटांतरमारभ्यकेशान्द्विधाकरोतिभर्ता ॥ ततोविनयनम् ॥ ॐ भूर्विनयामि॥ॐभुवर्विनयामि॥ ॐ स्वर्विनयामि ॥ ततऔदुंबरादिपंचकस्यवेण्यांबंधनम् ॥ ॐ अयमूर्जावतोवृक्षऽऊर्ज्जीवफलिनीभव ॥ १ ॥ इत्यनेनमंत्रेण ॥ अथगाथागानम् ॥ सोमऽए



---

१ तैलदेवदारुपीठे ॥ २ ततस्त्रैवर्णिकौवीणागाथिनौराजवर्णनसंबंधिअथवानलादिसंबंधिगानं कुरुतइतिगदाधरः ॥ राजन्यव्यतिरिक्तवीरतरगानमिति हरिहरः ।

वनोराजेमामानुषीःप्रजाः ॥ अविमुक्तचक्रऽआसिरंस्तिरेतुभ्यमसाविति ॥ १ ॥ ए
तयागाथयावीणागाथिनौगानंकुर्याताम् ॥ आसौस्थानेसमीपावस्थितायाःमहानद्या
नामग्रहणम् ॥ गंगा यमुना सरस्वतीत्येवमादिप्रथमांतंनामग्रहणंरुयेवकरोति ॥
कृतस्यकर्मणःसांगतासिद्ध्यर्थंस्मृत्युक्तान्दशसंख्याकान्ब्राह्मणान्भोजयिष्ये ॥ तेन
श्रीकर्मांगदेवताःप्रीयंताम् ॥ ब्राह्मणान्गंधतांबूलादिभिःसंपूज्यतेभ्यश्चदक्षिणांदत्त्वा
तदाशिषोगृहीत्वाअग्निंविसृज्यमातृणांविसर्जनम् ॥ यांतुमातृगणाःसर्वेपूजामादाय
पार्थिवीम् ॥ इष्टकामप्रसिद्ध्यर्थपुनरागमनायच्च ॥ ॥ इतिसंस्कारभास्करेसीमंतोन्न
यनसंस्कारप्रयोगः ॥ ॥ अथजातकर्मक्रमारंभः ॥ ॥ अथकस्माच्चिद्योगाद्गर्भाधा
नादिसंस्काराअकृताश्चेत्तर्हिगोदानपूर्वकमनादिष्टप्रायश्चित्तंकृत्वांतरितसंस्कारान्सं
पाद्यचजातकर्मकार्यमिति ॥ शीघ्रप्रसवोपायःग्रंथांतरे ॥ हिमवत्युत्तरेपार्श्वेशब

रीनामयक्षिणी ॥ तस्यानूपुरशब्देनविशल्यास्यात्तुगर्भिणीस्वाहा ॥ इतिमंत्रेणैक
विंशतिदूर्वांकुरैरेकपलंतिलतैलंप्रदक्षिणमावर्तयन्नष्टशतंमंत्रंजपित्वातत्तैलंकिञ्चित्पा
ययेच्छेषमुदरेलेपयेदिति ॥ अथयंत्रप्रकाशेयंत्रमप्युक्तम् ॥ गजाग्निवेदाउडुराट्शरा
ङ्गारसर्षिपक्षाइतिहिक्रमेण ॥ लिखेत्प्रसूतेःसमयेगृहेदंसुखेननार्यःप्रसवंतिशीघ्रमि
ति ॥ अस्यार्थः ॥ गर्भिण्यानार्यादृष्टिगोचरेदेशंसमचतुरस्रंसंसाध्यतस्यसमान्नव
कोष्ठकान्कृत्वाईशानोत्तरवायुकोष्ठेषुअष्टमतृतीयचतुर्थानंकान्क्रमेणलिखित्वापूर्व
मध्यमपश्चिमकोष्ठेषुप्रथमपंचमनवमांकान्क्रमेणविलिख्यआग्नेयदक्षिणनैरृतको
ष्ठेषुषष्ठसप्तमद्वितीयांकान्क्रमेणविलिखेत्॥इदंयंत्रंप्रसूतिसमयेपूर्वंसूतिकागृहे

| | | |
|---|---|---|
| पू | | |
| ८ | १ | ६ |
| ३ | ५ | ७ |
| ४ | ९ | २ |

लेखनीयमेतद्दर्शनेनसुखेनशीघ्रंनार्यःप्रसवंति ॥ ॥यंत्रंयथा सोष्यंतीमिति
प्रसवकालेशूलवतींस्त्रियंभर्ताएषंतुदशंमास्युगर्भोइतिमंत्रेणदशकमभिमं

त्यतेनोदकेनशीघ्रप्रसवार्थंत्रिवारमभिषिंचेत् ॥ ॐ एयंतुदशमास्योगर्भोजरायुणास
ह ॥ यथायम्वायुरेयतियथासमुद्रऽएयंति ॥ एवायन्दशमास्योऽअस्त्रंज्जरायुंणास
ह ॥ १० ॥ इत्यनेनमंत्रेण ॥ अभ्युक्षणानन्तरंवरावपतननिःसारपर्यंतंप्रसूतिसमीपेअ
वैतुपृश्निशैवलमितिमंत्रंजपतिभर्ता ॥ ॐ अवैतुपृश्निशैवलठंशुनेजराज्वपत्तवेनैव
मार्ठसेनपीवरीनकस्मिंश्चनायतनमवजरायुपद्यताम् ॥ १ ॥ शांतिप्राप्ततिथिनक्षत्र
योगादिसंभवेपुत्रमुखमदृष्ट्वैवस्नानंकार्यम् ॥ दुष्टकालेपिकुर्वीतजातकर्मयथाविधीति
खंड्भट्टपद्धतौजैमिनिः देशकालोपघाताद्यैःकालातिक्रमणंयदि ॥ अनस्तकेज्येन्दुसि
तेतत्कार्यंचोत्तरायणे ॥ तथैवानिष्टतिथिनक्षत्रयोगविषघटीसंक्रांतिग्रहणपर्वपौषज
ननेवैकृतप्रसवेचशांतयोमयूखादिशांतिग्रंथेषुद्रष्टव्याः ॥ ग्रंथविस्तारभयान्नात्रलिखि

ताः ॥ ॥ अथजातकर्मसंस्कारनिर्णयः ॥ ॥ तद्यथा ॥ नपक्वेननचामेनश्राद्धंहेम्नैव कारयेत् ॥ पुत्रजन्मनियात्रायांशर्वर्यांदत्तमक्षयमिति ॥ १ ॥ जातकर्मणिनांदीश्राद्धं रात्रावपिकार्यम् ॥ यद्यपिकिंचित्कर्मांगंनांदीश्राद्धंक्तंतथापिपुत्रजन्मनिमित्तंनां दीश्राद्धंद्वितीयंतद्दिनेएवमुक्तापिजननकालेकार्यमिति ॥ नालच्छेदनेकालप्रतीक्षा माहहारीतः ॥ कालप्रतीक्षाबालस्यनालच्छेदनकर्मणि ॥ षण्मुहूर्तात्परंकार्यंसं कटेष्टमुहूर्तके ॥ १ ॥ तदूर्ध्वंछेद्यमच्छेद्यंपित्रादिःमूतकीभवेत् ॥ २ ॥ ब्रह्म सूत्रधृतंनालंतेनावेष्ट्यनिकृंतयेत् ॥ मूलतोष्टांगुलंत्यक्त्वानालंछिद्यात्क्षुरादिने ति ॥ तत्रायंक्रमः ॥ ॥ जातेपुत्रेसचैलंभवतिजनयतोमातृनांदीयमेधायुष्येत्वे नंजपःस्याज्जननमुवमसुंमंत्रयेन्मातरंच ॥ सव्यंप्रक्षाल्यवामंस्तनमुदकयुतंपात्रप्र च्छिद्यनालंसूत्यग्निंस्थाप्यहुत्वाद्वितयमनुदिनंविंशतिद्वेदशाहम् ॥ १ ॥ इति ॥ अथ

जातकर्मप्रयोगः ॥ तत्रजातेपुत्रेपिताकुलदेवतावृद्धप्रणामपूर्वकंतस्यमुखंनिरी
क्ष्यनद्यादावनुष्णवारिणातडागादौवाउदङ्मुखंस्नायात् ॥ मूलज्येष्ठाव्यतिपातादौ
उत्पन्नेमुखमदृष्ट्वैवस्नायात् ॥ अथासंभवेदिवाहृताभिः शीताभिरद्भिः सुवर्णयुताभि
र्गृहेएवस्नात्वाऽहतेवाससीपरिधायधृतकुंकुमतिलकः शुभासनेउपविश्याचम्यप्रा
णानायम्यदेशकालौस्मृत्वाममास्यबालकस्यगर्भांबुपानजनितसकलदोषनिबर्हणा
युर्मेधाभिवृद्धिबीजगर्भसमुद्भवैनोनिबर्हणद्वारा श्रीपरमेश्वरप्रीत्यर्थं जातकर्मकरि
ष्ये ॥ तत्रनिर्विघ्नार्थं गणपतिपूजनंस्वस्तिपुण्याहवाचनंमातृपूजनायुष्यमंत्रजपपूर्व
कमाभ्युदयिकश्राद्धंहेम्नैवकरिष्येइतिकृत्वा ॥ अत्रपुण्याहवाचनांतेसविताप्रीयता
मित्यूहः ॥ अच्छिन्नेनालेमेधाजननायुष्येकरोति ॥ तत्रमेधाजननंयथा ॥ अनामि
कयासुवर्णांतर्हितयामधुघृतेएकीकृत्यघृतंवाकेवलंकुमारंप्राशयतिपिता ॥ ॐ भूस्त्व

यिदधामि ॥ ॐ भुवस्त्वयिदधामि ॥ ॐ स्वस्त्वयिदधामि ॥ ॐभूर्भुवः स्वः सर्वंत्व
यिदधामीत्यनेनमंत्रेणसकृत्प्राशयति ॥ ॥ अथास्यायुष्यंकरोति ॥ तत्रकुमारस्य
नाभिदेशेवादक्षिणकर्णसमीपेअग्निरायुष्मानित्यादिवक्ष्यमाणमंत्राञ्जपति ॥ ॐ अ
ग्निरायुष्मान्त्सवनस्पतिभिरायुष्माँस्तेनत्वायुषायुष्मंतंकरोमि ॥ १ ॥ ॐ सोमआ
युष्मान्त्सऽओषधीभिरायुष्माँस्तेनत्वायुषायुष्मंतंकरोमि ॥ २ ॥ ॐ ब्रह्मऽआयुष्मत्तद्ब्रा
ह्मणैरायुष्मत्तेनत्वायुषायुष्मंतंकरोमि ॥ ३ ॥ ॐ देवाऽआयुष्मंतस्तमृतैरायुष्मंतस्ते
नत्वायुषायुष्मंतंकरोमि ॥ ४ ॥ ॐ ऋषयऽआयुष्मंतस्तेव्रतैरायुष्मंतस्तेनत्वायुषायु
ष्मंतं करोमि ॥ ५ ॥ ॐ पितरऽआयुष्मंतस्तेस्वधाभिरायुष्मंतस्तेनत्वायुषायुष्मंतंक
रोमि ॥ ६ ॥ ॥ ॐ यज्ञऽआयुष्मान्त्सदक्षिणाभिरायुष्माँस्तेनत्वायुषायुष्मंतंकरोमि ॥
॥ ७ ॥ ॐ समुद्रऽआयुष्मान्त्सस्रवंतीभिरायुष्मांस्तेनत्वा युषायुष्मंतंकरोमि ॥ ८ ॥

एतावत्पर्यंतमग्निरायुष्मानित्यारभ्यत्रिर्जपति ॥ ॐ त्र्यायुषञ्जमदग्नेः कश्यपस्य त्र्या
युषम् ॥ यद्देवेषुं त्र्यायुषन्तन्नोंऽअस्तु त्र्यायुषम् ॥ त्र्यायुषमित्येतमपिमंत्रंत्रिर्जपति ॥
सयदिकामयेतकुमारः सर्वमायुरियादितितदाकुमारंवात्सप्रेणाभिमृशति ॥ दिवस्प
रीत्यारभ्यगोमंतमुशिजोविवव्रुरित्यंतोवात्सप्रः ॥ ॐ दिवस्परिप्रथमञ्जज्ञेऽअग्निर
स्मद्द्वितीयम्परिजातवेदाः॥तृतीयमप्सुनृमणाऽअजंस्त्रमिन्धानऽएनञ्जरतेस्वाधीः ॥
॥ १ ॥ विद्मातेऽअग्नेत्रेधात्रयाणिविद्मातेधामविभृतापुरुत्रा ॥ विद्मातेनामंपरमङ्गुहाय
द्विद्मातमुत्सयतऽआयगन्थ ॥ २ ॥ समुद्रेत्वानृमणाऽअप्स्वन्तर्नृचक्षांऽईधेदि
वोऽअग्नऽऊधंन् ॥ तृतीयेत्वारजंसितस्थिवांᳪंसमपामुपस्थेमहिषाऽअवर्धन् ॥ ३ ॥

अक्रन्दद॒ग्निस्त॒नय॑न्निव॒द्यौः क्षामा॒रेरि॑हद्वी॒रुधः॑ सम॒ञ्जन् ॥ स॒द्यो ज॑ज्ञा॒नो वि ही॑मि॒द्धो अ
ख्य॒दा रोद॑सी भा॒नुना॑ भात्य॒न्तः ॥ ४ ॥ श्री॒णामु॑दा॒रो ध॒रुणो॑ र॒यी॒णां म॑नी॒षाणां॒ प्रा
र्प॑णः॒ सोम॑गोपाः ॥ वसुः॑ सू॒नुः सह॑सो अ॒प्सु राजा॒ वि भा॒त्यग्र॑ उ॒षसा॑मिधा॒नः ॥ ५ ॥ वि
श्व॑स्य के॒तुर्भुव॑नस्य॒ गर्भ॒ आ रोद॑सी अपृणा॒ज्जाय॑मानः ॥ वी॒ळुं चि॒दद्रि॑मभिनत्परा॒य
ञ्जना॒ यद॒ग्निमय॑जन्त॒ पञ्च॑ ॥ ६ ॥ उ॒शिक्पा॑व॒को अ॑र॒तिः सु॑मे॒धा मर्त्ये॑ष्व॒ग्निर॒मृतो॒
नि धा॑यि ॥ इय॑र्ति धू॒मम॑रु॒षं भरि॑भ्र॒दुच्छु॒क्रेण॑ शो॒चिषा॒ द्यामिन॑क्षन् ॥ ७ ॥ दृ॒शा॒नो रु॒
क्म उ॒र्व्या व्य॑द्यौद्दु॒र्मर्ष॒मायुः॑ श्रि॒ये रु॑चा॒नः ॥ अ॒ग्निर॒मृतो॑ अभव॒द्वयो॑भि॒र्यदे॑नं॒
द्यौर॒जन॑यत्सु॒रेताः॑ ॥ ८ ॥ यस्ते॑ अ॒द्य कृ॒णव॑द्भद्रशोचे॒ऽपू॒पं दे॑व घृ॒तव॑न्तमग्ने ॥ प्र तं न॑य

प्रतरम्वस्योऽअच्छाभिसुम्नन्देवभंक्तंठषविष्ट ॥ ९ ॥ आतम्भंजसौश्रवसेष्वंग्नऽउ
क्थऽउंकथुआभंजशुस्यमांने ॥ प्रियश्रेमूढ्ढंप्प्रियोऽअग्नाभंवात्युज्जातेनंभिनदद्दुज्जर्नि
त्वैहः ॥ १० ॥ त्वामंग्नेयजंमानाऽअनुद्यून्विश्वावसुदधिरेवार्याणि ॥ त्वयांसहद्रविण
मिच्छमांनाव्रजंगोमन्तमुशिजोविवंव्रुहः ॥ ११ ॥ततःकुमारस्यप्रागादिचतुर्दिक्षुचत्वा
रःउपरिभागस्याभावेमध्येवानैर्ऋत्यकोणेएकः पंचमएवंपंचब्राह्मणानवस्थाप्य ॥
इममनुप्राणेतियजमानोब्रूयात् ॥ ॥ एवंसर्वत्र ॥ व्यानेत्यादयः ॥ ततःपूर्वदिक्
स्थितोब्राह्मणःकुमारंलक्षीकृत्यप्राणेतिब्रूयात् ॥ एवंव्यानेतिदक्षिणतः ॥ अपानेत्य
परतः ॥ उदानेत्युत्तरतः ॥ समानेतिपंचमउपरिष्टादवेक्षमाणोब्रूयात् ॥ अविद्यमा
नेषुब्राह्मणेषुस्वयमेवप्रतिदिशंपरिक्रम्यैतत्करोति ॥ स्वयंकरणपक्षेप्रेषाभावः ॥ य
स्मिन्देशेकुमारोभवति तंदेशमभिमंत्रयते ॥ देशंमूतिकागारम् ॥ ॥ तत्रमंत्रः॥ॐ

वेदतेभूमिहृदयन्दिविचन्द्रमसिश्रितम् ॥ वेदाहन्तन्मान्तद्विद्यात्पश्येमशरदःशतञ्जी
वेमशरदःशतꣳशृणुयामशरदःशतम् ॥ १ ॥ अथैनंकुमारमभिमृशति ॥ ॐ अश्मा
भवपरशुर्भवहिरण्यमस्तृतम्भव ॥ आत्मावैपुत्रनामासिसजीवशरदःशतम् ॥ १ ॥
अथास्यमातरमभिमंत्रयते ॥ ॐ इडासिमैत्रावरुणीवीरेवीरमजीजनथाः ॥ सात्व
म्वीरवतीभवयास्मान्वीरवतोकरत् ॥ १ ॥ इतिमंत्रेण ॥ अथास्यमातुर्दक्षिणस्तनंज
लेनप्रक्षाल्यकुमारायप्रयच्छति ॥ ॐ इमꣳस्तनमूर्ज० ॥ १ ॥ ततोवामस्तनंप्रक्षाल्य
प्रयच्छति ॥ ॐ यस्तेस्तनः शशयोजोमयोभूर्योरत्नधावसुविद्यःसुदत्र ÷॥ येनवि
श्वापुष्यसिवार्याणिसरस्वतीतमिहधातवेकः ॥ १ ॥ इत्यनेनमंत्रेण ॥ ततः सूतिका
याः खट्वाधस्तात्कुमारस्यशिरःप्रदेशेउदकपूर्णकलशंनिदधाति ॥ ॐ आपोदेवेषुजा

इदं कुमारस्यमूर्ध्नीति कारिकाकारः ॥ हृदितुजयरामः ॥ सर्वशरीरेतुहरिहरः ॥

ग्रथययथादेवेष्वजाग्रथ ॥ एवमस्यार्ठंसूतिकायाठंसपुत्रिकायांजाग्रथ ॥ १ ॥ इत्यने
नमंत्रेण ॥ तदुदकपात्रंस्थापितमेवदशाहंतिष्ठतिप्रागुत्थानात् ॥ ततोनालच्छेदनम्॥
ततःसूतिकागृहद्वारदेशेअरत्निमात्रेस्थंडिलेपंचभूसंस्कारान्कृत्वासूतिकाग्नेःस्थाप
नम् ॥ संपूज्यहविःसंस्कृत्यपर्युक्ष्य ॥ अतःप्रभृत्युत्थानंयावत्तावत्सायंप्रातःसंधिवेल
योर्द्वयोःप्रत्यहंयावत्सूतिकास्नानंकरोतितावद्दशाहपर्यंतंफलीकरणमिश्रान्सर्षपां
स्तस्मिन्नग्नौद्वेद्वेआहुतीहस्तेनजुहोति ॥ फलीकरणमिश्रान्सूक्ष्मतंडुलाग्रमिश्रान् ॥
तत्रमंत्रौ ॥ ॐ शंडामर्काउपवीरःशौंडिकेयऽउलूखलः ॥ मलिम्लुचोद्रोणासश्च्यवनो
नश्यतादितःस्वाहा ॥ इदंशंडामर्कायउपवीरायशौण्डिकेयायउलूखलायमलिम्लुचा
द्रोणासश्च्यवनोनश्यतादितेभ्यश्चनमम ॥ १ ॥ ॐ आलिखन्ननिमिषःकिम्वदन्तऽउप
श्रुतिः ॥ हर्य्यक्षःकुम्भीशत्रुःपात्रपाणिर्नृमणिर्हंत्रीमुखःसर्षपारुणश्च्यवनोनश्यतादितः

स्वाहा ॥ इदमालिखन्ननिमिषायकिंवद्धयउपश्रुतयेहर्यक्षायकुंभीशत्रवेपात्रपाणयेन्रृ
मणयेहंत्रीमुखाय सर्षपारुणायचववनायच नमम ॥ ॥ ॥ २ ॥ इत्याहुतिद्वयम् ॥
यदिकुमारग्रहोबालमुपद्रवेत्तदातंबालंजालेनप्रच्छाद्योत्तरीयेणवाससावाप्रच्छाद्यां
कआधायतंबालंहृदिस्पृशन्पिताजपति ॥ ॐ कुर्कुरः सुकुर्कुरः कुर्कुरोबालबंधनः ॥
चेच्चेच्छुनकः सृजनमस्तेऽअस्तुसीसरोलपेतापह्वरतत्सत्यम् ॥ यत्तेदेवावरमदद्दुः स
त्वंकुमारमेववावृणीथाः ॥ चेच्चेच्छुनकःसृजनमस्तेऽअस्तुसीसरोलपेतापह्वरतत्स
त्यम् ॥ यत्तेसरमामातासीसरःपिताश्यामशबलौभ्रातरौ ॥ चेच्चेच्छुनकः सृजनमस्तेऽ
अस्तुसीसरोलपेतापह्वरतत्सत्यम् ॥१॥इत्यंतंपठितेनरक्षति ॥ ॐ ननामयतिनरुदतिन
हृष्यतिनग्लायतियत्रवयंवदामोयत्रचाभिमृशामसि ॥ १ ॥ इत्यनेनमंत्रेणाभिमृश ॥११६॥
तिकुमारंपिता ॥ ॥ कृतस्यकर्मणःसांगतासिद्ध्यर्थंस्मृत्युक्तान्दशसंख्याकान्ब्राह्म

णान्सूतकांतेभोजयिष्ये ॥ तेनश्रीकर्मा० ॥ ब्राह्मणेभ्योगंधतांबूलवस्त्रालंकारादिभि
र्यथाविभवंसंपूज्य॥तेभ्यश्चसुवर्णादिदक्षिणांदत्त्वातेभ्यआशिषोगृहीत्वा ॥ ॥ मातॄणां
विसर्जनम् ॥ यांतुमातृगणाः सर्वेस्वशक्त्यापूजितामया ॥ इष्टकामप्रसिद्ध्यर्थंपुनरागम
मनायच ॥ १ ॥ इतिविसर्जयेत् ॥ कुमार्याश्चैतज्जातकर्मामंत्रकंकार्यम् ॥ रात्रौसंध्या
यांग्रहणेजाताशौचांतरमध्येपीदंकार्यम् ॥ मृताशौचमध्येजातश्चेत्तदैवाशौचांतेवाका
र्यम्॥पितरिग्रामांतरगतेपिपितृव्यादिगोत्रजोज्येष्ठक्रमेणेदंकुर्यात ॥ इदमायुष्यक
रणंकालातिक्रमेपिक्रियते ॥ मेधाजननंतुमुख्यकालातिक्रमान्ननिवर्ततेतस्मात्कुमा
रंजातंघृतंवैवाग्रेप्रतिलेहयंतिस्तनंवानुधापयंतीतिजातमात्रस्यकुमारस्यश्रुत्यामेधा
जननोपदेशात्संस्कारकर्मत्वाच्च ॥ ॥ इतिसंस्कारभास्करेजातकर्मसंस्कारप्रयो
गः ॥ ॥ अथबालस्यदुष्टदृष्टिदोषादौरक्षाविधिः ॥ ॥ वासुदेवोजगन्नाथःपूतनातर्ज

नोहरिः ॥ रक्षतित्वरितंबालंमुंचमुंचकुमारकम् ॥ कृष्णरक्षशिशुंशंखमधुकैटभमर्द
न ॥ प्रातःसंगवमध्याह्नेसायाह्नेषुचसंध्ययोः ॥ महानिशिसदारक्षकंसारिष्टनिषू
दन ॥ यद्गोरजः पिशाचांश्चग्रहान्मातृग्रहानपि ॥ बालग्रहान्विशेषेणच्छिंधिच्छिंधि
महाभयान् ॥ त्राहित्राहिहरेनित्यंत्वद्रक्षाभूषितंशिशुम् ॥ इतिभस्माभिमंत्र्यैवभूषये
त्तेनभस्मना ॥ शिशोर्ललाटाद्यंगेषुरक्षांकुर्याद्यथाविधि ॥ इतिप्रयोगसारे ॥ ॥ रक्ष
रक्षमहादेवनीलग्रीवजटाधर ॥ ग्रहैस्तुसहितोरक्षमुंचमुंचकुमारकम् ॥ अमुंमंत्रंभूर्ज
पत्रेविलिख्यतत्पत्रंदक्षिणभुजेबध्नीयादितियंत्रोद्धारे ॥ ॥ बालरोदनपरिहारार्थं
यंत्रमुक्तंमयूखे ॥ षडस्रमध्येह्रींकारस्तन्मध्येशि
शोर्नामविलिख्यषट्कोणेषुॐलुलुवस्वाहेतिमंत्रषडक्ष



इदंयंत्रंयथो
क्तंलिखेत्

राणिविलिख्यतद्बहिर्नेमिवद्वृत्तद्वयंविलिख्यतद्बहिरधोमुखैरर्धचंद्रैरावेष्ट्यपंचोपचा
रैःसंपूज्यबालहस्तेबध्नीयादिति । बालग्रहशांत्यादिकंबालग्रहस्तवश्चशांतिकमलाक
रशांतिमयूखयोर्द्रष्टव्यः ॥ ॥ अथषष्ठीपूजनम् ॥ ॥ तद्यथा ॥ विघ्नेशजन्मदानांचजीवं
त्याश्चप्रपूजनम् ॥ जातादिपंचमेषष्ठेनिशीथेबलिमाहरेत् ॥ १ ॥ द्वारतृतीयभागेतुपु
त्तलैश्चापिकज्जलैः ॥ दक्षिणोत्तरयोर्देशेलेख्यचत्वारिपूजयेत् ॥ २ ॥ द्वारस्योर्ध्वंतृ
तीयभागइति ॥ ॥ अर्चयेद्दशदिक्पालान्गीतवादित्रनिःस्वनैः ॥ कृत्वाजागरणंरा
त्रौगीतैश्चशांतिपाठकैः ॥ ३ ॥ दशाहंसूतिकागारमायुधैश्चविशेषतः ॥ वह्निःसधू
मःसलिलापूर्णकुंभैःप्रदीपकैः ॥ ४ ॥ मुसलादितथाशस्त्रैर्वर्णकैश्चित्रितेनच ॥ विभू
तिरक्षांकुर्वीतसर्षपान्विकिरेत्तथेति ॥ ५ ॥ सूतिकावासनिलयाजन्मदानामदेव
ताः ॥ तासांयागनिमित्तंतुशुद्धिर्जन्मनिकीर्तितेति ॥ प्रथमेदिवसेषष्ठेदशमेचैवसर्व

दा॥ त्रिष्वेतेषुनकुर्वीतसूतकंपुत्रजन्मनीतिसंस्कारनृसिंहे ॥ ॥ तच्चपंचमषष्ठदिनेवापूर्व
रात्रौपित्रादिर्हिराचम्यप्राणानायम्यदेशकालसंकीर्तनांतेअनयोःसूतिकाबालकयोः
आयुरारोग्याभिवृद्ध्यर्थंसकलारिष्टशांतिद्वाराश्रीपरमेश्वरप्रीत्यर्थंविघ्नेशस्यजन्मदा
नांजीवंत्यपरनाम्न्याः षष्ठीदेव्याःशस्त्रगर्भाभगवत्याश्चयथामिलितोपचारैःपूजनंक
रिष्ये ॥ ॥ एतत्प्रतिमाःपीठादौवाक्षतपुंजेषुपूगीफलेषुविनिवेश्याः ॥ संप्रदायस्तुस्व
र्णमयीमेकांजीवंतिकाप्रतिमांकृत्वातस्याश्चअग्न्युत्तारणपूर्वकप्राणप्रतिष्ठांकुर्वंति ॥ स
र्वासांपृथग्वाएकतंत्रेणषोडशोपचारैःपूजनम् ॥ तद्यथा ॥ आयाहिवरदेदेविषष्ठीदेवी
तिविश्रुता ॥ शक्तिभिःसहपुत्रंमेरक्षरक्षवरानने ॥ १ ॥ मनोजूतिरितिप्रतिष्ठा ॥ अथ
ध्यानम् ॥ देवीमंजनसंकाशांचंद्रार्धकृतशेखराम्॥सिंहारूढांजगद्धात्रींकौमारींभक्त
वत्सलाम्॥खड्गंखेटंचबिभ्राणामभयांवरदांतथा ॥ तारकाहारभूषाढ्यांचिंतयामिन

वांशुकाम् ॥ १ ॥ ॐ श्रीश्चतेलुक्ष्मी० ॥ १ ॥ ॐ भूर्भुवः स्वःविघ्नेशजन्मदाषष्ठीदेवी
जीवंतिकाभ्योनमः ॥ ध्यायामि ॥ एवंसर्वत्र ॥ आगच्छवरदेदेविस्थानेचात्रस्थि
राभव ॥ आराधयामिभक्त्यात्वांरक्षबालंचसूतिकाम् ॥ १ ॥ॐ हिरंण्यवर्णांहरिंणींसुव
र्णरजुतस्रंजाम् ॥ चुंद्रांहिरण्मर्यींलुक्ष्मींजातवेदोमुमावंह ॥ ॥ ॐ भू० विघ्नेशाय०
विघ्नेशमावा० ॥ जन्मदायैषष्ठीदेव्यैनमः जन्मदांषष्ठीदेवीमावाह० ॥ ॐ शस्त्र
गर्भाभगवत्यैनमः शस्त्रगर्भाभगवतीमावाह० संध्यारागनिभंरक्तमासनंस्वर्णनि
र्मितम् ॥ गृहाणसुमुखीभूत्वारक्षबालंचसूतिकाम् ॥ ॐतांमुऽआवंहजातवेदोलुक्ष्मीम
नंपगामिनीम् ॥ यस्यांहिरंण्यम्विन्देयङ्गामुश्वम्पुरुंषानुहम् ॥ ॐ भू० विघ्ने० ॥ आस
नंसमर्पयामि ॥ गंगाजलंसमानीतंसुवर्णकलशेस्थितम् ॥ पाद्यंगृहाणमेबालंसूतिकां

चैवपालय ॥ ॐ अश्वपूर्णांरथमध्यांहस्तिनादप्रमोदिनीम् ॥ श्रियन्देवीमुपह्वयेश्री
र्मादेवीर्जुषताम् ॥ ॐ भू० वि० पाद्यं० ॥ अक्षतापुष्पगंधाढ्यमर्घ्यार्थनिर्मलंजलम् ॥
गृहाणपाहिमेपुत्रंसूतिकांभयहारिणि ॥ ॐ कांसोस्मितांहिरण्यप्राकारामार्द्राञ्ज्वलं
न्तींतृप्तान्तर्पयन्तीम् ॥ पद्मेस्थितांपद्मवर्णांतामिहोपह्वयेश्रियम् ॥ ॐ भू०वि०अर्घ्यं
सम० ॥ गृहाणाचमनीयंतुकर्पूरैलादिवासितम् ॥ सबालांसूतिकांपाहिजगन्मातर्न
मोस्तुते ॥ ॐ चंद्राम्प्रभासांयशसाज्वलन्तींश्रियंलोकेदेवजुष्टामुदाराम् ॥ ताम्पद्मनें
मिंशरणमहम्प्रपद्येअलक्ष्मीर्मेनश्यतान्त्वांवृणोमि ॥ ॐ भू० वि० आचमनंस० ॥११९॥
पंचामृतंगृहाणेदंपयोदधिघृतंमधु ॥ शर्करासहितंदेविपाहिबालंसमातृकम् ॥ ॐ घृतेन

सीतामधुनासमंज्यतांविश्वैर्देवैरनुमतामरुद्भिः ॥ ऊर्जस्वतीपयसापिन्वमानास्मा
न्सीतेपयसाभ्याववृत्स्व ॥ ॐ भू॰ वि॰ पंचामृतस्नानंस॰ ॥ दुकूलादिमयंदेवीना
नारत्नैःपरिष्कृतम् ॥ परिधत्स्वामलंवस्त्रंरक्षमेसुतमूतिके ॥ॐ उपैतुमांदेवसखःकीर्तिश्च
मणिनासह ॥ प्रादुर्भूतोसुराष्ट्रेस्मिन्कीर्तिमृद्धिंददातुमे ॥ ॐ भू॰ वि॰ वस्त्रंसमर्प
यामि ॥ नानारत्नमयंदिव्यंमुक्ताहारमयंशुभम् ॥ गृहाणकालरात्रित्वंरक्षमेसुतमूति
के ॥ ॐ क्षुत्पिपासामलांज्येष्ठाऽअलक्ष्मीर्नाशयाम्यहम् ॥अभूतिमसमृद्धिंचसर्वान्निर्णु
दमेगृहात् ॥ ॐ भू॰ वि॰ अलंकारान्समर्पयामि ॥ कर्पूरागरुकस्तूरीकंकोलादिसम
न्वितम् ॥ चंदनंस्वीकुरुत्वंमेरक्षबालंचमूतिकाम् ॥ ॐ गंधद्वारांदुराधर्षांनित्यपुष्टां

करीषिणीम् ॥ ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियम् ॥ॐभू०वि० चंदनंसमर्पयामि ॥
सुमाल्यानिसुगंधीनिमालत्यादीनिवैप्रभो ॥ गृहाणवरदेदेविरक्षबालंचसूतिकाम् ॥ॐ
मनसःकाममाकूतिम्वाचःसत्यमशीमहि ॥ पशूनांरूपमन्नस्यमयिश्रीःश्रयतांयशः
॥ ॐ भू० वि० पुष्पंसम० ॥ हरिद्राकुंकुमादीनिनानापरिमलानिच ॥ गृहाणकाल
रात्रित्वंरक्षबालंचसूतिकाम् ॥ ॐ अहिरिवभोगैः० ॥ ॐ भू० वि० परिमलद्रव्यंस
म० ॥ वनस्पत्युद्भवंधूपंदिव्यंस्वीकुरुदेविमे ॥ प्रसीदसुमुखीभूत्वारक्षमेसुतसूतिके ॥ॐ
कर्दमेनप्रजाभूतामयिसंभ्रमकर्दम ॥ श्रियंवासयमेकुलेमातरंपद्ममालिनीम्॥ भू०
वि० धूपंस०॥आज्यंवर्तिकृतंदेविज्योतिषांज्योतिषंतथा॥ जीवंतिकेगृहाणेमंरक्षमेसुत
सूतिके ॥ॐआपःस्रजन्तुस्निग्धानिचिक्लीतवसमेगृहे ॥ नीचदेवीम्मातरंश्रियम्वास

यंमेकुले ॥ ॐ भू० वि० दीपंसम० ॥ नैवेद्यंलेह्यंपेयादिषड्रसैश्चसमन्वितम् ॥ भुंक्ष्व
देविगणैर्युक्तारक्षमेसुतसूतिके ॥ ॐ आर्द्रांयःकरिणींयष्टींसुवर्णांहेममालिनीम् ॥
सूर्यांहिरण्मयींलक्ष्मींजातवेदोममावह ॥ भू० वि० नैवेद्यंसम० ॥ इदंफलंमयादे
विस्थापितंपुरतस्तव ॥ तेनमेपरितुष्टात्वंरक्षबालंचसूतिकाम् ॥ ॐ याः फलिनी० ॥
ॐ भू० वि० फलंस० ॥ नागवल्लीदलंरम्यंपूगीफलसमन्वितम् ॥ भद्रेगृहाणतांबूलं
पाहिमेसुतसूतिके ॥ ॐ आर्द्राम्पुष्करिणीं पुष्टींपिंगलांपद्ममालिनीम् ॥ चन्द्रांहिरण्मं
यींलक्ष्मींजातवेदोममावह ॥ ॐ भू० वि० तांबूलंसम० हिरण्यगर्भेतिदक्षिणां० ॐ
भू० वि० दक्षिणांस० ॥ कदलीगर्भसंभूतंकर्पूरंचप्रदीपितम् ॥ आरार्तिकमहंकुर्वेरक्ष

बालंचसूतिकाम् ॥ ॐ इदर्ठंहविः० ॐ भू० वि० कर्पूरनीराजनंसमर्पयामि ॥ नाना
सुगंधपुष्पाणियथाकालोद्भवानिच ॥ पुष्पांजलिंगृहाणेमंरक्षमेसुतसूतिके ॥ ॐ श्री
श्चतेलक्ष्मी० ॥ ॐ भू० वि० पुष्पांजलिसम० ॥ यानिकानि० सप्तास्येतिप्रदक्षि
णां० ॥ अथप्रार्थना ॥ षष्ठीदेविनमस्तुभ्यंसूतिकागृहशालिनी ॥ पूजितापरयाभ
क्त्यादीर्घमायुःप्रयच्छमे ॥ १ ॥ जननीजन्मसौख्यानांवर्धिनीधनसंपदाम् ॥ साधि
नीसर्वभूतानांजन्मदेत्वांनतावयम् ॥ २ ॥ गौरीपुत्रोयथास्कंदःशिशुत्वेरक्षितःपुरा ॥
तथाममाप्ययंबालंषष्ठिकेरक्षतेनमः ॥ ३ ॥ यथादाशरथीरामश्चतुर्मूर्तिर्भवप्रदे ॥
त्वयासंरक्षितस्तद्वद्बालंपाहिशुभप्रदे ॥ ४ ॥ विष्णुनाभिस्थितोब्रह्मादैत्येभ्योरक्षित
स्त्वया ॥ यथामेबालकंरक्षयोगनिद्रेनमोस्तुते ॥ ५ ॥ रक्षितौपूतनादिभ्योनंदगो
पसुतौयथा ॥ तथामेबालकंपाहिदुर्गेदेविनमोस्तुते ॥ ६ ॥ यथावृत्रासुरादिंद्रोरक्षि

तोदितिबालकः ॥ त्वयातथामेबालोयंरक्षणीयोमहेश्वरि ॥ ७ ॥ यथात्वयांजनीपुत्रो
हनुमान्रक्षितः शिशुः॥ तथामेबालकंरक्षदुर्गेदुर्गार्तिहारिणि ॥ ८ ॥ रुद्रस्वर्गाद्यथादेविक
श्यपादिसुतास्त्वया ॥ मातस्त्राहितथाबालंविष्णुमायेनमोस्तुते॥९ ॥ सर्वविघ्नानपाकृ
त्यसर्वसौख्यप्रदायिनि॥जीवंतिकेजगन्मातःपाहिनःपरमेश्वरि ॥ १० ॥ अनयापूजया
विघ्नेशस्यजन्मदाजीवंत्यपरनाम्नीषष्ठीदेवीशस्त्रगर्भाभगवत्यःप्रीयंताम् ॥ ततोदिक्पा
लपूजनम् ॥ ततोनीराजनम् ॥ सूतिकागृहेबलिंसोपस्करंदद्यात् ॥ तत्रमंत्रः ॥क्षेत्रस्या
धिपतेदेविसर्वारिष्टविनाशिनि ॥ बलिंगृहाणमेरक्षक्षेत्रंसूतींचबालकम् ॥ १ ॥ इमंसो
पस्करबलिंक्षेत्राधिपत्यैदेव्यैसमर्पयामि ॥ ततआगत्यद्वारस्योभयतः कज्जलेनद्वेद्व
मातरौलिखेत् ॥ तन्नामानि ॥ धिषणावृद्धिमाताचतथागौरीचपूतना ॥ आयुर्दाऽन्यो

भवंत्वेता अद्यबालस्यमेशिवाः ॥ पंचोपचारैःपूजयेत् ॥ सुवासिनीभोजनम् ॥विप्रेभ्य
श्चखाद्यतांबूलदक्षिणादिदद्यात् ॥तेभ्यआशिषोगृहीत्वा॥ दशमेऽह्निविसर्जनंकार्यम् ॥
जननाशौचमध्येप्रथमषष्ठदशमदिनेषुदानेप्रतिग्रहेचनदोषः ॥अन्नंतुनिषिद्धम् ॥ अत्र
पंचमषष्ठदिनयोःपुरुषाः शस्त्रहस्ताः स्त्रियश्चनृत्यगीतकारिण्यः अस्यांरात्रौजा
गरणंकुर्युः ॥ सूतिकागेहंसधूपाग्निदीपंशस्त्रमुसलांबुविभूतियुतं कार्यम् ॥ सर्षपांश्चसर्व
तोविकिरेत् ॥ अन्यदपियथाचारंकार्यम् ॥ विप्राश्चशांतिपाठंपठेयुः ॥ ॥ इतिसंस्कार
भास्करेषष्ठीपूजनम् ॥ ॥ अथरात्रिवर्गः ॥ रात्रिवर्गोनामशांतिपाठः ॥ तंचदशदि
नंसूतिकासमीपेप्रदोषसमयेजपेत् ॥ ॥ अद्यपू० तिथौसकलारिष्टशांतिपूर्वकंसूति
काबालकयोःआयुष्याभिवृद्ध्यर्थंश्रीपरमेश्वरप्रीत्यर्थंशांतिपाठजपंकरिष्यइतिसंक ॥१२२॥
ल्पः ॥ ॥ तत्रायंक्रमः ॥ गणानांत्वेतिप्रथमंश्रीश्चतेतदनंतरम्॥ब्रह्मयज्ञानम्प्रथम

मिदम्विष्णुस्तुत्र्यम्बकम् ॥ भूरसिभूमिप्रथममापोहिष्ठाततःपरम् ॥ तेजोसिशुक्रमि
तिचवायोयेतेघृतंघृतम् ॥ २ ॥ नवग्रहाणांमंत्राश्चदिक्पालानांतथैवच ॥ आशुःशिशा
नमारभ्यमर्माणयंतंततःपठेत् ॥ ३ ॥ दिवस्परिसमारभ्यविवृरुच्यायुषंजपेत् ॥ आ
नोभद्राःसमारभ्यजनित्वांतंततःपरम् ॥ ४ ॥ ऋचम्वाचंसमारभ्यअंतेतुशरदःशतात्॥
रात्रिवर्गमिमंजाप्यंबालानांभयनाशनम् ॥ ५ ॥ ॥ इतिसंस्कारभास्करेरात्रिवर्गक्र
मःसमाप्तः ॥ ॥ अथनामकरणसंस्कारनिर्णयः ॥ एकादशाहेद्वादशाहेवाविप्रस्यना
मकर्म ॥ क्षत्रियाणांत्रयोदशेषोडशेवादिने ॥ वैश्यानांषोडशेविंशतितमेवादिने ॥
द्वाविंशेमासांतेवाशूद्राणाम् ॥ दशम्यामुत्थाप्येतिप्रसवदिनमारभ्यदशम्यांरात्र्याम
तीतायामेकादशेह्निसूतिकामुत्थाप्यस्नापयित्वामातृपूजापूर्वकंनांदीमुखश्राद्धंव्य
तिरिक्तंत्रीन्ब्राह्मणान्भोजयित्वापितानामकरोति ॥ तद्यथोक्तम् ॥ अत्रपितृग्रहणाद

न्यत्रापिपितुर्नियमोऽवगम्यते ॥ अत्राप्यसन्निधौपितरिअन्यः कश्चित्कुलवृद्धःकरो
ति ॥ तत्र ॥ कृष्णोनंतोऽच्युतश्चक्री वैकुंठोथजनार्दनः ॥ उपेंद्रोयज्ञपुरुषोवासुदेवस्त
थाहरिः ॥ योगीशःपुण्डरीकाक्षोमासनामान्यनुक्रमात् ॥ अत्रयथाचारंचैत्रादिमा
र्गशीर्षादिर्वाक्रमः ॥ तच्च त्रिपुरुषवाचिदेवतावाचिस्विष्टं वायुग्माक्षरंप्रतिष्ठाकामः ॥
चतुरक्षरंब्रह्मवर्चसकामोनामकुर्यात् ॥ तच्चघोषवदादि॥घोषवंतिअक्षराणि ॥ गघङ ॥
जझञ ॥ डढण ॥ दधन ॥बभम ॥ नामादौ ॥ अंतःस्था यरलवाः नाम्नोमध्येभवं
ति ॥ दीर्घावसानम् ॥ कृत्प्रत्ययांतम् ॥ नतद्धितांतम्॥कन्यकायास्तुअयुग्माक्षरम् ॥
आकारांतम् ॥ तद्धितांतम्॥अत्रब्राह्मणस्यशर्मांतंनामकुर्यात्॥क्षत्रियस्यवर्मान्तम्॥ वै
श्यस्यगुप्तांतम्॥शूद्रस्यदासांतम् ॥ नाक्षत्रनामानितुचूचेचोलाश्विनीप्रोक्तेत्यादिज्यो
तिर्ग्रंथोक्तावकहडाचक्रानुसारेणाश्विन्यादिचतुश्चरणेषुचूडामणिश्चेदीशश्चोलेशोल

क्ष्मणइत्यादिकानिकुर्वंति ॥ कातीयानांकृत्तिकोत्पन्नस्याग्निशर्मेतिनक्षत्रदेवतासंब
द्धंनाक्षत्रंनामकुर्यात् ॥ नाक्षत्रनामैवाभिवादनीयंगुप्तंचामौंजीबंधनात मातापि
तरावेवजानीयाताम् ॥ व्यावहारिकंनामचतुर्थम्॥तच्चकवर्गादिषुतृतीयचतुर्थपंचमव
र्णहकारान्यतमवर्णाद्यावयवकम् । यरलवान्यतमम्मध्यवर्णयुतमृल्टवर्णरहितंविसर्गां
तम् ॥ पित्रादिपुरुषत्रयान्यतमवाचकंशत्रुवाचकभिन्नतद्धितप्रत्ययरहितंकृत्प्रत्ययां
तंयुग्माक्षरंपुंसामयुग्माक्षरंस्त्रीणांकार्यम् ॥ तद्यथा ॥ भक्ताइत्याबंतंदेवतानाम् ॥
मासनामसु ॥ चक्रिणी ॥ वैकुंठी ॥ वासुदेवी ॥ एतानि त्रीणिङीबंतानि ॥ हरिरि
त्येतन्नामकन्यापुत्रयोःसमानम् ॥ शेषाण्यष्टौ ॥ जनार्दना ॥ उपेंद्रा ॥ यज्ञपुरुषा
योगीशा ॥ पुंडरीकाक्षा ॥ कृष्णा ॥ अनंता ॥ अच्युता ॥ एतान्याबंतानिज्ञेयानी
तिधर्मसिंधौ ॥ एतन्नामकरणंकन्यायास्तु अयुजाक्षरमाकारांतं तद्धितप्रत्ययां

तंकार्यम् ॥ मासनामानितु ॥ श्रीर्लक्ष्मीः कमलापद्मासीतासत्याचरुक्मिणी ॥ मा
धवीचेंदिरादेवीतुलसीजांबवत्यपि ॥ एतानिमासनामानिकन्यायाःक्रमतोवदेत् ॥
इतिखंडूभट्टपद्धतौ ॥ ॥ तच्चजन्मतएकादशेऽह्निवायथाचारंनियतदिनेनामकरणं
कार्यम् । नियतकालेपिविष्टिवैधृतिव्यतीपातग्रहणसंक्रांत्यमावास्याश्राद्धदिनंचेत्तर्हि
नकार्यम्॥ नियतकालेक्रियमाणेगुरुशुक्रास्तबाल्यवार्धक्यवक्रातिचारमलमासादिनि
षेधोनास्ति ॥ नियतकालातिक्रमेतुज्योतिःशास्त्रोक्तशुभदिनेकार्यम्॥यदिकेनचित्प्र
कारेणप्राप्तकालेजातकर्मनभवतितदाअनादिष्टप्रायश्चित्तपूर्वकंनामकर्मकालेजात
कर्मनामकर्मचसहैकतंत्रेणकार्यम्॥सकृदेवभवेच्छ्राद्धमित्याशयस्तुप्रसिद्धः ॥ ॥ अ
थप्रयोगः ॥ तत्रायंक्रमःशिष्टाचारश्च ॥ नामाख्येमातृनांदीन्यजतिजननतोद्वादशे ॥१२४॥
कादशेवाविप्रांस्त्रीन्भोजयित्वाकृतमपिचभवेत्तद्धितंनैवपुंसः ॥ तस्यादौघोषवंतोयर

लवपुरतःशर्मवर्मेतिगुप्तेत्येतेविप्रादिवर्णास्त्रितयेषुअभिधानंत( ? )मीबंतमस्याः ॥ १ ॥
ततःकुमारपितामंगलंस्नात्वाऽहतेवाससीपरिधायधृतमंगलतिलकःशुभासनेउपवि
श्याचम्यप्राणानायम्यदेशकालकीर्तनांतेअस्यशिशोःबीजगर्भसमुद्भवैनोनिबर्हणा
युरभिवृद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंनामकरणंकरिष्ये ॥ तत्रनिर्विघ्नार्थंगणपतिपूज
नंस्वस्तिपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंचकरिष्येइतिकृत्वा ॥ अत्रपुण्याहवा
चनांतेप्रजापतिःप्रीयतामितिवदेत् ॥ नामकरणेअधिकारार्थंत्रीन्ब्राह्मणान्भोजयि
ष्ये ॥ अत्रशिष्टाचारप्राप्तंनामदेवतापूजनम् ॥ तद्यथा ॥ कांस्यपात्रेतंडुलान्प्रसार्यतदु
परिसुवर्णशलाकयाकुलदेवताप्रयुक्तमादावमुकदेवताभक्तइतिनाम ॥ मासनाम ॥
नक्षत्रनाम ॥ व्यवहारनाम ॥ एवंनामचतुष्टयंलिखित्वा ॥ ॥ अस्यशिशोर्दीर्घायु
ष्यप्राप्त्यर्थंनामदेवतापूजनंकरिष्यइतिसंकल्पः ॥ मनोजूतिरितिप्रतिष्ठा ॥ श्रीश्चते

सं० इतिमंत्रेणनामदेवताभ्योनमइतिषोडशोपचारैःसंपूज्य ॥ ततःदक्षिणतःमातुरुत्संगस्थ भा०
॥१२९॥ स्यशिशोर्दक्षिणकर्णेकथयति ॥ हेकुमारत्वंगणपतिभक्तोसि॥ हेकुमारत्वंकुलदेव्याभ
क्तोनाम्नामार्तंडोसि ॥ हेकुमारत्वंमासनाम्नाकृष्णोसि ॥हेकुमारत्वंनक्षत्रनाम्नाचूडाम
णिरसि ॥ हेकुमारत्वंव्यवहारनाम्नारामचंद्रोसीति ॥ इतिकथयित्वा ॥ मनोजूतिरिति
मंत्रपठनांतेविप्रैर्नामसुप्रतिष्ठितमितिवाचयित्वा ॥ ततोब्राह्मणानभिवादयेत् ॥ त
द्यथा ॥ हेकुमारत्वंगणपतिभक्तोसिसर्वान्ब्राह्मणानभिवादय ॥ इत्युपांशुपितावदेत्
आयुष्मान्भवसौम्यगणपतिभक्तः ॥ इतिद्विजाब्रूयुः ॥ हेकुमारत्वंमार्त्तंडशर्माकुलदे
व्याभक्तोसिसर्वान्ब्राह्म० आयु० मार्त्तंडशर्मा ॥ हेकुमारत्वंमासनाम्नाकृष्णशर्मासि ॥१२९॥
सर्वान्ब्रा० ॥ आयु० कृष्णशर्मा ॥ हेकमारत्वंनक्षत्रनाम्नाचूडामणिशर्मासि स०
॥ आयु० चूडामणिशर्मा ॥ हेकुमारत्वंव्यवहारनाम्नारामचन्द्रशर्मासिस० ॥ आ

यु॰ रामचन्द्रशर्मा ॥ ततोविप्राःवेदोसीतिमंत्रेणाशिषंशिशवेदद्युः ॥ ॐ वेदोसि
येनुत्वंदेववेदद्देवभ्योवेदोभवस्तेनुमह्यंवेदोभूयाः ॥ १ ॥ ॥ उपांशुलक्षणम् ॥
अभिवादननामेदमस्येत्यालोच्य चेतसा ॥ उपांशुनिर्विशेच्चैतं न जानीयुः परेयथे
ति ॥ ॥ अथास्यायुष्यंकरोतिदक्षिणकर्णमभिनिधायवाग्वाग्वागितित्रिरथास्यना
मधेयंकरोतिवेदोसीतितदास्यैतद्गुह्यमेवनामस्यादथदधिमधुघृतठंसठंसृज्यानंतर्हि
तेनजातरूपेणप्राशयति ॥ अथास्यायुष्यंकरोतिदक्षिणकर्णे ॥ ॐ अग्निरायुष्मान्त्स
वनस्प॰ ॥ ॐ सोमऽआ॰ ओषधी॰ ॥ ॐ ब्रह्मऽआ॰ त्तद्ब्राह्म॰ ॥ ॐ देवाऽ
आयु॰ मृतै॰ ॥ ॐ ऋषयऽआ॰ व्रतै॰ ॥ ॐ पितरऽआ॰ स्वधा॰ ॥ ॐ यज्ञऽ
आ॰ न्तसदक्षिण॰ ॥ ॐ समुद्र आ॰ न्त्सस्रवं॰ ॥ ॐ त्र्यायुषञ्जम॰ ॥ १ ॥ इ

सं० तित्रिः ॥ अथास्यदधिमधुघृतमेकीकृत्यप्राशयति ॥ ॐ भूस्त्वयिदधामि ॥ ॐ भु भा०
॥१२६॥ वस्त्व० ॥ ॐ स्वस्त्वयि० ॥ ॐ भूर्भुवस्वः सर्वंत्व० ॥ अथैनमभिमृशति ॥ ॐ अश्मा
भवपरशुर्भवहिरण्यमस्तुतम्भव ॥ आत्मावैपुत्रनामासिसजीवशरदःशतम् ॥ १ ॥ अ
थास्यमातरमभिमंत्रयते ॥ ॥ ॐ इडासिमै० ॥ १ ॥ अथैनंमातुःस्तनंप्रक्षाल्यप्रय
च्छति ॥ ॐ इमर्ठ॑स्तनु० ॥ १ ॥ यस्तेस्तनःइतिऋग्भ्याम् ॥ ॐ तंवाऽएतमाहुःअ
तिपिताबताभूरतिपितामहोबताभूः परमांबतकाष्ठांप्रापश्रियायशसाब्रह्मवर्चसेनय
ऽएवंविदोब्राह्मणस्यपुत्रोजायते ॥ १ ॥ ततःकर्तादेवताब्राह्मणांश्चनत्वा ॥ द
शसंख्याकान्ब्राह्मणान्भोजयिष्ये ॥ ब्राह्मणेभ्योदक्षिणांदत्त्वा तेभ्यआशिषोगृहीत्वा
यांतुमातृगणाःसर्वेइतिमातॄणांविसर्जनम् ॥ कुमार्याअपिनामकरणममंत्रकंकार्यम् ॥ इ ॥१२६॥
तिसंस्कारभास्करेनामकरणम् ॥ ॥ आंदोलशयनेपुंसोद्वादशोदिवसःशुभः ॥ त्रयो

दशस्तुशय्यायांननक्षत्रविचारणा ॥ १ ॥ अत्रदिनेशुभकालेकुलदेवतांयोगशायिनं
चसंपूज्यस्मृत्वानत्वाचमात्रादिसुभगस्त्रीभिःअलंकृतंशिशुंगीतवाद्यघोषपुरःसरमा
न्दोलेदक्षिणशिरसंनिधापयेत् ॥ प्राप्तकालेकुयोगसत्त्वेपिजातकर्मवत्कार्यम् ॥ इत्यां
दोलारोहणम् ॥ ॥ एकत्रिंशद्दिनेचैवपयःशंखेनपाययेत् ॥ अन्नप्राशननक्षत्रेदिवसेवा
परेशुभे ॥ १ ॥ अत्रोक्तदिनेशुभकालेगणपतिकुलदेवतांचसंपूज्यगोक्षीरंशंखेनधात्री
मातादक्षिणशिरसंशिशुमंकेनिधायआप्यायस्वेतिमंत्रेणपाययेत् ॥ इतिदुग्धपानम् ॥
अथनिष्क्रमणसंस्कारः ॥ तच्चद्वादशेह्निचतुर्थेमासेवायात्रोक्तशुभदिनेशुभकाले
कार्यम् ॥ तत्रायंक्रमः ॥ निष्कामस्तुर्यमासेभवतिसुदिवसेमातृनांदीमुखांतेतच्चक्षु
र्क्षकप्रपाठैर्दर्शयतिसविताजातपुत्रस्यनार्या ॥ कुर्यात्कन्यांविमंत्रैर्ग्रहमखमथवाकेचि
दिच्छंतिविप्रान्भोज्यंदानादिकृत्यंभवतिविधिरयंसर्वसंस्कारमुख्यः ॥ १ ॥ शिशु

नासहमंगलंस्नात्वाशुभासने उपविश्य आचम्यप्राणानायम्यदेशकालकीर्तनांतेम
मास्यशिशोःआयुरभिवृद्धिव्यवहारसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थं गृहान्निष्क्रमणं
करिष्ये ॥ स्वस्तिवाचनादिमातृपूर्वकनांदीश्राद्धांतंकृत्वा ॥ अत्रपुण्याहवाचनां
तेसविताप्रीयतामित्यूहः ॥ ततःपिताऽलंकृतंशिशुंमातृगृहीतंसुशकुनेगृहान्निष्क्रम्य
सूर्योदीक्षणंकारयेत् ॥ तत्रमंत्रः ॥ ॐ तच्चक्षुर्देवहितंपुरस्ताच्छुक्रमुच्चरत् ॥ पश्येम
शरदःशतंजीवेमशरदःशतंशृणुयामशरदःशतंप्रब्रवामशरदःशतमदीनाःस्या
मशरदःशतंभूयश्चशरदःशतात् ॥ १ ॥ देवतायतनेगच्छेत् ॥ गृहमागत्यसुवा
सिनीभिर्नीराज्यदशब्राह्मणान्भोजयिष्ये इतिसंकल्पयेत् ॥ ब्राह्मणेभ्योदक्षिणांद
त्त्वा ॥ तैराशिषोगृहीत्वा ॥ यांतुमातृगणाःसर्वेइतिमातॄणांविसर्जनम् ॥ ॥ कुमारस्या

स्मिन्नेवदिनेरात्रौशुभवेलायांचंद्रदर्शनंकार्यम् ॥ तद्यथा ॥ चंद्रार्कयोर्दिगीशानांदिशां
चवरुणस्यंच ॥ निक्षेपार्थमिदंदद्मितेत्वां रक्षंतु सर्वदा ॥ प्रमत्तंवाप्रसुप्तंवादिवारात्रम
थापिवा ॥ रक्षंतुसततंतेत्वांदेवाः शक्रपुरोगमाः ॥ १ ॥ इतिसंस्कारभास्करेनिष्क्र
मणसंस्कारः ॥ अथभूम्युपवेशनम् ॥ पंचमेचतथामासेशिशुंभूमौनिवेशयेत् ॥
तत्रसर्वेग्रहाःशस्ताभौमोप्यत्रविशेषतः ॥ १ ॥ तच्चध्रुवमृदुलघुनक्षत्रादिज्योतिःशास्त्रो
क्तशुभदिनेपूर्वाह्णेस्वस्तिवाचनंकृत्वावाराहंकूर्ममनंतंपृथ्वींचसंपूज्य ॥ ततोगोमयो
पलिप्तभूमौरंगवल्लीमंडलंकृत्वातत्रद्रोणसमानंगोधूमराशिंकृत्वा ॥ तत्रराशौमंगलगी
तवाद्यघोषपुरःसरमलंकृतंशिशुमुपवेशयेत् ॥ तत्रमंत्राः ॥ रक्षैनंवसुधादेविसदासर्व
गतेशुभे ॥ आयुःप्रमाणंलिखितंनिक्षिपस्वहरिप्रिये ॥ १ ॥ अचिरादायुषस्तस्ययेकेचि
त्परिपंथिनः ॥ जीवितारोग्यवित्तेषुनिर्दहस्वाचिरेणतान् ॥ २ ॥ धारिण्यशेषभूतानां

संं० मातात्वमसिकामधुक् ॥ अजराचाप्रमेयाचसर्वभूतनमस्कृता ॥ ३ ॥चराचराणांभूता भा०
॥१२८॥ नांप्रतिष्ठानाम्निर्याह्यसि ॥ कुमारंपाहिमातस्त्वंब्रह्मातदनुमन्यताम्॥४॥सुवासिनीभि
र्नीराज्यब्राह्मणेभ्योदक्षिणांदत्त्वातैराशिषोगृहीत्वाधान्यराशिंगुरवे दद्यात् ॥ एवंकु
मार्याअपि ॥ इतिभूम्युपवेशनम्॥ ॥अथान्नप्राशनम्॥षष्ठेमासेन्नप्राशनम्॥तच्चज्योतिः
शास्त्रोक्तशुभदिनेकार्यम्॥तत्रायंक्रमः ॥ अन्नप्राशोथनांदीश्रपर्यंतिचचरुंपायसंचाथहु
त्वातत्राघाराज्यभागौद्वितयमथघृताद्देवदेवींतुवाजः ॥ प्राणाद्यासूंश्चतस्रश्चरुहुतिरथहु
नेत्स्विष्टकृद्भूर्भुवाद्याःसर्वास्ताविंशतिस्तुमुदितमथशिशुंप्राशयेद्धुतंहेम्ना॥ १ ॥ ततः
पितासभार्यः शिशुनासहमंगलंस्नात्वाऽहतेवाससीपरिधाय धृततिलकः शुभासनेचो
पविश्याचम्यप्राणानायम्यदेशकालकीर्तनांते ममास्यशिशोर्मातृगर्भमंगलप्राशन ॥१२८॥
शुद्ध्यर्थमन्नाद्यब्रह्मवर्चसतेजइंद्रियायुर्बललक्षणफलसिद्धिबीजगर्भसमुद्भवैनोनिब

र्णद्वाराश्रीपरमेश्वरप्रीत्यर्थमन्नप्राशनाख्यंकर्मकरिष्ये ॥ तत्रनिर्विघ्नार्थंगणपति
पूजनंस्वस्तिपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंचकरिष्येइतिकृत्वा ॥ तत्रपुण्याह
वाचनांतेसवितापीयतामितिवदेत् ॥ ततःस्थंडिलेपंचभूसंस्कारपूर्वकंशुचिनामान
मग्निंप्रतिष्ठाप्यषोडशोपचारैःसंपूजयेत् ॥ ततोब्रह्मोपवेशनादि ॥ आसादितेविशे
षः ॥ सर्वान्षड्रसान्क्षारकटुतिक्तकषायमधुराम्लांल्लेह्यपेयचोष्यखाद्यंयवशाल्या
दिनिर्मितंघृतादिपाचितमन्नंतैजसपात्रेधृतम् ॥ पुस्तकशस्त्रवस्त्रादिशिल्पंचविन्यसेत
पवित्रच्छेदनादिआज्यभागांतंकृत्वानंतरमाज्येनाहुतिद्वयम् ॥ तत्रमंत्रौ ॥ ॐदेवींवा
चंमजनयंतदेवास्तांविश्वरूपाःपशवोवदंति ॥ सानोमंद्रेषमूर्ज्जंदुहानाधेनुर्वागस्मानु

---

१ शिलाशस्त्रादि ।

पुसुष्टुतैतुस्वाहा ॥ १ ॥ इदंवाचेन० ॥ ॐ देवींवा० नुपसुष्टुतैतुस्वाहा ॥ ॐ वाजोनाऽ
अद्यप्रसुवातिदानंवाजोदेवां२ऽऋतुभिःकल्पयाति ॥ वाजोहिमासर्वंवीरञ्जजानु
विश्वाऽआशावाजंपतिर्जयेयुठंस्वाहा ॥ २ ॥ इदंवाचेवाजाय० ॥ ततःस्थालीपा
केनाहुतिचतुष्टयम् ॥ ॐ प्राणेनान्नमशीयस्वा०इदंप्रा० ॥ ॐ अपानेनगंधान
शीयस्वा० इदमपानाय० ॐ चक्षुषारूपाण्यशीयस्वा० इदंचक्षुषे० ॥ ॐ श्रोत्रे
णयशोशीय०इदंश्रो० ॥ ततःस्थालीपाकेनस्विष्टकृत ॥ ततोमहाव्याहृत्यादिनवा
हुतयः ॥ ततःसंस्रवप्राशनादिप्रणीतामोकांतं होमशेषंसमाप्य ॥ ॥ ततःस्थाल्या
मासादितसर्वरसाञ्शाल्यादीन्यन्नानिच आनीयएकस्मिन्पात्रेप्रत्येकमुद्धृत्यसकृ
देवप्राशयेद्धंतेतिमंत्रेण ॥ ॐ हंत० ॥ हंतकारंमनुष्याइतिश्रुतेः ॥ ततोबालकंभूमौउ

प्रवेश्यतदग्रेपुस्तकशास्त्रवस्त्रादिशिल्पंविन्यस्यजीविकापरीक्षांकुर्यात ॥ शिशुस्स्वेच्छ
याप्रथमंयत्स्पृशेत् ॥ तेनैवतस्यजीविकाभविष्यतीतिज्ञायेत् ॥ ब्राह्मणेभ्योदक्षिणांद
त्वातैराशिषोगृहीत्वादशब्राह्मणान्भोजयिष्येइतिसंकल्प्य मातृणामग्नेश्चविसर्ज
नंकुर्यात् ॥ इतिसंस्का० भा० अन्नप्राशनम् ॥ अथशौनकोक्तदत्तपुत्रप्रतिग्रहविधान
निर्णयः ॥ तत्रादौतिथ्यादिनिर्णयः ॥ ज्योतिषसारसंग्रहे ॥ हस्तादिपंचकभिष
ग्वसुपुण्यभेषुसूर्येचभौमगुरुभार्गववासरेषु ॥ रिक्ताविवर्जिततिथिष्वलिकुंभलग्नेसिंहे
वृषेभवति दत्तपरिग्रहोयम् ॥ १ ॥ पुन्नाम्नोनरकाद्यस्मात्पितरंत्रायतेसुतः ॥ तस्मा
त्पुत्रइतिप्रोक्तः पितॄन्यःपातिसर्वतः॥इतिअयोध्याकांडेभरतंप्रतिरामवचनम् ॥ शौ
नकः ॥ अपुत्रो मृतपुत्रोवापुत्रार्थंसमुपोष्यच ॥ वाससीकुंडलेदद्यादुष्णीषंचांगुली
यकम् ॥ १ ॥ अन्वाधानादियत्तंत्रंकृत्वाज्योत्पवनादिकम् ॥ दातुःसमक्षंगत्वातुपुत्रंदे

हीतियाचयेत ॥ २ ॥ दानेसमर्थोदातास्मैयेयज्ञेनेतिपंचभिः ॥ देवस्यत्वेतिमंत्रेण 
हस्ताभ्यांपरिगृह्यच ॥ ३ ॥ अंगादंगेत्यृचंजप्त्वाचाघ्रायशिशुमूर्धनि ॥ गृहमध्येत
मादायचरुंहुत्वाविधानतः ॥ ४ ॥ यस्त्वाहृदेत्यृचाचैवतुभ्यमग्नेऽऋचैकया ॥ सो
मोददिदित्येताभिःप्रत्यृचंपंचभिस्तथा ॥ ५ ॥ स्विष्टकृतादिहोमंचकृत्वाशेषंसमाप
येत ॥ बंधुभिःसहभुंजीतब्राह्मणांश्चविशेषतः ॥ ६ ॥ ॥ दत्तकेविशेषः ॥ पितुर्गोत्रे
णयःपुत्रः संस्कृतःपृथिवीपते ॥ आचूडांतंनपुत्रःसपुत्रतांयातिचान्यतः ॥ १ ॥ चू
डोपायनसंस्कारानिजगोत्रेणवैकृताः ॥ दत्ताद्यास्तनयास्तेस्युरन्यथादासउच्यते ॥
॥ २ ॥ नत्वेकपुत्रिणोदद्युस्तथैवज्येष्ठपुत्रकमिति ॥ ब्राह्मणानांसपिंडेषुकर्तव्यः पुत्र
संग्रहः ॥ सोदकोवासगोत्रोवाअन्यत्रतुनकारयेदिति ॥ ॥ कात्यायनः ॥ अभ्रा
तृवृद्धवयसोअसंपद्दत्तपालने ॥ कुलस्योद्धरणार्थायग्राह्यांकन्यांविवाहयेदिति कन्या 

दत्तकग्रहणेविशेषः ॥ ॥ स्त्रीशूद्रयोस्तुविशेषः ॥ पराशरेणशूद्रकर्तृकहोमोविप्रद्वा
रैवोक्तः ॥ तथापिब्राह्मणस्यशूद्रत्वबाधापत्तेः ॥ अतएवदातापौराणमंत्रंपठेत् ॥ कु
लस्योद्धरणार्थायदेवाग्निद्विजसन्निधौ ॥ वंशविस्तरणार्थायप्रतिगृह्णामीमंसुतम् ॥ १ ॥
कन्याविषयेउत्तरार्धभेदः ॥ अप्रजस्त्वनिवृत्त्यर्थंकन्यासत्ताप्रगृह्यतामिति ॥ मूर्धन्यं
वघ्राणे ॥ अंगादंगानिसंभूतान्हृदयादीनिसर्वशः ॥ आत्मावैपुत्रनामासिसजीवश
तवत्सरान् ॥ १ ॥ इति ॥ होममंत्रः ॥ सोमोददद्गन्धर्वायगंधर्वोददद्ग्नये ॥ अनेन
अग्निनादत्तोयेनदत्तोमयाइममिति ॥ अथप्रयोगः ॥ पुण्येहनिसपत्नीकोयजमानः
शुभासनेउपविश्याचम्यप्राणानायम्यदेशकालकीर्तनांतेममअप्रजस्त्वप्रयुक्तपैतृक
ऋणापाकरणपुन्नामनरकत्राणद्वारावंशाभिवृद्ध्यर्थंसंततिविच्छेदजनितप्रत्यवायप
रिहारार्थंसनातनकुलधर्माणामुत्पत्तयेचसमस्तपितॄणांशाश्वतब्रह्मलोकनिवासार्थं

स्वस्योद्धर्तुकामोहंस्वकुलाप्तावनवत्पुत्रवतासमत्वसिद्धयर्थं श्रीपरमेश्वरप्रीत्यर्थंशौन
कोक्तविधिनापुत्रप्रतिग्रहंकरिष्ये ॥ कन्याविषयेविशेषः ॥ अप्रजस्त्वनिरासार्थंमम
समस्तपितॄणांनिरतिशयानंदवंशोद्धारकल्पोक्तफलावाप्तये श्रीपरमेश्वरप्रीत्यर्थमेत
त्कन्यायाःस्वकन्यारूपसत्ताकरणंकरिष्येइतिसंकल्पेऊहः ॥ तत्रनिर्विघ्नार्थंगणपति
पूजनंस्वस्तिपुण्याहवाचनमाचार्यवरणंविष्णुपूजनंचकरिष्येइतिकृत्वा विष्णुपू
जनंतुस्थंडिलात्प्राग्देशेमहीद्यौरित्यादिनाकलशं संस्थाप्योपरिविष्णुंपूजयेदिति ॥
कुलदेवतागुरूंश्चसंपूज्यनत्वापुत्रप्रतिग्रहांगविहितमग्निप्रतिष्ठापनं हवनंचकरिष्ये ॥
एवं कन्यासत्ताकरणांगत्वेनेति ॥ तत्रस्थंडिलेपंचभूसंस्कारपूर्वकंलौकिकाग्निंप्रति
ष्ठाप्य ॥ ततोदक्षिणतोब्रह्मासनादिप्रोक्षण्याःप्रत्युत्पवनांतंकृत्वा ॥ ततआचार्येणस
हदातुःसमक्षंगच्छेत् ॥ आचार्यद्वारायाच्ञांकारयेत ॥ आचार्योदातारंप्रत्येतस्मै

पुत्रंदेहीतियाच्ञांकुर्यात् ॥ ददामीतिदातावदेत् ॥ ततोदाता आचम्यप्राणानायम्य
देशकालकीर्तनांतेतववंशाभिवृद्ध्येममचपुत्रफलप्राप्तिकामः श्रीपरमेश्वरप्रीत्यर्थंपु
त्रदानंकरिष्ये ॥ कन्याविषयेतु ॥ तववंशोद्धारार्थंकन्यारूपसत्तासिद्ध्यर्थंचकन्या
स्वसत्तानिवृत्तिपूर्वकंतुभ्यमेतत्कन्यानिवेदनंकरिष्ये इतिऊहः ॥ तदंगविहितगणप
तिपूजनंकरिष्ये इतिकृत्वा ॥ ततोयथाशक्तिचंदनादिनाप्रतिग्रहीतारंसंपूज्यदानमं
त्राः ॥ ॐ येयज्ञेनदक्षिणयासमक्ताइंद्रस्यसख्यममृतत्वमानशम्॥तेभ्योभद्रमंगिरसो
वोऽअस्तुप्रतिगृभ्णीतमानवंसुमेधसः ॥१॥ यऽउदायन्पितरोगोमयंवस्वृतेनाभिन्दन्प
रिवत्सरेबलम् ॥ दीर्घायुत्वमंगिरसोवोऽअस्तुप्रतिगृभ्णीतमानवंसुमेधसः ॥ २ ॥ य
ऋतेनसूर्यमारोहयन्दिव्यप्रथयन्पृथिवींमातरंवि ॥ सुप्रजास्त्वमंगिरसोवोऽअस्तुप्र
तिगृभ्णीतमानवंसुमेधसः ॥ ३ ॥ अयन्नाभावदतिबलग्वोगृहेदेवपुत्रऋषयस्तुवृणो

तन ॥ सुब्रह्मण्यमंगिरसोवोअ० ॥ ४ ॥ ॐ विरूपामुऽइदृषयुस्तइद्गंभीरवपसः ॥
तेऽअंगिरसःमूनवुस्तेऽअग्नेःपारिंजज्ञिरे ॥ ५॥ इतिमंत्रपठनांते ॥ इमंपुत्रंतवपैतृकऋ
णापाकरणपुन्नामनरकोत्तारणार्थंवंशाभिवृद्ध्यर्थमात्मनश्चमुक्तयेश्रीपरमेश्वरप्रीत
येतुभ्यमहंसंप्रददेनमम ॥ कन्याविषयेविशेषः ॥ इमांकन्यांतवअप्रजस्त्वनिरासार्थंत्व
यासहएकविंशतिपुरुषोद्धरणार्थमात्मनश्चमुक्तयेवंशोद्धारकल्पोक्तफलावाप्तयेश्रीपरमे
श्वरप्रीतयेआत्मसत्तानिवृत्तिपूर्वकंतुभ्यंकन्यारूपसत्तांसंप्रददे नममेति ॥ एतद्दानो
दकंपुत्रविषयेप्रतिग्रहीतृहस्तेनिषिंच्य ॥ कन्याविषयेप्रतिग्रहीतृसमीपेजलमध्येजलं
क्षिपेदिति ॥ प्रतिगृह्णातुपुत्रंभवान् ॥ कन्यारूपसत्तांप्रतिगृह्णातुभवान् ॥ देवस्यत्वे
तिमंत्रेणहस्तद्वयेप्रतिगृह्णामीतिप्रतिगृह्यस्वांकेउपवेशयेत ॥ ततअंगादंगादितिमं

त्रेणशिशुंमूर्धन्यभिजिघ्रेत् ॥ ॐअंगादंगात्संभवसिहृदयादधिजायसे ॥ आत्मावैपुत्र नामासिसजीवशरदःशतम् ॥ १ ॥ ततोयुवासुवासाइतिमंत्रेणबालकायवस्त्रंपरिधायउ ष्णीषंबद्ध्वाकुंडलादिभिरलंकृत्यकुंकुमादिनातिलकं कृत्वाप्रावरणेनसंवेष्ट्य धृतच्छ त्रंगीतनृत्यमंगलवाद्यपुरःसरंब्राह्मणैः स्वस्तिनइंद्रेतिसुमंगलसूक्तं पठद्भिस्तंबालंगृहे आनीयपुरंध्रीभिर्नीराजयेत् ॥ ततोग्रहीता हस्तौपादौचप्रक्षाल्यअग्नेःपश्चिमतःशुभा सनेउपविश्यस्वदक्षिणतःपत्नींपत्न्युत्संगेबालंचोपवेश्य ॥ आचम्यप्राणानायम्यदेश कालकीर्तनांतेदत्तविधानांगहवनंकरिष्ये ॥ उपयमनकुशानादाययेत्यादिआज्यभा गांतंकृत्वा ॥ ततश्चरुमभिघार्यहोमः ॥ ॐ यस्त्वाहृदाकीरिणामन्यमानोमर्त्युमर्त्यो जोहवीमि ॥ जातवेदोयशोऽअस्मासुधेहिप्रजाभिरग्नेऽअमृतत्वमस्यांस्वाहा ॥ १ ॥ इदमग्नयेनमम ॥ ॐ यस्मैत्वंसुकृतेजातवेदऽउलोकमग्नेकृणवःस्योनम् ॥ अश्विनंस

संं० पुत्रिणंवीरवंतंगोमंतंरयिन्नशतेस्वस्तिस्वाहा ॥ २ ॥ इदमग्नयेनमम ॥ कौस्तुभेतुमं भा०
॥१३३॥ त्वद्वयेनैकाहुतिःप्रदर्शिता ॥ ॐ तुभ्यमग्नेपर्यवहन्त्सूर्यांवहतुनासह ॥ पुनःपतिभ्यो
जायांदाग्नेप्रजयासहस्वाहा ॥ १ ॥ इदंसूर्यासावित्र्यै० ॥ ॐ सोमोददद्गंधर्वायगंन्ध
र्वोददद्ग्नय ॥ रयिंचपुत्रांश्चादादग्निर्मह्यमथोऽइमांस्वाहा ॥ २ ॥ इदंसूर्यासावित्र्यै
न०॥ ॐइहैवस्तंमावियौष्टंविश्वमायुर्व्यश्नुतम् ॥ क्रीळंतौपुत्रैर्नप्तृभिर्मोदमानौस्वेगृ
हेस्वाहा ॥ ३ ॥ इदंसूर्यासावि० ॥ ॐ आनःप्रजांजनयतुप्रजापतिराजरसायसमंन
क्त्वर्यमा ॥ अदुर्मंगलीःपतिलोकमाविशशन्नाभवद्विपदेशंचतुष्पदेस्वाहा ॥ ४ ॥ इ ॥१३३॥
दंसूर्यासावित्र्यै० ॥ ॐ अघोरचक्षुरपतिघ्न्येधिशिवापशुभ्यःसुमनाःसुवर्चाः ॥ वीरसू

र्द्वेवकामास्योनाशन्नोभवद्द्विपदेशंचतुष्पदेस्वाहा ॥ ५ ॥ इदंसूर्यासावित्र्यै० ॥ ॐ इ
मांत्वमिंद्रमीढ्वःसुपुत्रांसुभगांकृणु ॥ दशास्यांपुत्रानाधहिपतिमेकादशंकृधिस्वाहा ॥
॥ ६ ॥ इदंसूर्यासावित्र्यैनमम ॥ ततोव्यस्तसमस्तव्याहृतिभिरष्टाहुतीर्हुत्वा ॥
उभाभ्यांस्विष्टकृत ॥ ततोभूराद्यानवाहुतयः ॥ ततःसंस्रवप्राशनादिप्रणीताविमो
कांतंहोमशेषंसमाप्य ॥ आचार्यायवस्त्रालंकारादिभिर्यथाविभवंपूजयित्वाधेनुंदद्या
त् ॥ ब्राह्मणेभ्योदक्षिणांदत्त्वातैराशिषोगृहीत्वा ॥ सभोपविष्टान्गंधतांबूलादिभि
स्तोषयेत् ॥ दशब्राह्मणान्भोजयेत् ॥ देवताग्निंचविसृज्य ॥ कर्मणःसंपूर्णतांवाच

---

१ ब्राह्मणभोजनांतेहोमपुरःसरपुत्रग्रहणंकार्यमितिकौस्तुभादिग्रंथाशयः ॥ तथापीदानींतनशिष्टाः प्रागेवपुत्रप्रतिग्रहंकुर्वंति ।

यित्वाईश्वरार्पणंकुर्यात् ॥ बंधुसुहृद्भिःसहभुंजीत ॥ ततःस्वस्तिवाचनादिनांदीश्रा
द्धांतंकृत्वाजातकर्मादीन्संस्कारान्कुर्यात ॥ अथवाकृतजातकर्मादिषुचौलोपनय
नादिकुर्यात ॥ इतिसंस्कारभा०दत्तपुत्रप्रतिग्रहविधानम् ॥ ॥ अथांतरितसंस्कारे
प्रायश्चित्तम् ॥ गर्भाधानादिचूडाकरणांतानिसंस्कारकर्माणिनियतकालान्यभिहिता
नि ॥ यदिदैववशात्पुरुषापराधाद्वादोषाद्वातेषांनियतस्यकालस्यअतिक्रमोभवति
तदाप्रायश्चित्तंविधीयते ॥ कात्यायनः ॥ आरभ्याधानमाचौलात्कालेतीतेतुकर्म
णाम् ॥ व्याहृत्याज्यंतुसंस्कृत्यहुत्वाक्रमयथाक्रमम् ॥ व्यस्तैःसमस्तैर्व्याहृत्याचत्वा
रिपंचवारुणम् ॥ प्रतिसंस्कारलोपेतुहुत्वाज्येनपृथक्पृथगिति ॥ अन्यच्च ॥ एतेष्वेकै
कलोपेतुपादकृच्छ्रंसमाचरेत ॥ चूडायाअर्धकृच्छ्रंस्यादापदीत्येवमीरितम् ॥
अनापदितुसर्वत्रद्विगुणंद्विगुणंचरेत् ॥ लुप्तेकर्मणिसर्वत्रप्रायश्चित्तंविधीयते ॥

प्रायश्चित्तेकृतेपश्चाल्लुप्तकर्मसमाचरेत् ॥ इति॥ अशक्तौगोदानम्॥अथवागोनिष्क्रयी भूतयथाशक्तिरजतद्रव्यदानमिति । अथोपनयनदिनात्पूर्वेद्युआचम्यप्राणानायम्य देशकालकीर्तनांतेअस्यकुमारस्यगर्भाधानादीनां वापुंसवनादीनां चूडाकरणांतानां संस्काराणां कालातिपत्तिजनितप्रत्यवायपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थमनादि ष्टप्रायश्चित्तहोमपूर्वकंगोदानंकरिष्ये ॥ स्थंडिलेपंचभूसंस्कारपूर्वकंलौकिकाग्निंप्रति ष्ठाप्य ॥ ब्रह्मोपवेशनाद्याज्यभागांते प्रतिसंस्कारेआज्येनव्यस्तसमस्तव्याहृतीश्चत त्त्वन्नोअग्नेइत्यादिपंचवारुणंहुत्वा॥ ततोमहाव्याहृत्यादिस्विष्टकृदन्तादशाहुतयः ॥ ततःसंस्रवप्राशनांतंहोमशेषंसमाप्य ॥ गांचदद्यात् ॥ अथवाकालातिपन्नसंस्कारप्रत्य वायपरिहारद्वारागोनिष्क्रयीभूतयथाशक्तिरजतद्रव्यंदातुमहमुत्सृजे ॥ तेनश्रीकर्मा

१ चौलस्योपनीत्यासहकरणेकुलधर्मप्राप्तत्वेकालातिपत्तिहोमंचौललोपप्रायश्चित्तंचनकार्यमितिधर्मसिंधौ.

गदे० ॥ इत्यंतरितसंस्कारेप्रायश्चित्तम् ॥ एवंकन्यायाश्चगर्भाधानादिचौलांताष्टसंस्का
राअतिक्रांताभवंति तदाअस्याःकन्यकायाइत्यूहेनप्रायश्चित्तमनादिष्टहोमंचकुर्या
त् ॥ ॥ अथसंक्षिप्तांतरितसंस्कारप्रयोगः ॥ यथा ॥ प्राङ्नामकरणाद्बालःप्रागन्नप्रा
शनाच्छिशुः ॥ कुमारकस्तुविज्ञेयोयावन्मौंजीनिबंधनम् ॥ तदूर्ध्वंब्रह्मचारीस्याद्वि
सर्गांतेतुस्नातकः ॥ कृतेविवाहेविधिवद्गृहस्थाश्रमिणंवदेदिति ॥ सर्वांतरितसंस्कारे
कुमारःपरिकीर्तितइति ॥ गणशःक्रियमाणानांमातृणांपूजनंसकृत् ॥ सकृदेवभवे
च्छ्राद्धंहोममंत्राःपृथक्पृथगिति ॥ ॥ ततोयजमानःपत्नीकुमारसहितउपनयनदिना
त्पूर्वेह्निमंगलंस्नात्वाऽहतेवाससीपरिधायधृतमंगलतिलकः शुभासने उपविश्य ॥
आचम्यप्राणानायम्यदेशकालकीर्तनांतेअस्यकुमारस्य बीजगर्भसमुद्भवैनोनिबर्हणे
नबीजकोत्पत्त्यतिशयमातृगर्भांमंगलप्राशनशुद्धिपुरुषताज्ञानोदयतेजइंद्रियबला

युर्वर्चोभिव्यवहारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं गर्भाधानादीन्वापुंसवनादीनन्नप्रा
शनांतान्संस्कारानेकतंत्रेणाद्यतथाचद्विजत्वसिद्ध्यावेदाध्ययनाधिकारसिद्ध्यर्थं श्वः
करिष्यमाणचौलोपनयनेब्रह्मवर्चस्त्वसिद्ध्यर्थंवेदारंभंचैकतंत्रेणकरिष्ये ॥ तदंगत्वे
ननिर्विघ्नार्थंगणपतिपूजनंस्वस्तिवाचनादिनांदीश्राद्धांतंकरिष्येइतिकृत्वा[1]अथांतरितसं
स्काराणामवश्यकर्तव्यानि ॥ ॐ पूषाभगइतिगर्भाधानम् ॥ ॐ हिरण्यगर्भोऽद्भ्यः
संभृतइत्येताभ्यांद्वाभ्यामृग्भ्यांपुंसवनम् ॥ ॐ भूर्भुवःस्वरितिमहाव्याहृतिभिर्विनया
मीतिसीमंतः ॥ ॐ भूस्त्वयिभुवस्त्वयिस्वस्त्वयिभूर्भुवःस्वःसर्वंत्वयिदधामीतिमेधाज
ननम् ॥ ॐ अग्निरायुष्मानित्यादिन्यायुषकरणांतंजातकर्म ॥ श्रीकुलदेवता० अमुकदे

१ प्रायश्चित्तेकृतेपश्चादतीतमपिकर्मवै । कार्यमित्येकआचार्यानेत्यन्येतुत्रिपक्षितइतिवचनात् ॥ जाता
दिसंस्कारावृत्तिः कार्यानकार्याइतिपक्षद्वयमितिधर्मसिंधौ ॥

वताभक्तमासनामनक्षत्रनामव्यवहारनामप्रतिष्ठाप्यवेदोसीत्याशिषमितिनामकर्म ॥
ॐ तच्चक्षुरितिनिष्क्रमणम् ॥ ॐ हन्त ॥ इतिमंत्रेणान्नप्राशनम् ॥ पुण्याहवाचनां
तेमृत्युःसवितासवितासविताचैतेप्रीयंतामिति ॥ इत्यंतरितसंस्कारप्रयोगः ॥ ॥ अथ
चूडाकरणसंस्कारः ॥ ॥ सांवत्सरिकस्यचूडाकरणम् ॥ संवत्सरोजातोयस्यससांव
त्सरिकः ॥ सचाद्यसंवत्सरस्यांतिमेमासे ॥ तृतीयेवाप्रतिहते ॥ अथतृतीयेसं
वत्सरे अपूर्णेचूडाकरणंकुर्यात् ॥ यथामंगलंवासर्वेषाम् ॥ अथवायथाकुलाचा
रंपंचमेब्देवाउपनीत्यासहक्रियतेतथाव्यवस्था ॥ उदगयनेशुक्लपक्षेगुरुशुक्रयो
र्बाल्यवार्द्धक्यास्तसमयाभावेअक्षयेअनधिकेचमासे ज्योतिःशास्त्रोक्तप्रशस्ततिथि
वारलग्नेशुभेमुहूर्तेदिनेएवकार्यः नतुरात्रौ ॥ यदिगर्भाधानादिसंस्कारलोपस्तत्प्रा
यश्चित्तंकालात्ययनिमित्तंप्रायश्चित्तहोमंचकृत्वाकार्यमिति ॥ प्रायश्चित्तप्रकारस्तुअं

तरितसंस्कारलोपप्रकरणेद्रष्टव्यः ॥ सूनोर्मातरिगर्भिण्यांचूडाकर्मनकारयेत् ॥ पंच
माब्दात्प्रागूर्ध्वंतुगर्भिण्यामपिकारयेत् ॥ सहोपनीत्याकुर्यांच्चेत्तदादोषोनविद्यते ॥
ज्वरितस्यचौलादिमंगलंनकार्यम् ॥ मातरिरजस्वलायामपिनकार्यम् ॥ विवाहव्रतचू
डासुमातायदिरजस्वला ॥ तस्याःशुद्धेःपरंकार्यंमंगलंमनुरब्रवीत ॥ नांदीश्राद्धोत्त
रंरजस्वलायांशांतिंकृत्वाकार्यम् ॥ केचित्तुमुहूर्तांतराभावेप्रारंभात्प्रागपिरजोदोषेश्री
पूजनादिविधिनाशांतिंकृत्वाकार्यमित्याहुः ॥ मातुलपितृव्यादेः कर्तुःपत्न्यांरजस्व
लायामपिमंगलंनेतिसिंधुः ॥ त्रिपुरुषात्मककुलेषण्मासमध्येमौंजीविवाहरूपमंग
लोत्तरंमुंडनाख्यंचूडाकर्मादिनकार्यम् ॥ संकटेतुअब्दभेदेकार्यम् ॥ चतुःपुरुषपर्यंतंकु
लेसपिंडीकरणमासिकश्राद्धांतप्रेतकर्मसमाप्तेःप्राक् चूडाकर्मादिकमाभ्युदयिकं कर्म
नकार्यम् ॥ एकमातृजयोरेकसंवत्सरेअपत्ययोर्द्वयोःसमानसंस्कारौनकार्यौ ॥ नसं

स्कारःसमानःस्यान्मातृभेदेविधीयते ॥ प्रारंभोत्तरंसूतकप्राप्तौकूष्मांडीभिर्ऋग्भि
र्घृतंहुत्वागांदत्त्वाचूडोपनयनोद्वहनादिकमाचरेत् ॥ चौलकर्मणिजातकर्मणिचभोज
नेसांतपनकृच्छ्रप्रायश्चित्तम् ॥ अन्येषुसंस्कारेषूपवासेनशुद्धिः ॥ चूडांताःसर्वेसंस्का
राःस्त्रीणाममंत्रकाःकार्याः ॥ होमस्तुसमंत्रकः ॥ इदानींशिष्टेषुस्त्रीणांचूडान्तसंस्कार
करणंनदृश्यते ॥ विवाहकालेचूडान्तलोपप्रायश्चित्तमात्रंकुर्वंति ॥ चौलोत्तरंमासत्रय
पर्यंतंसपिंडैः पिंडदानंतिलतर्पणंचनकार्यम् ॥ महालयेगयायांपित्रोः प्रत्यब्दश्राद्धेच
पिंडदानादिकार्यम् ॥ इतिधर्मसिंधौ ॥ इतिचूडाकरणोपयोगीनिर्णयः ॥ अथक्रमः ॥
चौलंस्याद्व्येकवर्षाद्युदितमथकुलान्मातरोबाह्यशालांत्रीन्विप्रान्भोज्यहुत्वा मनुमि
तमुदकैश्चौदनंदक्षिणेप्राक् ॥ त्र्येण्याशल्याविनीयत्रिकुशतरुणकंधार्यक्षूरैः सकेशा ॥१२७॥
न्छित्त्वोक्ष्णोगोमयेऽस्यादितिवदपरयोःकेशमेवंनृपाब्दे ॥ १ ॥ ॥ अथप्रयोगः ॥ त

त्रबहिःशालाभवति ॥ ज्योतिःशास्त्रोक्तेशुभमुहूर्तेमाताकुमारमादायाप्लाव्याहतेवा
ससीपरिधाप्यांकआधायपश्चादग्नेरुपविशति ॥ तत्रसंकल्पः ॥ देशकालौस्मृ०
अस्यकुमारस्यबीजगर्भसमुद्भवैनोनिबर्हणेन बलायुर्वर्चोभिवृद्धिव्यवहारसिद्धिद्वारा
श्रीपरमेश्वरप्रीत्यर्थंचौलकर्मकरिष्ये ॥ यदाउपनीत्यासहक्रियतेतदासंकल्पस्तु
चूडोपनयनेकरिष्येएवमूहःकर्तव्यः ॥ तत्रनिर्विघ्नार्थंगणपतिपूजनंस्वस्तिपुण्याह
वाचनमविघ्नपूजनंमंडपस्थापनंमातृकापूजनंवसोर्द्धारानांदीश्राद्धं चकरिष्ये इतिकृ
त्वा ॥ अत्रपुण्याहवाचनांतेप्रजापतिःप्रीयतामितिवदेत् ॥ चूडाकरणाधिकारार्थंत्री
न्ब्राह्मणान्भोजयिष्ये ॥ ततोबहिःशालायांस्थंडिलेपंचभूसंस्कारान्कृत्वासभ्यना
म्नोग्नेःस्थापनम् ॥ ततोब्रह्मोपवेशनादिपात्रासादने॥नात्रचरुः ॥ पात्रासादनानंतरमुप
कल्पनीयानि ॥ शीतोदकम् ॥ उष्णोदकम् ॥ नवनीतपिंडः ॥ घृतपिंडोदधिपिंडोवा

द्वादशांगुलदीर्घात्र्येणीशलली ॥ साग्राणिद्वादशांगुलदीर्घाणिसप्तविंशतिःकुशतरु
णानि ॥ ताम्रपरिष्कृतआयसक्षुरः ॥ आनडुहगोमयपिंडः ॥ नापितः ॥ वरश्चेति
पल्वलेवा ॥ पवित्रीकरणाद्याज्यभागानंतरंमहाव्याहृत्यादिप्राजापत्यंतानवाहु
तयः ॥ तद्यथा ॥ ॐ प्रजापतयेस्वा०इदंप्र० ॥ ॐ इंद्रायस्वा० इदमिं० ॐ अग्न
येस्वा० इदम० ॥ ॐ सोमायस्वा० इदंसो० ॥ ॐ भूःस्वा०इदमग्न० ॥ ॐ भुवः
स्वा० इदंवा० ॥ ॐ स्वःस्वा०इ० सूर्याय ॥ ॐ त्वन्नोऽअग्ने०स्वाहा ॥ इदमग्नी
वरुणाभ्यांन० ॥ ॐ सत्वन्नोऽअग्ने०स्वा०इदमग्नीवरुणाभ्यांन० ॥ ॐ अयाश्चाग्ने०
स्वा० ॥ इदमग्नयेअयसे० ॥ ॐ येतेशतम्व० ॥ इदंवरुणायसवित्रेविष्णवेविश्वेभ्यो
देवेभ्योमरुद्भ्यःस्वर्केभ्यश्चन० ॥ ॐउदुत्तमं० ॥ इदंवरुणायादितये० ॥ ॐ
प्रजापतयेस्वा० इदंप्रजाप० ॥ ततःस्विष्टकृत् ॥ ॐ अग्नयेस्विष्टकृतेस्वा० इदम०

स्विष्ट० ॥ ततःसंस्रवप्राशनादिप्रणीताविमोकांतंहोमशेषंसमाप्य ॥ ततएकस्मि
न्पात्रेशीतास्वप्सूष्णाऽअपआसिंचति ॥ आसिंचनसमयेकुमारेणअन्वारंभः कार्यइ
तिभर्तृयज्ञः ॥ ॐ उष्णेनवायउदकेनेह्यदितेकेशान्वप ॥ १ ॥ इतिमंत्रेण ॥ अथा
त्रउदकेनवनीतपिंडंघृतपिंडंदध्नोवाप्रास्यति ॥ तदुदकमादायदक्षिणगोदानसुंदति ॥
तच्चकारिकायाम् ॥ उंदनंकेशमूलेतुकेशमध्येविनीयनम् ॥ छेदनंचैवकेशाग्रेएषएवक्र
मोभवेदिति ॥ दक्षिणगोदानंशिरोदक्षिणपार्श्वस्थकेशप्लावनादीत्यर्थः ॥ ॥ ॐ स
वित्राप्रसूतादैव्याऽआपउंदंतुतेतनूम् ॥ दीर्घायुत्वायबलायवर्चसे ॥ इत्यनेनमं
त्रेण ॥ ततस्त्र्येण्याशलल्याकेशान्विनीय ॥ त्रिस्थानश्वेतयाशलल्याइति ॥ वि
नयनंकेशसमीकरणंत्रीणिकुशतरुणान्यंतर्दधाति ॥ ओषधेत्रायस्व ॥ १ ॥ इत्य

१ उंदनमार्द्रीकरणम् ।

ननेमंत्रेण ॥ शिवोनामेतिलोहक्षुरमादाय ॥ ॐ शिवोनामासिस्वधितिस्तेपितानमं
स्तेऽअस्तुमामाहिᳪसीः ॥ १ ॥ निवर्तयामीतिकेशकुशक्षुरसंलग्नीकरणम् ॥ ॐ निवं
र्तयाम्यायुषेन्नाद्यायप्रजननायरायस्पोषायसुप्रजास्त्वायसुवीर्याय ॥ १ ॥ छेदने
मंत्रः ॥ ॐ येनावपत्सविताक्षुरेणसोमस्यराज्ञोवरुणस्यविद्वान् ॥ तेनब्रह्माणोवपते
दमस्यायुष्यंजरदष्टिर्यथासम् ॥ १ ॥ इत्यनेनमंत्रेणसकेशानिकुशतरुणानिप्रच्छि
द्यानडुहेगोमयपिंडेप्रास्यत्युत्तरतः ॥ अग्नेरुत्तरतः गोमयपिंडस्यस्थापनमितिगदा
धरः ॥ ततस्तस्मिन्नेवदक्षिणगोदानेएवमेवापरंवारद्वयंतूष्णींकर्तव्यम् ॥ एकद्रव्येक
र्मावृत्तौसकृन्मंत्रवत्कर्मेतिकात्यायनः ॥ तत्प्रकारः ॥ उंदनम् ॥ विनयनम् ॥ त्रिकुश ॥१३९॥
तरुणांतर्धानम् ॥ सँल्लग्नीकरणम् ॥ छेदनम् ॥गोमयपिंडेप्रासनम् ॥एवमुक्तेनप्रकारेणपु

नरेकवारंकर्तव्यम् ॥ पश्चिमगोदानेअप्येवमेवकर्मकरोति ॥ ॐ सवित्राप्रसू० ॥ १ ॥
इत्यनेनपश्चिमगोदानेउंदनम् ॥ त्रेण्याशलल्याविनयनम् ॥ ॐ ओषधेत्रायस्वेतित्रि
कुशतरुणांतर्धानम् ॥ ॐ शिवोनामेतिलोहक्षुरग्रहणम् ॥ ॐनिवर्तयामीतिसँल्लग्नीकर
णम् ॥ छेदनेमंत्रविशेषः ॥ ॐ त्र्यायुषंजमदग्नेरिति ॥ गोमयपिंडेप्रासनम् ॥ पुनःपश्चि
मगोदानेएवमेवापरंवारद्वयंतूष्णींकर्तव्यम् ॥ तत्प्रकारः ॥ उंदनम् ॥ विनयनम् ॥ त्रिकु
शतरुणांतर्धानम् ॥ सँल्लग्नीकरणम् ॥ छेदनम् ॥ गोमयपिंडेप्रासनम् ॥ एवमुक्तेनप्रकारेण० ॥
अथोत्तरगोदाने ॥ ॐ सवित्राप्रसूताइतिमंत्रेणउंदनम् ॥ त्र्येण्याशलल्याविनयनम् ॥
ॐ ओषधेत्रायस्वेतित्रिकुशतरुणांतर्धानम् ॥ शिवोनामेतिलोहक्षुरग्रहणम् ॥ ॐ नि
वर्तयामीतिसंलग्नीकरणम् ॥ छेदनेमंत्रविशेषः ॥ ॐ येनभूरिश्चरादिवंज्योक्चपश्चा
द्धिसूर्यम् ॥ तेनतेवपामिब्रह्मणाजीवातवेजीवनायसुश्लोक्यायस्वस्तये ॥ १ ॥ इति

मंत्रेणच्छेदनंगोमयपिंडेप्रासनम् ॥ पुनरुत्तरगोदानेएवमेवापरमुक्तप्रकारेणवारद्वयं
तूष्णींकर्तव्यम् ॥ उंदनम् ॥ विनयनम्॥त्रिकुशतरुणांतर्धानम्॥सँहन्नीकरणम्॥छेदन
म् ॥ गोमयपिंडप्रासनम्॥ततस्त्रिःक्षुरेणशिरःप्रदक्षिणंपरिहरति ॥ ॐ यत्क्षुरेणमज्जयि
तासुपेशसावप्तावावपतिकेशाञ्छिन्धिशिरोमास्यायुःप्रमोषीः ॥ १ ॥ सकृन्मंत्रेण
द्विस्तूष्णींशिरसःसमंतात्क्षुरभ्रामणम् ॥ ततस्ताभिरद्भिःशिरःसमुंद्यनापितायक्षुरंप्रय
च्छति ॥ ॐ अक्षण्वंपरिवपइतिमंत्रेण ॥ सचनापितउदङ्मुखस्थितस्यकुमारस्यप्रा
क्संस्थंप्राङ्मुखस्थितस्यउदक्संस्थंशिरोवपेत् ॥ यथामंगलंकेशशेषकरणमित्यस्या
यमर्थः ॥ कुलव्यवस्थयाशिखास्थापनम् ॥ केचित्पंचशिखाः ॥ केचिदेकशिखाः ॥
यस्ययथाप्रसिद्धिस्तस्यतथाशिखास्थापनम् ॥ यथा ॥ केशशेषंततःकुर्याद्यस्मिन्गोत्रे ॥१४०॥
यथोचितम् ॥ कुर्वन्त्यन्येशिखामात्रमंगलार्थमिहक्वचित्॥कांबोजानांवसिष्ठानांदक्षि

णेकारयेच्छिखाम् ॥ द्विभागेऽत्रिकश्यपानांमुंडाश्चभृगवोमताः ॥ पंचचूडाआंगिरस
एकावाजसनेयिनामिति ॥ ततःसर्वान्केशान्गोमयपिंडेवस्त्रादिनावेष्ट्यअनुगुप्तंकृ
त्वागवांगोष्ठेस्थापयेत् ॥ अथवापल्वलस्योदकांतेउदकसमीपेस्थापयेत् ॥ पल्वलं
तडागः ॥ ततश्चूडाकरणसंस्कारकर्त्तास्वाचार्यायवरंददाति ॥ वरंगोनिष्क्रयम् ॥ स्मृ
त्युक्तान्दशसंख्याकान्ब्राह्मणान्भोजयिष्ये ॥ यांतुदेवेतिमातृणांविसर्जनम् ॥ इति
संस्कारभास्करेचूडाकरणम् ॥ ॥ स्पृष्टास्पृष्टेशातातपः ॥ बालस्याभ्युक्षणंप्रोक्तंशिशो
राचमनंस्मृतम् ॥ रजस्वलादिसंस्पर्शेस्नानमेवकुमारके ॥ १ ॥ याज्ञवल्क्यः ॥ चां
डालादिषुसंस्पर्शेसचैलंस्नानमाचरेत् ॥ तोयेनिमज्जनंविनाशुद्धिर्नास्तीतिनिश्चयः ॥
॥ २ ॥ इतिसंस्कार्यस्यस्पृष्टास्पृष्टविचारः ॥ ॥ अथकर्णवेधः ॥ सौवर्णीराजपु
त्रस्यराजतीविप्रवैश्ययोः ॥ शूद्रस्यचायसीसूचीकर्त्तव्यामूर्यरंध्रयुक् ॥ १ ॥ कर्ण

रंध्रेरवेश्छायाप्रविशेदग्रजन्मनः ॥ स्त्रीणांयथेच्छंरंध्रंचकर्णाभरणधारणेइति ॥ तच्च
वर्षेतृतीयेपंचमेवाज्योतिःशास्त्रोक्तशुभमासेशुक्लपक्षेशुभदिनेशुभमुहूर्त्तेकार्यम् ॥ कृ
तमंगलस्नानअहतेवाससीपरिधायधृतमंगलतिलकः शुभासनेप्राङ्मुखउपविश्याच
म्यप्राणानायम्यदेशकालकीर्तनांतेअस्यकुमारस्य आयुरभिवृद्धिव्यवहारसिद्धिद्वा
राश्रीपरमेश्वरप्रीत्यर्थंकर्णवेधंकरिष्ये ॥ तदंगत्वेननिर्विघ्नार्थंगणपतिपूजनंकरिष्ये
इतिकृत्वा ॥ ततोगणेशसरस्वतीकुलदेवताब्रह्मविष्णुशिवान्नवग्रहाँल्लोकपालान्ब्राह्म
णांश्चनत्वाकुमारंप्राङ्मुखंशुभासनेउपवेश्य ॥ तद्धस्तेमधुरंदत्त्वा ॥ दक्षिणंकर्णमभि
मंत्रयते ॥ ॐ भद्रंकर्णेभिरितिमंत्रेण ॥ ततोवामकर्णमभिमंत्रयते ॥ॐवक्ष्यन्तीवेदागनी ॥१४१॥
गन्तिकर्णंप्प्रियर्ठ॑सखायंपरिषस्वजानाः ॥ योषेवशिङ्क्तेवितताधिधन्वञ्ज्याइयर्ठ॑

समंनेपूरयंन्ति ॥१ ॥ ततःशिशोःकर्णवेधस्थलमारक्तरसेनांकयित्वायथाविभवंसुवर्णा
दिसूच्यामंगलसूत्रोपेतयाकुशलसुभगस्त्रियाकर्णवेधयेत ॥ कुमारस्यपूर्वंदक्षिणक
र्णम्॥कुमार्यास्तुपूर्वंवामकर्णवेधयेत् ॥ यथाशक्तिब्राह्मणान्भोजयेत् ॥ तेभ्यश्चदक्षिणां
दत्त्वातेभ्यआशिषोगृहीत्वा ॥ सुवासिन्यैचकुंकुमतांबूलादिदत्त्वागणपतिंविसृजेत् ॥
अथकर्णवेधनक्षत्रात्तृतीयनक्षत्रेकर्णक्षालनमुष्णोदकेनरोहणार्थंकार्यम् ॥ रूढौचकर्णौ
यथाभरणधारणक्षमताभवतितथावर्धनीयौ ॥ पुंसःसूर्यरश्मिप्रवेशपर्यंतरंध्रंवर्धयेत ॥
स्त्रीणांयथेच्छम् ॥ इतिसंस्कारभास्करेकर्णवेधः ॥ ॥ जातकर्मादिचूडाकरणांतानि
संस्कारकर्माणिकुमार्यास्तुअमंत्रकाणिकार्याणि ॥ होमस्तुसमंत्रकः ॥ स्त्रीशूद्रयोस्तु
गर्भाधानादिविवाहांतानवसंस्काराः ॥ तत्रापिशूद्रस्यकेवलपौराणविधिनाइतिहरि
हरभाष्येनिर्देशः ॥ यथा ॥ जातकर्मसमारभ्यस्त्रीणांचूडांतसर्वशः ॥ होमःसमंत्र

कःकार्यःसंस्कारस्तुअमंत्रकः ॥ १ ॥ इतिस्त्रीविषये ॥ शूद्रेतुप्रागुक्तम् ॥ अथवर्धाप
नर्निर्णयः ॥ तत्त्ववर्षपर्यंतंप्रतिमासेजन्मतिथौकार्यम् ॥ तदनंतरंप्रत्यब्देजन्मतिथौ
कार्यम् ॥ तिथिद्वैधेयत्रजन्मर्क्षयोगःसातिथिर्ग्राह्या ॥ दिनद्वयेजन्मर्क्षयोगसत्त्वासत्त्व
योरौदयिकीद्विमुहूर्ताधिकाग्राह्या ॥ द्विमुहूर्तन्यूनाचेत्पूर्वा ॥ जन्ममासेधिमाससत्त्वे
शुद्धमासेकर्तव्यम् ॥ नत्वधिके ॥ इदंवर्धापनंबाल्येपित्रादिनाकार्यम् ॥ पश्चात्तुस्व
यमेवेति ॥ ॥अथप्रयोगः ॥ जन्मदिनेकुमारपत्नीसहितोयजमानःमंगलंस्नात्वाऽहते
वाससीअलंकारांश्चपरिधाय धृतमंगलतिलको मातापित्रोर्गुर्वाचार्यकुलदेवताविप्रां
श्चनमस्कृत्यगृहाभ्यंतरतःशुभासने प्राङ्मुखउपविश्य स्वदक्षिणतःपत्नींतद्दक्षिणतः
कुमारमुपवेश्यधृतपवित्रपाणिराचांतः प्राणानायम्यदेशकालकीर्तनांते अस्यकुमार
स्य दीर्घायुःश्रीतेजोवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थमद्य जन्मदिने वर्धापनाख्यंकर्म

करिष्ये ॥ स्वयंकरणेममचदीर्घायुस्तेजोवृद्धिद्वारा श्रीप० प्रीत्यर्थमद्यमदीयज
न्मदिनेवर्धापनाख्यंकर्मकरिष्ये ॥ इतिसंकल्पः ॥ तत्रनिर्विघ्नार्थंगणपतिपूजनं
स्वस्तिपुण्याहवाचनंचकरिष्येइतिकृत्वा ॥ ततःश्रीपण्यादिपीठेपंक्तिरूपेणाक्षतपुं
जेषुदेवताआवाहयेत् ॥ तद्यथा ॥ ॐ गणपतयेन० गणपतिमावाह० एवंसर्वत्र ॥
ॐदुर्गायै० ॥ ॐ कुलदेवतायै० ॥ ॐ प्रजापतये० ॥ ॐ विष्णवे० ॥ ॐ महेश्व
राय० ॥ ॐसूर्याय० ॥ ॐसोमाय० ॥ ॐ भौमाय० ॥ ॐ बुधाय० ॥ ॐ बृ
हस्पतये० ॥ ॐ शुक्राय० ॥ ॐशनैश्चराय० ॥ ॐराहवे० ॥ ॐकेतवे० ॥ ॐ
कालाय० ॥ ॐयुगाय० ॥ ॐसंवत्सराय० ॥ ॐ अयनाय० ॥ ॐऋतवे० ॥ ॐमा
साय० ॥ ॐ पक्षाय० ॥ ॐ जन्मतिथयेनमः ॥ ॐजन्मर्क्षाय० ॥ ॐजन्मयोगा
य० ॥ ॐजन्मकरणायनमः ॥ ॐजन्मराशये० ॥ ॐजन्मलग्नायनमः ॥ ॐशि

वायै० ॥ॐसंभूत्यै०॥ॐप्रीत्यैन० ।ॐसंतत्यै० ॥ ॐअनसूयायै० ॥ ॐक्षमायैन० ॥ ॐ
उपविष्टायै०॥ ॐभद्रायैन० ॥ ततःपंक्तिरूपेणाष्टदलानित्रीणिविरच्यतदुपरि
पूगीफलेदेवताआवाहयेत् ॥ ॐषष्ठीदेव्यै० ॥ ॐमार्कंडेयाय० ॥ ॐजमदग्नये० ॥
पुनस्तदग्रेपंक्तिरूपेणाक्षतपुंजेषु ॥ अश्वत्थाम्नेनमः अश्वत्थामानमावाहयामि ॥ ए
वंसर्वत्र॥ ॐ बलये० ॥ ॐव्यासाय० ॥ ॐविभीषणाय० ॥ ॐकृपाचार्याय० ॥
ॐपरशुरामाय०॥ ॐ कार्त्तिकेयाय० ॥ पुनःपंक्तिरूपेणाक्षतपुंजेषु ॥ ॐइष्टदे
वतायै०॥ स्थानदेवतायै०॥ ॐवास्तुदेवतायै० ॥ ॐक्षेत्रपालाय०॥ ॐ पृथि
व्यै० ॥ ॐअद्भ्यः० ॥ ॐतेजसे०॥ ॐ वायवे० ॥ ॐआकाशाय० ॥ सर्वासांसमं
तात्प्रागादिदिक्षुवापंक्तिरूपेण॥ ॐ इंद्राय० ॐ अग्नये० ॐ यमाय० ॥ ॐ नि ॥१४३॥
र्ऋतये० ॥ ॐ वरुणाय० ॥ ॐ वायवे० ॥ ॐ कुबेराय० ॥ ॐ ईशानाय०॥ ॐ

ब्रह्मणे० ॥ ॐ अनंता० ॥ इत्यावाह्य ॥ मनोजूतिरितिप्रतिष्ठाप्य ॥ आवोदेवेतिमंत्रेण षोडशोपचारैः संपूज्य ॥ ॐ आवोंदेवाऽसईमहेवामम्प्रत्यध्वरे ॥ आवोंदेवासऽ आशिषोयज्ञियासोहवामहे ॥ १ ॥ इतिमंत्रेण॥ ॐ भूर्भुवः स्वः मार्कंडेयाद्यावाहि तदेवताभ्योनमःइत्यावाहनादिषोडशोपचारसमर्पणम् ॥ षष्ठ्यैदधिभक्तनैवेद्यम् ॥ अ न्येभ्यः पायसादि ॥ प्रार्थना । जयदेविजगन्मातर्जगदानंदकारिणि ॥ प्रसीदमम कल्याणिनमस्तेषष्ठिदेवते ॥ १ ॥ आयुष्प्रदमहाभागसोमवंशसमुद्भव ॥ महातपो निधिश्रेष्ठमार्कंडेयनमोस्तुते॥ २ ॥ चिरंजीवोयथात्वंभोभविष्यामितथामुदे ॥ रू पवान्वित्तवानायुःश्रियायुक्तंचमांकुरु ॥ ३ ॥ कर्तापिताचेत्तर्हिश्रियायुक्तंशिशुंकुरुइ ति ॥ मार्कंडेयनमस्तेस्तुसप्तकल्पांतजीवन॥आयुरारोग्यंमेदेहिप्रसीदभगवन्मुने ॥१॥

कर्तापिताचेद् आयुरारोग्यंबालायदेहि त्वं भगवन्मुनेइति ॥ चिरंजीवोयथात्वं
भोमुनीनांप्रवरोद्विज ॥ कुरुष्वमुनिशार्दूलतथामांचिरजीविनम्॥१॥ कर्त्तापिताचेत् ॥
बालंमेचिरजीविनमिति ॥ जमदग्नेमहाभागमहातेजोमयोज्ज्वल ॥ आयुरारोग्यसि
द्ध्यर्थमस्माकंवरदोभव ॥१॥ कर्तापिताचेद्बालायवरदोभव ॥ त्रैलोक्येयानिभूतानि
स्थावराणिचराणिच ॥ ब्रह्मविष्णुशिवःसार्धंरक्षांकुर्वंतुतानिमे ॥ १ ॥ प्रीयंतांदेव
ताःसर्वाःपूजांगृह्णंतुतामम ॥ प्रयच्छंत्वायुरारोग्यंयशःसौख्यंचसर्वदा ॥ २ ॥ मं
त्रन्यूनंक्रियान्यूनंद्रव्यन्यूनंमहामुने ॥ यदर्चितंमयादेवपरिपूर्णंतदस्तुमे ॥ ३ ॥ अ
नयापूजयामार्कंडेयाद्यावाहितदेवताःप्रीयंताम् ॥ ततःपायसेनसर्वेभ्योभूतेभ्योनमइ
तिबलिंदद्यात् ॥ क्वचित्स्थंडिलेपंचभूसंस्कारपूर्वकंलौकिकाग्निंप्रतिष्ठाप्य ॥ ब्रह्मोप
वेशनाद्याज्यभागांतंकृत्वा ॥ ततोघृताक्ततिलैर्नाममंत्रेणषष्ठीदेवीमार्कंडेयजमदग्नी

नांप्रीत्यर्थमष्टाष्टसंख्ययाअन्वाहितदेवतानामेकैकयाहुत्या महाव्याहृत्याष्टाविंश
तिसंख्ययाचजुहुयात् ॥ शेषेणस्विष्टकृत् ॥ ततोभूराद्यानवाहुतयआज्येन ॥ ततः
संस्रवप्राशनादिप्रणीताविमोकांतंहोमशेषंसमाप्य ॥ दानानिदद्यात् ॥ तत्रादौसुव
र्णयुक्ततिलपात्रदानम् ॥ तिलाःकश्यपसंभूतास्तिलाःपापहराःस्मृताः ॥ तिलकांचन
दानेनदीर्घायुष्यंददातुमे ॥ १ ॥ इदंतिलपात्रंसदक्षिणाकंदीर्घायुष्यप्राप्तिकामनया
मार्कंडेयाद्यावाहितदेवताप्रीत्यर्थममुकशर्मणेब्राह्मणायतुभ्यमहंसंप्रददे ॥ घृतपा
त्रदानम् ॥ आज्यंतेजसमुद्दिष्टमाज्यंयज्ञेप्रतिष्ठितम् ॥ आज्यपात्रप्रदानेनदीर्घायुष्यं
कुरुष्वमे ॥ १ ॥ इदमाज्यपात्रंसदक्षिणाकंदीर्घायुःश्रीप्राप्तिकामनयाश्रीमार्कण्डेया
द्यावाहितदेवताप्रीत्यर्थममुकशर्मणेब्राह्मणायतुभ्यमहंसंप्रददे ॥ गोदानमपिदद्यात् ॥
ततस्तिलशर्करायुतंपयःपिबेत् ॥ तत्रमंत्रः ॥ सतिलंशर्करामिश्रमंजलयर्धमितंपयः ॥

मार्कंण्डेयाद्बलंलब्ध्वापिबाम्यायुर्विवृद्धये ॥ २ ॥ इतिमंत्रेणपिबेत ॥ ब्राह्मणान्गं धादिभिःसंपूज्यतेभ्यश्चदक्षिणां दत्त्वातैराशिषोगृहीत्वाआवाहितदेवताअग्निंचविसृ ज्य ॥ यथाशक्तिब्राह्मणान्भोजयित्वा ॥ यस्यस्मृत्येतिनत्वा ॥ सुहृद्बंधुभिःसहस्व यंभुंजीतेति ॥ ग्रंथांतरेतुमातुरेवसुवासिन्याश्चहरिद्राकुंकुमपुष्पतांबूलादिभिःसंपू ज्यताभ्यांचनीराज्यअनंतरम्अक्षतपुंजेषुकुमुदांषष्ठींदेवींजन्मर्क्षदेवतांकुलदेवतां चसं पूज्यब्राह्मणान्संपूज्यतेभ्यश्चापूपपूरिकापायसयुक्तानिकुमुदादिदेवताप्रीतये पुत्रायुर्विव र्धनार्थंयथाशक्तिवायनानिदद्यात् ॥ तेभ्यश्चदक्षिणांदत्त्वातैराशिषोगृहीत्वा ॥ सुवा सिन्यैशिशवेचभोजनंदत्त्वादेवतांविसृज्ययस्यस्मृत्येतिनमेत् ॥ इतिवर्धापनप्रयोगः ॥

अथाक्षरलेखनारंभनिर्णयः ॥ मार्कण्डेयः ॥ पंचमेसप्तमेवाब्देपूर्वस्यान्माजिबंधना त ॥ तत्रचैवाक्षरारंभःकर्तव्यस्तुशुभेदिने इति ॥ पंचमेसप्तमेवावर्षेअक्षरलेखनारंभ

उत्तरायणेकार्यः ॥ अत्रकुंभस्थःसूर्योवर्ज्यः ॥ शुक्लपक्षःशुभःप्रोक्तःकृष्णश्चांत्यत्रिकं
विना ॥ द्वितीयातृतीयापंचमीदशम्येकादशीद्वादशीत्रयोदश्यःश्रेष्ठाः ॥ अश्विनीमृगा
र्द्रापुनर्वसुपुष्यहस्तचित्रास्वात्यनुराधा श्रवणधनिष्ठाशततारकारेवत्योभौमशनिभि
न्नवाराश्चशुभाः ॥ तत्रायंक्रमः ॥ संपूजयेद्गणाधीशन्तथैवचसरस्वतीम् ॥ कुलदेवींतत
श्चैवपूजयेच्चबृहस्पतिम् ॥ नारायणंमहालक्ष्मींगंधधूपादिभिस्तथा ॥ स्वविद्यासूत्रका
रांश्चस्वविद्यांचविशेषतः ॥ एतेषामेवदेवानांनाममंत्रेणपूजनम् ॥ कृत्वाहोमं
स्वशाखोक्तमाघारांतंसमाचरेत् ॥ पूर्वोक्तदेवतानांचनाम्नातुजुहुयाद्घृतम् ॥ प्राङ्मु
खोगुरुरासीनःपश्चिमाभिमुखंशिशुम् ॥ कुर्यादक्षरसंस्कारलेखनंवाचनादिकम् ॥
राजत्यांपाटिकायांवैप्रसार्यकुंकुमादिकम् ॥ सुवर्णलेखनीयेनलिखेत्तत्राक्षराणिवै ॥
नमोगणेशायतथासरस्वत्यैनमस्तथा ॥ नमःकुलदेवतायैश्रीगुरुभ्योनमस्त

था ॥ लक्ष्मीनारायणाभ्यांचलिखित्वापंचनामभिः ॥ ॐ नमःसिद्धमित्या
दिलेखयित्वाअनुक्रमात् ॥ एवंलिखित्वाआचार्यः शिशुहस्तेनपूजयेत् ॥
तथैवतेनसंलेख्यपुनस्त्रिर्वाचयेत्ततः ॥ आचार्यंपूजयेत्पश्चाद्वस्त्रालंकारभूषणैः ॥ त्रि
भिःप्रदक्षिणाकार्यादेवताश्चाथवैगुरुम् ॥ ब्राह्मणान्पूजयेद्भक्त्यागंधपुष्पाक्षतादिभिः ॥
तोषयेद्दक्षिणादिभिराशिषंपरिगृह्यच ॥ नीराजनंततःकुर्यात्सुवासिन्याःकरेणच ॥
उष्णीषंगुरवेदद्याद्देवताग्निविसर्जयेदिति ॥ अथप्रयोगः ॥ तत्रपंचमेवर्षेज्योतिःशास्त्रो
क्तउदगयनेगुरुशुक्रास्तरहितेशुभमासेशुक्लपक्षेशुभेदिने सुमुहूर्तेयजमानः शिशुना
सहमंगलंस्नात्वाऽहतेवाससीपरिधायालंकृत्य धृतमंगलतिलकःशुभासनेउपविश्या
चम्यप्राणानायम्यदेशकालकीर्तनांते अस्यशिशोःलेखनवाचनादिविपुलविद्याज्ञान
प्राप्तयेविद्यारंभंकरिष्ये ॥ तत्रनिर्विघ्नार्थंगणपतिपूजनंकरिष्येइतिकृत्वा ॥ ततस्तंदुला

ष्टदलेगणेशंसरस्वतींकुलदेवतांगुरुंलक्ष्मींनारायणंचावाह्यअक्षतपुंजेषुपंक्तिरूपेणना
रदंपाणिनिंपतंजलिंसांख्यंकात्यायनंपारस्करंयास्कंकपिंजलंगोभिलंजैमिनिंविश्व
कर्माणमाचार्यंव्यासंचावाह्य ॥ सविद्यामूत्रंव्याकरणंभाष्यादिकंचसंस्थाप्य ॥ ना
ममंत्रेणषोडशोपचारैःसंपूज्यप्रार्थयेत ॥ सर्वविद्येत्वमाधारःस्मृतिज्ञानप्रदायके ॥
प्रसन्नावरदाभूत्वादेहिविद्यांस्मृतिंयशइति ॥ अनयापूजयाआवाहितदेवताःप्रीयंताम्॥
ततःस्थंडिलेपंचभूसंस्कारपूर्वकंलौकिकाग्निंप्रतिष्ठाप्यसंपूज्य ॥ ततोदक्षिणतोब्रह्मा
सनाद्याज्यभागांतंकृत्वा ॥ आज्येनावाहितदेवतानामष्टाष्टसंख्याहुतीर्हुत्वा ॥ ततो
महाव्याहृत्यादिस्विष्टकृदंतादशाहुतयः ॥ ततःसंस्रवप्राशनम् ॥ पवित्राभ्यांमार्जनं
अग्नौपवित्रप्रतिपत्तिः ॥ ब्रह्मणेपूर्णपात्रदानम् ॥ प्रणीताविमोकः ॥ आपःशिवाइतिमं
त्रेणविमोकजलेनमूर्धानमभिषिंचयेत् । एवंहोमशेषंसमाप्य॥ततोबालकआवाहितदे

वताअध्यापनगुरुंचनमस्कृत्य ॥ अध्यापनगुरोःसमीपेप्रत्यङ्मुखमुपविश्यरजता
दिपाटिकायांकुंकुमादिकंप्रसार्यतदुपरिसुवर्णशलाकया॥श्रीगणेशायनमः ॥ श्रीसर
स्वत्यैनमः ॥ श्रीकुलदेवतायैनमः ॥ श्रीगुरुभ्योनमः ॥ श्रीलक्ष्मीनारायणाभ्यांन
मः ॥ ॐ नमःसिद्धम् ॥ इत्यादिसंलिख्य ॥ पूजनमंत्रः॥ॐपावकानःसरस्वतीवाजेभि
र्वाजिनीवती ॥ ॥ यज्ञंवष्टुधियावसुः ॥ १ ॥ ॐ लिखितसरस्वत्यैनमः॥इतिमंत्रेण
षोडशोपचारैःसंपूजयेत् ॥ गुरुःकुमारहस्तात्त्रिवारंलेखनवाचनादिकंकारयेत् ॥ अ
नंतरंकुमारःदेवताक्षरंगुरुंच त्रिःप्रदक्षिणीकृत्यगुरुंसंपूज्यतस्मैचोष्णीषंसमर्प्य नम
स्कृत्य । आचार्यंगंधादिभिःसंपूज्यतस्मैअन्यब्राह्मणेभ्यश्चदक्षिणांदत्त्वातैराशिषोगृ
हीत्वा ॥ सुवासिन्याकुमारंनीराज्य । देवताग्निंविसृज्य । अन्येभ्यस्तांबूलादिकंप्र

दापयेत् ॥ इति सं० भा० विद्यारंभविधिः ॥ ॥ अथोपनयनमुच्यते ॥ ॥ तत्रका
लः ॥ सूत्रम् ॥ अष्टवर्षंब्राह्मणमुपनयेत् ॥ गर्भाष्टमेवावर्षेब्राह्मणमुपनयेत् ॥ एकाद
शवर्षंराजन्यमुपनयेत् ॥ द्वादशवर्षंवैश्यमुपनयेत् ॥ अत्रापिकालावधिश्च ॥ आ
षोडशाद्वर्षाद्ब्राह्मणस्यानतीतःकालो भवत्याद्वाविंशाद्राजन्यस्याचतुर्विंशाद्वैश्यस्ये
ति ॥ यथामंगलंवासर्वेषामुपनयनंकार्यम् ॥ यथामंगलशब्देनस्मृत्यंतरोक्तंपंचवर्षा
दिकालाभिधानम् ॥ कैश्चित्तु ॥ उपनयनशब्देनोपनयनमेवाभिधीयतेतदयुक्तम् ॥ उ
पनयनविषयंप्रयोजकव्यापारस्योपनायनशब्दवाच्यत्वाल्लक्षणायांमानाभावादि
तिहेमाद्रिः ॥ अन्येतुआचार्यसमीपनयनांगकंगायत्र्युपदेशप्रदानम् ॥ गायत्र्याब्राह्म
णमसृजदितिश्रुतौगायत्र्याब्राह्मणमुपनयीतेतिकात्यायनस्मृतौचोपनयनस्यगाय
त्र्युपदेशांगत्वदर्शनात् । एवंचोपनयनपदंयोगरूढंसमिद्दर्शादिपदस्येवांगवाचिनोप्यु

पनयनपदस्यतत्संबंधेनप्रधानसंज्ञात्वोपपत्तेरित्याहुः ॥ परेतुपंकजपदस्येवएकत्र यौगिकस्यरूढस्यचयोगरूढपदवाच्यत्वात् ॥ अत्रतूपनयनेयोगस्यगायत्र्युपदेशेच रूढेश्चसद्भावेनैकत्रविद्यमानत्वाभावान्नयोगरूढत्वमुपनयनपदस्य तेनसमीपनयन स्यैवप्रधानत्वादित्याहुर्गृह्यमितिसंस्काररत्नमालायाम् ॥ वसंतेब्राह्मणंग्रीष्मेराजन्यंश रदिवैश्यमिति ॥ माघादिपंचमासेषुमेखलाबंधनंशिशोः ॥ ॥ ज्येष्ठमासेविशेषेणसर्व ज्येष्ठस्यवर्जयेत् ॥ ज्येष्ठमासेनज्येष्ठस्यजन्ममासेनसर्वशः ॥ इतिस्मृत्यंतरे ॥ वृ त्तशते ॥ नजन्मधिष्ण्येनचजन्ममासेनजन्मकालीयदिनेविदध्यात् ॥ ज्येष्ठेनमासि प्रथमस्यसूनोस्तथासुतायाअपिमंगलानि ॥ १ ॥ संग्रहे ॥ मिथुनेसंस्थितेभानौज्ये ष्ठमासोनदोषकृत् ॥ राजमार्तंडे ॥ जातंदिनंदूषयतेवसिष्ठोह्यष्टौचगर्गोनियतंदशा त्रिः ॥ जातस्यपक्षंकिलभागुरिश्चशेषाःप्रशस्ताःखलुजन्ममासे ॥ जन्ममासतिथौ

मेचविपरीतदलेसति ॥ कार्यंमंगलमित्याहुर्गर्गभार्गवशौनकाः ॥ संग्रहे ॥ जन्म
मासेनिषिद्धेपिदिनानिदशवर्जयेत् ॥ आरभ्यजन्मदिवसाच्छुभाःस्युस्तिथयोपराः ॥
जन्ममासेचजन्मर्क्षेनजन्मदिवसेपिच ॥ आद्यगर्भसुतस्याथदुहितुर्वाकरग्रहःइति ॥
करग्रहोविवाहः ॥ इतिरत्नमालायाम् ॥ तच्चोदगयनेज्योतिःशास्त्रोक्तशुभमासेशुक्लप
क्षेगुरुशुक्रास्तबाल्यवार्धक्यादिदोषरहिते प्रदोषानध्यायादितिथिरहिते दुष्टवासरर्क्ष
दुर्योगादिदोषरहितेशुभेदिनेसुलग्नेसुमुहूर्तेकार्यम्॥ अथतिथ्यादि ॥ ज्योतिर्निबंधेनृसिं
हः ॥ तृतीयापंचमीषष्ठीद्वितीयावापिसप्तमी ॥ पक्षयोरुभयोश्चैवविशेषेणसुपूजिताः॥
धर्मकामोसितेपक्षेकृष्णेचप्रथमातथा ॥ कृष्णेत्रयोदशीकेचिदिच्छंतिमुनयस्तथा ॥
द्वादश्यैकादशीचैवमध्यमेचप्रक्षतइति ॥ धर्मोदशमी ॥ कामस्त्रयोदशी ॥ सिते
शुक्लेपक्षेधर्मकामौग्राह्यौ ॥ कृष्णेचेत्यत्रचकारःसितेपक्षेइत्यस्यानुकर्षणार्थः ॥ तेन

शुक्लप्रतिपदोपिग्रहणम् ॥ केचिदाचार्याः कृष्णपक्षांतर्वर्तिनीमप्युपनयनेस्वीकुर्वंति ॥
मध्यमेचेत्यत्रपक्षद्वयइतिज्ञेयम् ॥ टोडरानन्देवसिष्ठः ॥ नैमित्तिकमनध्यायंकृष्णे
चप्रतिपद्दिनम् ॥ मेखलाबंधनेशस्तंचौलेवेदव्रतेषुचेति ॥ अयंचप्रतिपद्दिनविधिर्नैमि
त्तिकानध्यायविधिश्चातीतकालस्यार्तस्यबटोरुपनयनविषयः ॥ प्रशस्ताप्रतिपत्कृष्णे
कदाचिच्छुभगेविधौ ॥ चंद्रेबलयुतेलग्नेवर्षाणामतिलंघनमितिव्यासोक्तेः ॥एवम्॥ चंद्रे
बलयुतेलग्नाच्छुभभावेशुभेक्षिते॥ चतुर्दशींप्रशंसंतिकुमारेवयसाधिकइति ॥ चतुर्दशी
विधिरपि ॥ स्वाध्यायवियुजोघस्राःकृष्णप्रतिपदादयः ॥ प्रायश्चित्तनिमित्तेतुमेखला
बंधनेमता इतिकालादर्शादिधृतवृद्धगार्ग्यवचनात्सर्वेषांनैमित्तिकानध्यायानांकृष्ण
प्रतिपदादिनित्यानध्यायानांचप्रायश्चित्तोपनयनपरतैवनापूर्वोपनयनपरता ॥ वियु
जोविषमाः॥ घस्रादिनानि॥ स्वाध्यायवियुजोदिवसास्तृतीयापंचमीसप्तमीनवम्येका

दर्शीत्रयोदश्यंताःप्रायश्चित्तोपनयनेउपयुज्यंतइत्यर्थः ॥ अमावास्यात्वत्रापिनिषिद्धै
व॥ अमावास्यातुसर्वत्रनिंदिताशुभकर्मणीतिवचनात् ॥ अपरार्के ॥ नष्टेचंद्रेऽष्टमेशुक्रे
निरंशेभास्करेतथा ॥ कर्तव्यंनोपनयनंनानध्यायेगलग्रहइति ॥ निरंशस्वरूपंज्योति
र्निबंधे ॥ राशेःप्रथमभागस्थोनिरंशःसूर्यउच्यतइति ॥ अत्रिः ॥ पराजितेतिनीचस्थे
नीचेशुक्रेगुरौतथा ॥ व्रतिनंयदिकुर्वीतसभवेद्वेदवर्जितइतिराजमार्तंडः ॥ नष्टेशुक्रेतथा
जीवेनिरंशेचैवभास्करे ॥ उपनीतस्यशिष्यस्यजडत्वंमृत्युरेवचेति ॥ युगादिदिना
नध्यायानामपिप्रतिप्रसवमाह ॥ भरद्वाजः ॥ याचैत्रवैशाखसितातृतीयामाघस्य
सप्तम्यथफाल्गुनस्य॥कृष्णेद्वितीयोपनयेप्रशस्ताप्रोक्ताभरद्वाजमुनींद्रमुख्यैरिति ॥
अत्रचैत्रसिततृतीयामाघशुक्लसप्तम्योर्मन्वाद्योः प्रतिप्रसवः ॥ मन्वादिषुतयोःस्मृत्य
र्थसारेपाठात् ॥ वैशाखतृतीयायुगादेरपि ॥ मुहूर्ततत्त्वे ॥ त्रयोदश्यादिचतुष्कंसप्त

म्यादित्रयंचतुर्थींचअष्टौगलग्रहास्त्याज्यागर्गस्यमतेतथाषष्ठीति ॥ अत्राप्यपवा
दः ॥ षष्ठीसप्तमीत्रयोदशीनांविनियोगोपन्यासेनदर्शितः ॥ अयंगलग्रहापवादोमू
काद्युपनयनविषयइतिकेचित् ॥ स्मृत्यंतरे ॥ अनध्यायस्यपूर्वेद्युरनध्यायात्परेऽह
नि ॥ व्रतारंभंविसर्गंचविद्यारंभंचवर्जयेदिति ॥ एतदपवादोद्वितीयासप्तमीत्रयोदशी
नांविनियोगोपन्यासेनदर्शितः ॥ स्मृतिसारे ॥ सोपपदामूपनीतःपुनःसंस्कारमर्ह
तीति ॥ अयंचनिषेधोयजुर्वेदिनांभवति ॥ वेदव्रतोपनयनेस्वाध्यायाध्ययनेतथा ॥ न
दोषोयजुषांसोपपदास्वध्यापनेपिचेतिस्मृतिदर्पणेस्मृत्यंतरोक्तेरितिकेचित् ॥ महानि
बंधेष्वदर्शनादिदंनिर्मूलंतेनतेषामपिनिषेधोस्त्येवेत्यन्ये ॥ ताश्चोक्तास्तत्रैव ॥ ज्येष्ठशु
क्लद्वितीयातुआश्विनेदशमीसिता ॥चतुर्थीद्वादशीमाघेएताःसोपपदाःस्मृताइति॥चतु
र्थीद्वादशीमाघइत्यत्रसितेत्यनुषज्यते ॥ वासरानाहनारदः ॥ गुरुशुक्रबुधानांतुवाराः

श्रेष्ठतमाःस्मृताः ॥ अधमःसोमवारस्तुसूर्यवारस्तुमध्यमः ॥ वारौमंदारयोर्वर्ज्यौक्र
ष्णेवर्ज्यौनिशापतेः ॥ अस्तंगतस्यसौम्यस्यवारोवर्ज्योद्विजन्मनामिति ॥ मंदः श
निः ॥ आरोभौमः ॥ निशापतिश्चंद्रः ॥ सौम्योबुधः ॥ तथा ॥सर्वेषांजीवशुक्रज्ञवा
राः प्रोक्ताव्रतेशुभाः ॥ चंद्रार्कौमध्यमौज्ञेयौसोमबाहुजयोःकुजः ॥ शाखाधिपति
वारश्चशाखाधिपबलंतथा ॥ शाखाधिपतिलग्नंचदुर्लभंत्रितयंव्रतेइति ॥ गुरुशुक्रौभौम
बुधावृग्वेदाद्यधिपाः स्मृताः ॥ सर्वेषांब्राह्मणादीनाम् ॥ जीवोबृहस्पतिः ॥ ज्ञोबुधः ॥
बाहुजः क्षत्रियः ॥ बलंगोचराष्टवर्गादि ॥ शाखाधिपबलासंभवेदोषमप्याह म
दनरत्नेवृद्धगार्ग्यः ॥ शाखाधिपेबलिनिकेन्द्रगतेचमौंजीबंधस्तदीयदिवसेषुशु
भायकृत्स्यात् ॥ अस्मिन्बलेनरहितेतुपुनर्द्विजानांस्याद्वर्णसंकरइतिप्रवदंतितज्ज्ञा इति ॥
तथा ॥वर्णाधिपबलमप्यपेक्षते ॥ सदानुकूलेचैकस्मिन्वर्णेशेबलशालिनि ॥ ब्राह्मणा

दे: प्रकुर्वीतकुमारंव्रतचारिणमितिपराशरोक्तेः ॥ पतीसितेज्यौविप्राणांनृपाणांकुज
भास्करौ ॥ वैश्यानांशशभृत्सौम्याविविवर्णाधिपाःस्मृताइतितेनैवव्यवस्थाप्रदर्श
नाच्च ॥ मदनरत्नेराजमार्तंडः ॥ पितुःसूर्यबलंश्रेष्ठंशाखावर्णेशयोर्बटोः ॥ सर्वेषांगुरु
चंद्रर्क्षबलंश्रेष्ठंव्रतादिषु ॥ मौंजीबंधेविवाहेचप्रतिष्ठायांविशेषत इति ॥ सर्वेषामित्यने
नयेषांनशाखाधिपागुरुस्तेषामपिबहूनांतत्पितॄणांचगुरुबलमावश्यकम् ॥ उभयोर
लाभेबटोरावश्यकमितिध्वन्यते ॥ संकटेचंद्रताराद्यभावेप्यधिकारायदानमुक्तं
ज्योतिर्निबंधे ॥ चंद्रेचशंखंलवणंचवारेदिनेविरुद्धेत्वथतंडुलांश्च ॥ धान्यंचदद्यात्क
रणेतथाभेयोगेविरुद्धेकनकंचदेयमिति ॥ दिनेतिथौ ॥ नित्यकालेबटोर्गुरुबलाला
भेशांत्यातत्कालः ॥ अनित्यकालेनैवमित्याहनारदः ॥ बालस्यबलहीनोपिशांत्या
जीवोबलप्रदः ॥ यथोक्तवत्सरेकार्यमनुक्तेनोपनायनमिति ॥ केषुचिद्दुष्टस्थानेषुस्थि

तेतु गुरौशांत्यापिनोपनयनाधिकारइत्याहवसिष्ठः ॥ बंधौतृतीयेरिपुराशिसंस्थइ
च्छंतिपूजांजनिगेव्ययस्थे ॥ पुरातनाअष्टमगेपिसूरौशांत्यापिनैवोपनयाधिकारइ
ति ॥ बंधुश्चतुर्थः ॥ रिपुराशिः षष्ठः ॥ जनिर्जन्मराशिः ॥ व्ययोद्वादशराशिः ॥ अ
तिसंकटेएतेष्वपिराशिषुपूजाहोमादेर्द्विगुणत्वादिवृद्धिकल्पनयोपनयनंकार्यमेव न
तत्कृतसंवत्सरातिक्रमःकार्यः ॥ तस्माद्ग्रहेभ्यःकालत्वाद्बलीसंवत्सरोमतइतिवचना
त् ॥ राशिविशेषस्थस्यगुरोरष्टमादिस्थानस्थितस्यापिनाधिकारप्रतिबंधकत्वमि
त्याहभरद्वाजः ॥ धनुर्मीनकुलीरस्थोजीवोजन्मांत्यमृत्युगः॥ अतिसौख्यंबटोःकुर्याद्व
सिष्ठवचनंयथेति ॥ कुलीरःकर्कःसचगुरोरुच्चस्थानम् ॥ यथाहुर्दैवज्ञाः॥अजवृषभमृगां
गनाकुलीराझषवणिजौचदिवाकरादितुंगाइति ॥ अजोमेषः ॥ वृषभःप्रसिद्धोराशिः ॥
मृगोमकरः अंगनाकन्या ॥ कुलीरःकर्कः ॥ झषोमीनः ॥ वणिक्तुला ॥

दिवाकरादीनांसप्तानांग्रहाणांक्रमेणमेषादीनिसप्तोच्चस्थानानीत्यर्थः ॥ राजमार्तं
डः ॥ व्रतेजन्मत्रिकारिस्थोजीवोपीष्टोर्चनात्सकृत् ॥ शुभोतिकालेतुर्याष्टव्ययस्थो
द्विगुणार्चनादिति ॥ द्विपंचसप्तनवैकादशस्थोगुरुःशुभफलप्रदः ॥ जन्मतृतीयषष्ठ
दशमस्थानेषुपूजाहोमात्मकशांत्याशुभः ॥ चतुर्थाष्टमद्वादशस्थानेषुदुष्टफलः ॥ क
र्कधनुर्मीनराशिषुचतुर्थादिस्थानेपिनदोषः ॥ अतिसंकटेचतुर्थद्वादशस्थोद्विगुणपूजा
होमादिनाशुभः ॥ अष्टमस्तुत्रिगुणपूजाहोमादिनाशुभः ॥ केचिदनिष्टोवामवेधेशु
भइत्याहुस्तन्नेतिराजमार्तंडः ॥ अष्टमवर्षेपिमुख्यकालेगुरुबलाभावेपिमीनगतरवि
युतचैत्रेवाशांत्याव्रतबंधःकार्यो नतुमुख्यकालातिक्रमः ॥ नित्यकालस्यबलीयस्त्वा
दितिधर्मसिंधौ ॥ नक्षत्राण्याहनारदः ॥ श्रेष्ठान्यर्कत्रयांत्येज्यचंद्रादित्युत्तराणि
च ॥ विष्णुत्रयाश्विमित्राब्जयोनिभान्युपनायनेइति ॥ अर्कत्रयंहस्तचित्रास्वातयः ॥

अंत्यं रेवती ॥ इज्यःतिष्यः ॥ चंद्रो मृगशिरः ॥ अदितिःपुनर्वसुः ॥ उत्तराशब्देनउ
त्तरात्रयम् ॥ विष्णुत्रयंश्रवणधनिष्ठाशतभिषजः ॥ अश्विनौअश्विनी ॥ मित्रो ऽनुरा
धा ॥ अब्जयोनिभंरोहिणीनक्षत्रम् ॥ बृहस्पतिः ॥ त्रिषूत्तरेषुरोहिण्यांहस्तेमैत्रेचवा
सवे ॥ त्वाष्ट्रसौम्यपुनर्वस्वोरुत्तमंह्युपनायनमिति ॥ वेदविशेषेणनक्षत्रविशेषावधि
र्ज्योतिर्निबंधे ॥ मूलेहस्तत्रयेसार्पेशैवेपूर्वात्रयेतथा ॥ ऋग्वेदाध्यायिनांशस्तंमेखला
बंधनंबुधैः ॥ पुष्येपुनर्वसौपौष्णेहस्तेमैत्रेशशांकभे ॥ ध्रुवेषुचप्रशस्तंस्याद्यजुषांमौं
जिबंधनम् ॥ पुष्यवासवहस्ताश्विशिवविष्णूत्तरात्रयम् ॥ प्रशस्तंमेखलाबंधेबटूनांसाम
वेदिनाम्॥मृगमैत्राश्विनीहस्तरेवत्यदितिवासवम् ॥ अथर्ववेदिनांशस्तोभगणोयंव्रता
र्पणे इति ॥ सार्पमाश्लेषा ॥ शैवमार्द्रा ॥ पौष्णंरेवती ॥ मैत्रमनुराधा ॥ शशांकभं
मृगशिरः ॥ ध्रुवाणिउत्तरात्रयंरोहिणीच ॥ वासवंज्येष्ठा ॥ अश्विनौ अश्विनी ॥ शिव

आर्द्रा ॥ विष्णुःश्रवणम् ॥ अदितिःपुनर्वसुः ॥ एषामसंभवेसारसमुच्चये ॥ मघाग्नेय
विशाखैंद्रयाम्यंहित्वाचवारुणम् ॥ व्रतेशस्तानिसर्वेषांचेद्वेदोक्तंनलभ्यतइति ॥ आग्ने
यंकृत्तिका ॥ ऐंद्रंज्येष्ठा ॥ याम्यंभरणी ॥ वारुणंशततारका ॥ तत्राधिपुन्नक्षत्राण्य
तिप्रशस्तानि ॥ विशेषेणपुन्नामधेयइतिगृह्योक्तेः ॥ तानितुप्रागेवोक्तानि ॥ यस्तु ॥
ताराचंद्रानुकूलेषुग्रहाब्देषुशुभेष्वपि ॥ पुनर्वसौचोपनीतःपुनःसंस्कारमऽर्हतीतिराज
मार्तंडवचनेपुनर्वसुनिषेधः सज्योतिर्विदप्रसिद्धोवसिष्ठादिसंहितास्वदर्शनात् ॥ हेमा
द्र्यादिमहानिबंधेषुपुनर्वसुविधेरेवप्रतीतेः दाक्षिणात्यसकलशिष्टानांपुनर्वसावुपनय
नानुष्ठानाचरणस्योपलंभाच्चनिर्मूलः ॥ समूलत्वेपिनयजुर्वेद्यथर्ववेदिविषयः अनंतरो
दाहृतज्योतिर्निबंधवचनेयजुर्वेद्यथर्ववेदिनांतस्यविहितत्वात् ॥ योगेषुव्यवस्थामाह ॥१६३॥
श्रीपतिः ॥ सवैधृतिस्तुव्यतिपातनामासर्वोप्यनिष्टःपरिघस्यचार्धम्॥तिस्रस्तुयोगप्रथ

मेसवज्रेऽव्याघातसंज्ञेनवपंचशूले ॥ गंडेतिगंडेचषडेवनाडयः शुभेषुकार्येषुविवर्जनी
याइति ॥ प्रथमोयोगोविष्कंभः ॥ उक्तानन्यविषयेत्वाहबृहस्पतिः ॥ शिष्टाष्टाद
शयोगेषुप्रशस्तमुपनायनमिति ॥ करणव्यवस्थापितेनैवोक्ता ॥ बवादीनांतुषट्कंस्या
दुपनायेसुपूजितम् ॥ शकुन्यादीनिविष्टिंचवर्जयेच्चविशेषतइति ॥ दिनभागव्यवस्था
माहमनुः सर्वदेशषुपूर्वाह्णेमुख्यंस्यादुपनायनम् ॥ मध्याह्नेमध्यमंप्रोक्तमपराह्णे
चगर्हितमिति ॥ उत्तरार्द्धेपिसर्वदेशेष्वित्यनुषज्यते ॥ एवंव्यवस्थितेपिशुभकालेनि
मित्तविशेषेणनिषेधमाहगर्गः ॥ ग्रहेरवींद्वोरवनिप्रकंपेकेतौमहोल्कापतनादिदो
षे ॥ व्रतेदशाहानिवदंतितज्ज्ञास्त्रयोदशाहानिवदंतिकेचिदिति ॥ वर्ज्यानीतिशेषः ॥
संकटेतुचंडेश्वरः ॥ दाहेदिशांचैवधराप्रकंपेवज्रप्रपातेचविदारणेच ॥ केतौतथोल्कां
शुकणप्रतापेत्र्यहंनकुर्याद्व्रतमंगलानीति ॥ धर्मप्रकाशेगर्गः ॥ चंद्रसूर्योपरागेषुत्र्य

 हंप्रागशुभंभवेत् ॥ सप्ताहमशुभंपश्चात्स्मृतंग्रहणसूतकमिति ॥ एतच्चार्धग्रासविषयम् ॥ 
 सर्वग्रासेषुसप्ताहमर्धग्रासेदिनत्रयम् ॥ त्रिद्व्येकांगुलतोग्रासेदिनमेकंविवर्जयेदित्यं
गिरसाविशेषस्योक्तेः ॥ विस्तरतोदुष्टकालांस्तुविवाहप्रकरणेवक्ष्यामः ॥ एतेषुसूक्तेषु
सूत्रोक्तोमुख्यकालः । स्मृत्युक्तस्तुसंकटेमुख्योविधिः ॥ स्वशाखोक्तइतरःस्यात्तुसं
कटइतिवचनात् ॥ लल्लः ॥ व्रतेह्निपूर्वसंध्यायांवारिदोयदिगर्जति ॥ तद्दिनेस्या
दनध्यायोव्रतंतत्रविवर्जयेदिति ॥ व्रतेह्नि उपनयनदिवसे ॥ वारिदो मेघः ॥ तद्दिने
व्रतदिनेउपनयनदिनइतियावत् ॥ व्रतमुपनयनम् ॥ अत्रअनध्याये ॥ अनेनवचने
नसर्वस्यैवोपनयनक्रियाकलापस्यनिषेधेप्राप्ते ॥ नांदीश्राद्धोत्तरंवेदारंभरहितस्यसर्व
स्योपनयनस्यकर्तव्यतोक्ताज्योतिर्निबंधे ॥ नांदीश्राद्धेकृतेचेत्स्यादनध्यायस्त्वका 
लिकः ॥ मौंजीबंधंतदाकुर्याद्वेदारंभंनकारयेदिति ॥ मृगादिविशाखांतव्यतिरिक्तेषु

यद्वृष्टिगर्जनादिकंतदकालिकंतन्निमित्तोनध्यायोऽकालिकः ॥ सचनांदीश्राद्धोत्तरेचे
त्तदामौंजीबंधमुपनयनंकुर्यात्॥तत्रत्यंवेदारंभमात्रंतुनैवकारयेदित्यर्थः ॥ नांदीश्रा
द्धेकृतइतिवचनान्नांदीश्राद्धात्प्राग्वारिदगर्जनेमौंजीबंधोपिनभवति ॥ वेदारभंनकार
येदितिनिषेधस्तुयेषांसूत्रेवेदारंभस्तद्दिनएवविहितस्तत्परः ॥ सत्याषाढसूत्रानुसारि
भिरकालिकानध्यायेपिमौंजीबंधएतस्माद्वचनात्कर्तव्यएव ॥ वेदारंभस्त्वविहितत्वा
देवनभवति ॥ ननुगायत्र्यारंभेणैवसर्ववेदारंभोभवतिप्रयोगांतरउक्तत्वात्गायत्र्युपदे
शात्मकारंभएवसर्ववेदारंभंनकारयेदित्यनेननिषेधइतिचेन्न ॥ तस्याथर्ववेदव्यतिरि
क्तसर्ववेदांतराध्यापनार्थकपुनरुपनयननिवृत्तिबोधनार्थत्वात् ॥ नचात्रकिंमानमिति
वाच्यम् ॥ सर्वेभ्योवेदेभ्यःस्वसावित्र्यनूच्यतइतिहिब्राह्मणमितिधर्मसूत्रस्यअगृह्यमाण
विशेषत्वादेकमेवोपनयनंसर्वार्थमितिन्यायः॥ अस्मिन्नर्थेशाट्यायनब्राह्मणमेवपठति॥

अथर्ववेदस्यतुपृथगुपनयनंवचनात्कर्तव्यम् ॥ तथाचतत्रैवश्रुतंनान्यत्रसंस्कृतोभृग्वंगि
रसोधीयीतेति ॥ अन्यत्रअन्यवेदार्थम् ॥ भृग्वंगिरसोथर्ववेदइत्युज्ज्वलाकृद्व्याख्यान
स्यचमानत्वात् ॥ उपनयनारंभोत्तरंमूतकेप्राप्तेविशेषःसंग्रहे ॥ कूष्मांडीभिर्घृतंहु
त्वागांचदद्यात्पयस्विनीम् ॥ चूडोपनयनोद्वाहप्रतिष्ठादिकमाचरेदितिसंस्काररत्नमाला
याम् ॥ तच्चोदगयनेज्योतिःशास्त्रोक्तशुभमासेशुक्लपक्षेगुरुशुक्रास्तबाल्यवार्द्धक्यादि
दोषरहितेप्रदोषानध्यायादितिथिरहितेदुष्टवासरर्क्षदुर्योगादिदोषरहितेशुभेदिनेसुलग्ने
सुमुहूर्तेकार्यम् ॥ माधवीयेकालनिर्णयेलग्नकालश्च ॥ प्राक्कपालेऽद्विजातीनांव्रतबंधः प्रश
स्यते ॥ व्रतोद्वाहेद्विजातीनामपराह्णंविवर्जयेत् ॥ तत्कालःपितृकर्मणोमंगलेत्यशुभ
प्रदः ॥ रात्रौनिशीथात्परतआसुरःकालउच्यते ॥ तत्रैवपाणिग्रहणंसुलग्नेप्यशुभ
प्रदमिति ॥ पाराशरस्मृतौ ॥ अनन्यगतिकत्वेतुगौणपक्षंसमाचरेत् ॥ अन्यथा

स्वीकृतोदोषस्त्वनिष्टफलभाग्भवेदिति ॥ ॥ तत्राधिकारीच ॥ गार्ग्यः ॥ पितैवोप
नयेत्पुत्रंतदभावेपितुःपिता ॥ तदभावेपितुर्भ्रातातदभावेतुसोदरइति ॥ व्रतबंधंकु
मारस्य विनापितुरनुज्ञया ॥ यःकरोतिद्विजोमोहान्नरकंप्रतिपद्यतेइति ॥ पितरिप्रोषि
तेप्रेतेसंन्यस्तेपतितेथवा ॥ विनाज्ञयाप्युपनयेदन्यत्रअधिकारिणः इति ॥ अथाचार्या
दिश्च ॥ ॥ याज्ञवल्क्यः ॥ सगुरुर्यःकृपांकृत्वावेदमस्मैप्रयच्छति ॥ उपनीयदद
द्वेदमाचार्यःसउदाहृतः ॥ ॥ मनुः ॥ एकदेशंतुवेदस्यवेदांगान्यथवापुनः ॥ योध्या
पयतिवृत्त्यर्थमुपाध्यायःसउच्यते ॥ ॥ पारस्करः ॥ निषेकादीनिकर्माणियः क
रोतियथाविधि ॥ संभावयतिचान्नेनसविप्रोगुरुरुच्यते ॥ अग्न्याधेयंपाकयज्ञमग्नि
ष्टोमादिकान्मखान् ॥ यःकरोतिवृतोन्येनसद्विजोऋत्विगुच्यतेइति ॥ ॥ उपाध्याय
दशाचार्यआचार्याणांशतंपिता ॥ सहस्रंतुपितुर्माताागौरवेणातिरिच्यतेइति ॥ अधि

कारसिद्धयेप्रायश्चित्तमाहवृद्धविष्णुः ॥ कृच्छ्रत्रयंचोपनेतात्रीन्कृच्छ्रांश्चबटुश्चरेत् ॥
आचार्योदशसाहस्रांगायत्रींचजपेत्तथा ॥ बटुप्रायश्चित्तकारणम् ॥ प्रागुपनयनात्का
मैराचारःकामवादिभिः ॥ लशुनादीन्यभक्ष्याणिकृतौस्त्रीस्पर्शनादिभिः ॥ ॥ मंड
पश्च ॥ संग्रहे ॥ दशद्वादशहस्तोल्पोमध्यमोऽर्कमनून्मितः ॥ षोडशाष्टादशकरउ
त्तमःपरिकीर्तितः ॥ युग्महस्तोविनिर्माय्यविषमकरोनैवच ॥ चतुरस्रसमःकार्यःषो
डशस्तंभसंयुतः ॥ चूडाषोडशभिर्युक्तःद्वात्रिंशद्भिःप्रचूडकः ॥ सप्तर्षिमते ॥ मङ्गले
षुचसर्वेषुमंडपोगृहवामतः ॥ कार्यःषोडशहस्तोवाद्वयूनहस्तोदशावधीति ॥ सार्धच
त्वारिपंचैर्वासप्तहस्तसमुच्छ्रितः ॥ नारिकेलदलैर्वाह्येदुकूलादिभिरंतरे ॥ छादये
न्मंडपंसर्वंचतुर्द्वारविवर्जितमिति ॥ ॥ वेदीच ॥ बटोर्वेदीप्रकर्तव्याचतुरस्रा चतुःक
रा ॥ करोन्नताबटोर्हस्तैःपृष्ठेसोपानसंयुता ॥ १ ॥ प्रयोगदीपेतु ॥ आचार्यस्यपदे

षड्भिश्चतुर्भिरथवासमैः ॥ विस्तृताचतुरस्राचबटोर्वेदीकरोन्नता ॥ प्राक्पश्चिमायां
पदषट्कयुक्तमुदीचियाम्यानिपदानिपंच ॥ एवंविधाज्यौतिषरत्ननिर्मिताबटोःशता
युर्मुनयोवदंति ॥ आचार्यपदसंख्याकैर्वेदिकांकारयेद्बुधः ॥ बटोर्निर्गमदक्षिण्यांवि
वाहेविपरीतकेति ॥ विवाहेश्रीधरीवेदीविंशत्यस्रसमन्विता ॥ चतुर्विंशत्यस्रयुताव्र
तेवेदीप्रकीर्तिता ॥ १ ॥ विवाहोपनयेवेदीएतेषुवज्रउच्यते ॥ तदग्रेकलशाकारामि
तियज्ञविदांमतम् ॥ गृहान्निर्गमवामांगेवसोर्द्धाराश्चवेदिका ॥ कार्याविवाहेविद्व
द्भिर्मौंजीनांगृहदक्षिणेइति ॥ १ ॥ गृह्यकारिकायाम् ॥ वेदींकुर्यात्स्वगेहस्यवामेमंडप
मंडिताम् ॥ हस्तोच्छ्रितांचतुर्हस्तांकन्यायाश्चव्रतेवटोः॥ रत्नावल्याम् ॥ पश्चिमाभिमु
खंद्वारंयद्वाचेदुत्तरामुखम् ॥ वेदिकातुतदाकार्यागृहान्निर्गमदक्षिणे॥निर्गमशब्देनगृहद्वा
रमुच्यते ॥ दक्षिणाभिमुखंद्वारंपूर्वाभिमुखमेववा ॥ वामभागेतदाकार्याव्रतेवेदीयथात

थम् ॥ एवंचनैर्ऋत्यांवेदीनभवतीतितात्पर्यार्थः ॥ विवाहोपनयेयज्ञेवेदींकुर्यात्प्रयत्न
तः ॥ वेदींविनायदाहोमःकर्मभ्रष्टोभिजायतेइति अश्वत्थामकारिकायाम् ॥ ऊखरेदु
र्भगानारीशल्येचैवमृतप्रजा ॥ कोणवेधेह्यनापत्यंद्वारवेधेधनक्षयइति ॥ अथघटी
यंत्रप्रकारमाह ॥ कालसाधनेयंत्रनिर्णयोयथा ॥ कालसाधनयंत्राणिबहूनिपृथि
वीतले ॥ तन्मध्येमंगलेमुख्यंघटीयंत्रंप्रकीर्तितमितिसंस्कारकौमुद्याम् ॥ ततःकुमार
पितासुस्नातोधृताहततिलकोहस्तप्रमाणोर्ध्वदीर्घताम्रपात्रं जलेनापूर्य धान्यराशौसं
स्थाप्यतदग्रेगणपतिवरुणौसंपूज्य स्थापितजलपूर्णपात्रेअधोभागकुंभार्धाकृतिताम्र
मयीं दशपलैस्तुलितांषडंगुलोच्छ्रितांद्वादशांगुलविस्तृतांघटीमहोरात्रषष्टितमपूर्णप्र
माणांकालसाधनार्थंमार्तंडमंडलार्धोदयंवीक्ष्यक्षिपेत ॥ तामेवास्तसमयेअवशेषार्धं ॥१६७॥
बिंबंनिरीक्ष्यक्षिपेत् ॥ घटींगंधादिभिःसंपूज्यप्रार्थयेत् ॥ मुख्यात्वमसियंत्राणांब्र

ह्मणानिर्मिताघटी ॥ भवभावायबटवेकालसाधनकारणमिति ॥ प्रक्षिप्य घटीअ
ष्टदिशांमध्येयद्दिग्गतातत्प्रागादितःक्रमेणफलानि ॥ यथा ॥ प्रार्थितासाघटीतो
येयांदिशंप्रतिगच्छति ॥ पूर्वादिदिक्फलंचैवस्थितामध्येशुभप्रदा ॥ सुखंदुःखंतथा
मृत्यूरोगीप्रियसुबुद्धिमान् ॥ वेदविद्यारतः श्रीमान्फलंपूर्वादिदिक्क्रमात ॥ यदा
अनिष्टदिग्गताघटीपूर्णावातदाउपनयनानंतरं सुदिनेतिथिवारनक्षत्रलग्नदिक्पतीनां
पूजनंतिथ्यादिदेवतानामुक्तमंत्रेणायुतजपं तद्दशांशतिलाज्यैर्होमंदानादिकंचकुर्या
दितिघटीसूत्रे ॥ ॥ अथसंभाराः ॥ तत्रपरिधानवस्त्राणांसूत्रव्याख्या ॥ वासांसि
शाणक्षौमाविकानिब्राह्मणक्षत्रियविशाम् त्रयाणांब्रह्मचारिणांक्रमेण ॥ शणत्वङ्म
यंशाणम् ॥ क्षौमंक्षुमाअतसीतद्विकारमयंपट्टदुकूलम् ॥ आविकमवेर्मेषस्यरोमनिर्मि
तंनेपालकंबलम् ॥ सर्वेषांकार्पासंवा ॥ शुक्लमहतंवासोब्राह्मणस्य ॥ मांजिष्ठंक्षत्रिय

स्य ॥ पीतंवैश्यस्येति ॥ संस्काररत्नमालायाम् ॥ उत्तरीयंधर्मसूत्रे ॥ हारिणमैणेयं
वाकृष्णंब्राह्मणस्यकृष्णंचेदनुपस्तीर्णासनशायीस्याद्रौरवंराजन्यस्य बस्ताजिनंवै
श्यस्याविकंसार्ववर्णिकमिति ॥ हरिणंमृगस्तस्यविकारंहारिणंचर्म ॥ एणीमृगीतस्या
विकारऐणेयंतच्चकृष्णम् ॥ कृष्णंचेद्विभृतंनकेवलंहारिणंतदातस्मिन्नास्तीर्णेनासिते
नचशयीतरुरुर्बिंदुमान्मृगःतस्यविकारोरौरवम् ॥ बस्तश्छागस्तस्याजिनम् ॥ अविरू
र्णायुर्मेषस्तस्यविकारआविकंतत्सर्वेषांवर्णानाम् ॥ तस्यहारिणादिभिर्विकल्पः ॥ कं
बलोप्याविकएवसर्वेषामित्यर्थइतिव्याख्यातमुज्ज्वलाकृता ॥ प्रावरणपर्याप्तोत्तरीया
जिनासंभवेशाकलः ॥ अखंडंवात्रिखंडंवाष्टाचत्वारिंशदंगुलम् ॥ चतुरंगुलविस्तीर्णं
धारयेदजिनंसदेति ॥ खंडत्रयमानंस्मृत्यंतरे ॥ त्र्यंगुलंतुबहिर्लोमयद्वास्याच्चतुरंगु
लम् ॥ अजिनंधारयेद्विप्रश्चतुर्विंशाष्टषोडशैरिति ॥ चतुर्विंशांगुलएकः ॥ अष्टांगुलो

द्वितीयः ॥ षोडशांगुलस्तृतीयः ॥ एवंत्रिभिःखंडैरष्टाचत्वारिंशदंगुलपरिमंडलम
जिनंधार्यमित्यर्थः ॥ अत्रपरिषेचनार्थंकिंचिदधिकंग्राह्यम् ॥ अन्यथाअष्टाचत्वारिं
शदंगुलमजिनंधार्यमित्यनेनविरोधापत्तिः ॥ अत्रांगुलानिसंस्कार्यस्यग्राह्याणि ॥ स्मृ
त्यर्थसारे ॥ अहतंवस्त्रयुग्मंचश्वेतरक्तमथापिवा ॥ कार्ष्णरौरवबास्तानिविप्रादेरजिना
नितुइति ॥ यथा ॥ अजिनंत्र्यंगुलंवापिचतुरंगुलविस्तृतम् ॥ बहिःसरोमसंगृह्यधारये
दुपवीतवत् ॥ यथावर्णस्यवसनंतत्तत्सूत्रेणधारयेदिति ॥ गदाधरेणकार्पासमयमं
बरमीषद्धौतंनवंश्वेतंनान्यधारितंप्रावारार्थंकल्पितम् ॥ मेखला ॥ मौंजीमेखलांत्रिवृ
तांब्राह्मणस्यधनुर्ज्यांठंराजन्यस्याविसूत्रंवैश्यस्यइति ॥ मौंजीमुंजतृणनिर्मितांत्रि
वृतांत्रिगुणाम् ॥ धनुषोरज्जुर्ज्या ॥ अविसूत्रंअविलोममयीरज्जुः॥ धर्मसूत्रेपि ॥ त्रि
वृन्मौंजीमेखलाब्राह्मणस्यशक्तिविषयेशक्तौसत्यांदक्षिणावृतानां ज्याराजन्यस्यमौं

जीवाऽयोमिश्रा विसूत्रंवैश्यस्यसैरीतामलीवेत्येकइति ॥ त्रिवृतत्रिगुणा मुंजानांवि
कारोमौंजी एवंभूताब्राह्मणस्यमेखलाभवति ॥ साचशक्तिविषयेशक्तौसत्यांदक्षि
णावृत्तानांकर्तव्या ॥ तद्धितार्थेगुणभूतानामपिमुंजानामेतद्विशेषणम् ॥ ज्याधनुषोर
ज्जुः ॥ अथवामौंजीसाचायोमिश्राकचित्कालायसेनबद्धा ॥ अविरेवाविराव्याः सू
त्रमाविसूत्रमविलोममयीरज्जुः ॥ सैरीसीरवाहयोक्त्ररज्जुः॥तामलोवृक्षस्तस्यत्वचाग्र
थितातामलीएवंभूतासावैश्यस्यमेखलेत्येकेआचार्यामन्यंतइतिव्याख्यातमुज्ज्वल
कृता॥विशेषमाहमनुः ॥ त्रिवृन्मौंजीसमाश्लक्ष्णाकार्याविप्रस्यमेखला॥क्षत्रियस्यतु
मौर्वीज्यावैश्यस्यशणतांतवीतिसमानाक्वचित्सूक्ष्मानक्वचित्स्थूला किंतर्हिसर्वतएव
समा ॥ श्लक्ष्णातंतुतनुत्वगुणयुक्तापरिघृष्टाच॥ज्याकदाचिच्चर्ममयीभवतिकदाचित्तृण
मयीतत्रचर्ममयीव्यावृत्त्यर्थंमौर्वीज्याविशेषणम्॥ तयाधनुषोवतारितयाश्रोणिबंधःक

व्यइति मेधातिथिः ॥ ज्यायांत्रिवृत्त्वादिगुणेनस्वरूपनाशप्रसंगात् ॥ शणतांतव्या
स्त्वस्त्येवेतिज्ञेयम् ॥ अनुकल्पमाहमनुः ॥ मुंजाभावेतुकर्तव्याकुशाश्मंतकबल्व
जैः ॥ त्रिवृतायंथिनैकेनत्रिभिःपंचभिरेववेति ॥ अत्रादिशब्दलोपोद्रष्टव्यः ॥ तेने
त्थंवाक्यंभवति ॥ मुंजाद्यभावइति ॥ ग्रंथयश्चप्रवरसंख्यया ॥ एकप्रवरस्यैकोग्रंथिः ।
त्रिप्रवरस्यत्रयः पंचप्रवरस्यपंचेतिवृद्धाः ॥ इतिसंस्काररत्नमालायाम् ॥ कात्या
यनस्तुचतुर्हस्तदीर्घामेखलाकार्या ॥ मौंजीरशनाब्राह्मणस्य ॥ धनुर्ज्याराजन्यस्य ॥
मौर्वीवैश्यस्य ॥ मुंज्यःशरःतत्त्वङ्मयी ॥ धनुर्ज्याधनुर्गुणः ॥ मुंजाद्यभावेकुशाश्मं
तकबल्वजानांक्रमेणब्राह्मणादीनाम् ॥ अश्मंतकबल्वजस्तत्त्वङ्मयीवाश्मंतकाख्य
बल्वजाख्यतृणमयीतिभर्तृयज्ञव्याख्याने ॥ तांत्रिवलीकृतांबटोःकटिप्रदेशेप्रदक्षि
णवत्त्रिरावेष्ट्यअनंतरंग्रंथयस्त्रयः पंचवायथाप्रवरनियमेनकार्याः ॥ यज्ञोपवीतम् ॥

कार्पासोनिर्मलःप्रोक्तःशुचिक्षेत्रसमुद्भवः ॥ तच्चात्रेसूत्रनिष्कासंसंहतांगुलिमूलके ॥
आवेष्ट्यषण्णवत्यातत्त्रिगुणीकृत्ययत्नतः ॥ अधिप्रदक्षिणावृत्तंसमंस्यान्नवसूत्रकम् ।
तत्त्रिष्प्रदक्षिणीकृत्यब्रह्मग्रंथिःप्रदीयते ॥ पृष्ठवंशेचनाभ्यांचधृतंयद्विंदतेकटिम् ॥ स्त
नादूर्ध्वमधोनाभ्यांतन्नधार्यंकदाचन ॥ तद्धार्यमुपवीतंस्यान्नातिलंबंनचोच्छ्रितम् ॥ वि
च्छिन्नंवाप्यधौतंवामुक्तानिर्मितमुत्सृजेत् ॥ ब्रह्मचारिणएकंस्यात्स्नातस्यद्वेबहूनि
वा ॥ तृतीयमुत्तरीयार्थेवस्त्राभावेचतुर्थकमिति ॥ ॥ यज्ञोपवीतानिबहूनिचायुष्का
मानिरत्नमालायांदेवलः ॥ त्रीणिचत्वारिपंचाष्टौगृहिणःस्युर्दशापिवेति ॥ ॥ दंडः ॥
पालाशोब्राह्मणस्यदंडोबैल्वोराजन्यस्यौदुंबरोवैश्यस्य ॥ सचअंगुष्ठमात्रस्थूलतरः
अवक्रःसाग्रःसत्वक्पादादिललाटांतिमकेशसंमितदीर्घोब्राह्मणस्य ॥ बिल्ववृक्षोद्भवो
ललाटमूलसंमितोराजन्यस्य ॥ औदुंबरवृक्षोद्भवोदंडोघ्राणाग्रसंमितोवैश्यस्येति ॥

उपनयनेमात्रासहभोजनमनुज्ञातंसंग्रहकारेण ॥ मात्रासहोपनयनेविवाहेभार्यया सह ॥ अन्यत्रसहभुक्तिश्चेत्पातित्यंप्राप्नुयान्नरइति ॥ कृच्छ्रत्रयात्मकप्रायश्चित्ता चरणोत्तरं कामचारकामवादकामभक्षणनिषेधप्रवृत्तेरिवनस्त्रियासहभुंजीतेतिनिषेध स्यापिप्रवृत्तत्वात्तस्यबाधोनेनक्रियते ॥ नचमात्रासहोपनयनइतिवचनादुपनयनम ध्येयावंतिभोजनानितेषुसर्वेष्वपिमातृसहितत्वमस्त्विवतिवाच्यम् ॥ आचारसंवादेन सूत्रोक्ताशनपर्यायकभोजनएवैतस्य प्रवृत्तेरुचितेत्वनप्रधानोत्तरकालिकेसूत्रकृताकं ठरवेणानुक्तेभोजनेमात्रासहेत्यस्याप्रवृत्तेः ॥ यत्तु ॥ मात्रासहैवभुंजीतऊर्ध्वंमाता रजस्वला ॥ व्रतबंधःप्रशस्तःस्यादित्याहभगवान्यमइतिवचनतः भोजनात्प्राङ्मात रिरजस्वलायांव्रतबंधोनभवतीतिकेचित् ॥ अन्येतुएतस्यवचनस्यैवमहानिबंधेष्वद र्शनेननिर्मूलत्वात्कर्तव्यमेवेत्याहुः ॥ तदत्राचारानुरोधेनग्राह्यम् ॥ मातृभोजनानं

तरंकुमारस्यवपनंकारयंतितच्छाखांतरविषयम् ॥ इतिसंस्काररत्नमालायाम् ॥ अ
थक्रमकारिका ॥ दत्त्वाप्रैषद्वयंप्राग्वसनसरशनोब्रह्मसूत्रोत्तरीयंदंडः पूर्णांजल्यर्घः
प्रणतरविगुरोर्लंभपृच्छाप्रदानम् ॥ वह्निंचावृत्यचास्तेमनुमितहवनंस्वीयसावित्रिदानं
वह्नेः कार्यंस्वभिक्षाकथयतिनियमंब्रह्मचर्येविकल्पः ॥ १ ॥ अथसर्वसाधारणसंभा
राः ॥ घटीयंत्रम् ॥ सदशांतःपटः ॥ परिधानार्थंकौपीनम् ॥ त्रिवलीकृतमेखला ॥ य
ज्ञोपवीतंकार्पासमयम् ॥ अहतंवाससउत्तरीयम् ॥ अजिनमुत्तरीयार्थम्॥अव्रणःसरलः
सत्वक्साग्रःपालाशदंडः ॥ अंजलीपूरणार्थमुदकम् ॥ पूगीफलानि ॥ चंदनाक्षतपु
ष्पाणि ॥ गायत्र्युपदेशार्थमाचारप्राप्तंकांस्यपात्रंसुवर्णशलाकातंडुलाश्च ॥ कुशाः ॥
इंधनानि ॥ समिधः ॥ भिक्षाचर्यपात्रंचेति ॥ अथप्रयोगः ॥ अत्रबहिःशालाभव
ति ॥ तत्रोदगयनेज्योतिःशास्त्रोक्तशुभमासेशुक्लपक्षेशुभेदिनेसुमुहूर्तेउपनयनंकर्तुत

त्पूर्वेद्युः यजमानः पत्नीकुमाराभ्यांसहमंगलंस्नात्वा अहतेवाससी परिधायालंकृत्यधृ
ततिलकोबहिःशालायांशुभासनेप्राङ्मुखउपविश्य स्वदक्षिणतःपत्नींतद्दक्षिणतः सं
स्कार्यंचोपवेश्यधृतपवित्रपाणिराचांतःप्राणानायम्यदेशकालकीर्तनांते स्वस्योपने
तृत्वाधिकारसिद्ध्यर्थं कृच्छ्रत्रयात्मकप्रायश्चित्तंवातत्प्रत्याम्नायगोनिष्क्रयीभूतय
थाशक्तिरजतद्रव्यदानपूर्वकंद्वादशसहस्रं द्वादशाधिकसहस्रं वागायत्रीजपमहंयथाव
काशंकरिष्येअथवाब्राह्मणद्वाराकारयिष्येइतिकृत्वा ॥ अथकुमारेणापिदेशकाल
कीर्तनांतेममकामचारकामवादकामभक्षणादिदोषपरिहारार्थं कृच्छ्रत्रयात्मकप्राय
श्चित्तप्रत्याम्नायगोनिष्क्रयीभूतयथाशक्तिरजतद्रव्यदानपूर्वकं द्वादशसहस्रंद्वादशा
धिकसहस्रंवागायत्रीजपंब्राह्मणद्वाराअहमाचरिष्ये इतिकारयित्वा ॥ उपनयनंका
र्यम् ॥ यजमानःपुनःदेशकालकीर्तनांतेअस्यकुमारस्यद्विजत्वसिद्ध्यैवेदाध्ययनाधि

कारसिद्ध्यर्थंश्रीपरमेश्वरप्रीत्यर्थंचउपनयनं श्वोवाअद्यकरिष्ये ॥ यदाचौलेनसहउ
पनयनंक्रियतेतदासंकल्पेचौलोपनयनाख्येकर्मणिअहंकरिष्येइत्यूहः । तत्रनिर्विघ्ना
र्थंगणपतिपूजनंस्वस्तिपुण्याहवाचनमविघ्नपूजनंमंडपस्थापनं मातृकापूजनं वसो
र्द्धाराआयुष्यमंत्रजपंनांदीश्राद्धंचाद्यकरिष्ये ॥ नांदीश्राद्धांतंकृत्वा ॥ अत्रपुण्याहवाच
नांतेइंद्रःप्रीयतामित्यूहःकर्तव्यः ॥ यदातद्दिनेग्रहयज्ञंकरोतितदा ॥ अस्यकुमा
रस्यग्रहानुकूलतासिद्ध्यर्थं ग्रहयज्ञंकरिष्ये ॥ तत्रादौनिर्विघ्नार्थं गणपतिपूजनंस्व
स्तिपुण्याहवाचनमविघ्नपूजनंमंडपस्थापनं मातृकापूजनं वसोर्द्धाराआयुष्यमंत्रज
पंनांदीश्राद्धं ब्रह्माचार्यऋत्विग्वरणंदिग्रक्षणंपंचगव्यकरणं भूमिपूजनमग्निस्थापनं
नवग्रहस्थापनंरुद्रकलशस्थापनंचाद्यकरिष्ये ॥ नांदीश्राद्धानंतरंयजमानेनवंशपात्रं
स्वयंगृहीत्वाअविघ्नगणपतिकलशंभार्यययाग्राहयित्वाघंटादिवाद्यघोषेणसहितः सब्रा

ह्मणःस्वस्तिनऽइंद्रेत्यादिमंत्रान्वक्ष्यमाणाथैनाआप्याश्चपठन्सन्गृहमध्येगत्वाप्रति
ष्ठापनदेशमुपलेपयित्वातदुपरितंदुलान्प्रक्षिप्यतेषुतद्दंशपात्रम् ॥ नर्यप्रजाम्मेपाहिशं
ठंस्यंपशून्मेपाह्यथर्यपितुम्मेपाहि ॥ इतिमंत्रेणप्रतिष्ठाप्यतत्रैवोत्तरतःकलशंभार्य
यानिधाप्यपंचोपचारैःसंपूजयेत् ॥ अथवादेवस्याग्नेस्थापनीयम् ॥ तत्रमंत्रः ॥
ॐ अथैनाऽआप्यानवतीभ्यामभिमृशतीदमेवैतद्रेतःसिक्तमाप्यायतेसोमीभ्यांप्रा
णोवैसोमःप्राणन्तद्रेतसिदधातितस्माद्रेतःसिक्तंप्राणमभिसम्भवतिपूर्येद्वयद्दतेप्राणा
त्सम्भवेदेषोहैवात्रसुददोहाःप्राणोवैसोमःप्राणःसुददोहाः ॥ १ ॥ ग्रहयज्ञंकरो
तिचेत्तदाआचार्यवरणादिहोमशेषंसमाप्य ॥ कृतस्यकर्मणःसांगतासिद्ध्यर्थं
नानानामगोत्रेभ्योब्राह्मणेभ्योगंधादिनापूजयिष्ये ॥ तेभ्यश्चभूयसीं दक्षिणांदत्त्वा

तैराशिषोगृह्णीयात् ॥ ततउपनयनदिनेकुमारपिताबहिःशालायांदेशकालकीर्तनांते
उपनयनांगविहितमस्यकुमारस्यवपनंकरिष्ये ॥ कारयित्वा ॥ पुनःअस्यकुमारस्यउ
पनयनेअधिकारार्थंत्रीन्ब्राह्मणान्भोजयिष्ये॥ अनुच्छिष्टपाकेनब्राह्मणत्रयभोजनम् ॥
तत्पंक्तौमुंडितशिराः सुस्नातः कुमारोभुंजीत ॥ भोजनानंतरंकुमारंस्नापयित्वा ॥ पुनः
कुमारपिताबहिःशालायांवेद्युपरिशुभासनेउपविश्य अस्य कुमारस्योपनयनांगभू
तमग्निप्रतिष्ठापनंकरिष्ये ॥ वेद्युपरिस्थंडिले पंचभूसंस्कारपूर्वकं समुद्भवनामाग्निंप्रति
ष्ठाप्य ॥ ततोबटुंपर्युप्तशिरसमलंकृतंवेद्यग्रेआचार्यसमीपमानयंति ॥ वेद्याःसोपानेअ
वस्थाप्य ॥ ततःसद्वृत्तयःस्ववर्णदृढपुरुषाःमध्यंतःपटंधारयेयुः॥ दैवज्ञाःसुमंगलपद्यानि
पठेयुः ॥ सुलग्नेसुमुहूर्तेमनोजूतिरितिमंत्रमेषवैप्रतिष्ठाइतिमंत्रमाचारात्द्विजाःपठेयुः

ॐ प्रतिष्ठेतिपठित्वासुमुहूर्तैसुप्रतिष्ठितमस्त्विति ब्रूयुः ॥ अंतःपटमुदङ्गनिःसार्यकुमार
माचार्यपादौप्रणाम्यतद्दक्षिणतःपश्चादग्नेरवस्थाप्य ॥ ततोब्राह्मणाःप्रतिष्ठामंत्रान्प
ठित्वामाणवकशिरसिअक्षतान्समर्पयेयुः ॥तत्रमंत्रः॥ॐमनोजूतिर्ज्जुषतामाज्यस्यबृ
हस्पतिर्यज्ञमिमन्तनोत्वरिष्टंयज्ञꣳसमिमन्दधातु ॥ विश्वेदेवासऽइहमादयन्तामोँ३प्र
तिष्ठ॥१॥ब्राह्मणम्॥ मनोजूतिर्ज्जुषतामाज्यस्येतिमनसावाइदꣳसर्वमाप्तन्तन्मनसैवैत
त्सर्वमाप्नोतिबृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टंयज्ञꣳसमिमन्दधात्वितियद्विच्छिन्नंतत्सन्द
धातिविश्वेदेवासऽइहमादयन्तामितिसर्वेवैविश्वेदेवाःसर्वेणैवैतत्सन्दधातिसयदिका
मयेतब्रूयात्प्रतिष्ठेति ॥ १ ॥ एषवैप्रभूर्नामयज्ञोयत्रैतेनयज्ञेनयजन्तेसर्वमेवप्रभूतम्भव

सं० ति ॥ २ ॥ एषवैविभूर्नामयज्ञोयत्रैतेनयज्ञेनयजन्तेसर्वमेवंविभूतंभवति ॥ ३ ॥ भा०
॥१६४॥ एषवैव्यष्टिर्नामयज्ञोयत्रैतेनयज्ञेनयजन्तेसर्वमेवव्यष्टम्भवति ॥ ४ ॥ एषवैविधृति
तिर्नामयज्ञोयत्रैतेनयज्ञेनयजन्तेसर्वमेवविधृतम्भवति ॥ ५ ॥ एषवैव्यावृत्तिर्नामय
ज्ञोयत्रैतेनयज्ञेनयजन्तेसर्वमेवव्यावृत्तम्भवति ॥ ६ ॥ एषवाऽऊर्जस्वान्नामयज्ञोयत्रै
तेनयज्ञेनयजंतेसर्वमेवोर्जस्वद्भवति ॥ ७ ॥ एषवैपयस्वान्नामयज्ञोयत्रैतेनयज्ञेनयज
तेसर्वमेवपयस्वद्भवति ॥ ८ ॥ एषवैब्रह्मवर्चसीनामयज्ञोयत्रैतेनयज्ञेनयजंतऽआब्राह्म
णोब्रह्मवर्चसीजायते ॥ ९ ॥ एषवाऽअतिव्याधीनामयज्ञोयत्रैतेनयज्ञेनयजंतऽ
आराजन्योतिव्याधीजायते ॥ १० ॥ एषवैदीर्घोनामयज्ञोयत्रैतेनयज्ञेनयजंतआदी ॥१६४॥

र्घारण्युज्ञायते ॥ ११ ॥ एषवैक्ऌप्तिर्नामयज्ञोयत्रैतेनयज्ञेनयजन्तेसर्वमेवक्ऌप्तम्भव
ति ॥ १२ ॥ एषवैप्रतिष्ठानामयज्ञोयत्रैतेनयज्ञेनयजन्तेसुर्वमेवप्रतिष्ठितम्भवति ॥
॥ १३ ॥ ॐ प्रतिष्ठासुप्रतिष्ठितमस्तु ॥ ब्रह्मवर्चसीभव ॥ आब्रह्मन्नित्याशिषंदद्युः ॥
ततःप्रेषद्वयम् ॥ ब्रह्मचर्यमागामीतिब्रूहीत्याचार्योवदति ॥ ब्रह्मचर्यमागामीतिकुमा
रोब्रूयात ॥ ब्रह्मचारीप्राङ्मुखस्तिष्ठन्ब्रह्मचर्यमागामीतिब्रूयादितिगदाधरादयः ॥ उ
दङ्मुखइतिरेणुदीक्षिताः ॥ ब्रह्मचार्यसानीतिब्रूहीत्याचार्योवदति ॥ ब्रह्मचारीअ
सानीतिबटुर्ब्रूयात् ॥ अथाचार्योमाणवकस्यकटिमूत्रंबद्ध्वाकौपीनंपरिधापयति ॥
ॐ येनेन्द्रायबृहस्पतिर्वासःपर्यदधादमृतम् ॥ तेनत्वापरिदधाम्यायुषेदीर्घायुत्वायबला
यवर्चसे ॥ १ ॥ इत्यनेनमंत्रेण ॥ आचमनम् ॥ ततआचार्योमाणवकस्यकटिप्रदेशे

मेखलांप्रदक्षिणंत्रिर्वेष्टयित्वायथोक्तलक्षणांयथाप्रवरग्रंथियुतांबध्नाति ॥ ॐ इयन्दुरु
क्तम्परिबाधमानावर्णम्पवित्रम्पुनतीमऽआगात् ॥ प्राणापानाभ्याम्बलमाददानास्व
सादेवीसुभगामेखलेयम् ॥ इत्यनेनमंत्रेण ॥ आचमनम् ॥ अत्रावसरेयज्ञोपवीतदाना
नि ॥ बटुःपूर्वोच्चारितद्विजत्वसिद्धिवेदाध्ययनाधिकारार्थंश्रौतस्मार्तकर्माधिकारसि
द्ध्यर्थंयज्ञोपवीतधारणाधिकारार्थंश्रीसवितृसूर्यनारायणप्रीत्यर्थं नानानामगोत्रेभ्यो
ब्राह्मणेभ्यःयथाशक्त्यायज्ञोपवीतदानानिकरिष्येइतिसंकल्पः ॥ इदंयज्ञोपवीतंसफलं
दक्षिणासहितममुकशर्मणेब्राह्मणायतुभ्यमहंसंप्रददे ॥ इत्याचारः ॥ अथाचार्योयज्ञो
पवीतमभिमंत्रयेत ॥ तत्प्रकारः ॥ ॥ आपोहिष्ठेतितिसृभिर्ऋग्भिरुपवीतंप्रक्षाल्य॥ब्रह्म
यज्ञानं० ॥ इदंविष्णु० ॥ नमस्तेरुद्र० ॥ इतितिसृभिर्ऋग्भिरुपवीतेअंगुष्ठंभ्रामयेत ॥

पुनस्तथैवनवतंतुषुदेवताःविन्यसेत् ॥ तद्यथा ॥ॐकारंप्रथमतंतौन्यसामि॥अनेनप्रका
रेणाग्रेऽष्टसु ॥ ॐकारश्चाऽग्निर्नागाश्चसोमइंद्रःप्रजापतिः ॥ वायुःसूर्योविश्वेदेवाइ
त्येतेनवतंतवः ॥ १ ॥ ॐ उपयामगृहीतोसिसावित्रोसिचनोधाश्चनोधाऽअसिचनो
मयिधेहि ॥ जिन्वंयज्ञञ्जिन्वंयज्ञपतिम्भगायदेवायत्वासवित्रे ॥ १ ॥ इतिसूर्या
यप्रदर्शयेत् ॥ ततउपवीतंकरसंपुटेनिधायदशगायत्र्याभिमंत्रयेत् ॥ ॐ तत्सवि
तु० ॥ १ ॥ ततोमाणवकोमंत्रंपठन्नदक्षिणहस्तेनोर्ध्वंकृतेनदक्षिणकरमध्येयज्ञोपवी
तंप्रक्षिप्यवामेनवामस्कंधेधारयेत् ॥ ॐ यज्ञोपवीतम्परमम्पवित्रम्प्रजापतेर्यत्सह
जम्पुरस्तात् ॥ आयुष्यमग्र्यम्प्रतिमुञ्चशुभ्रंयज्ञोपवीतम्बलमस्तुतेजः ॥ १ ॥ यज्ञो
पवीतमसियज्ञस्यत्वायज्ञोपवीतेनोपनह्यामि ॥ २ ॥ इत्यनेनमंत्रेण ॥ आचम्य ॥

 ततः कार्पासमहतवासःप्रावारमुपवीतवत्प्रयच्छति ॥ ॐ युवासुवासाः परि० ॥ १ ॥ 
 अथाजिनंप्रयच्छति ॥ ॐ मित्रस्यचक्षुर्धरुणम्बलीयस्तेजोयशस्विस्थविरꣳसमिद्ध
म् ॥ अनाहनस्यम्वसनञ्जरीष्णुपरीदम्वाज्यजिनन्दधेहम् ॥ १ ॥ इतिमाणवकस्य
मंत्रपाठः ॥ आचार्योमाणवकायदंडंप्रयच्छति ॥ तंप्रतिगृह्णाति ॥ ॐ योमेदंडः
परापतद्वैहायसोधिभूम्याम् ॥ तमहम्पुनराददाम्यायुषेब्रह्मणेब्रह्मवर्चसाय ॥ १ ॥
इतिमाणवकस्यमंत्रपाठः ॥ दीक्षावदेकेदीर्घसत्रमुपैतीतिवचनात् ॥ अथाचार्यःस्वां
जलिजलेनापूरितेनमाणवकांजलिंपूरयत्यापोहिष्ठेतितिसृभिर्ऋग्भिः ॥ आचार्यप
ठितेनमाणवकःसूर्यायार्घंदद्यात्त्रिः ॥ ॐ आपोहिष्ठा० ॥१॥ ॐयोवः÷शिव० ॥ २ ॥
ॐतस्माऽअरंग० ॥ ३ ॥ श्रीसूर्यायनमः ॥ इदमर्घंदत्तंनमम ॥ इत्याचार्यस्यमंत्रपा
ठः ॥ ततआचार्योमाणवकंसूर्यमुदीक्षस्वेतिप्रेषयेत् ॥ माणवकःसूर्यमुदीक्षते ॥ ॐ 

तच्चक्षुर्द्देवहितं० ॥ १ ॥ इतिमाणवकस्यमंत्रपाठः ॥ अथमाणवकस्यदक्षिणस्कंधोपरिहस्तंनीत्वातस्यहृदयमालभतेआचार्यः ॥ ॐ :ममव्रतेतेहृदयन्दधामिममचित्तमनुचित्तन्तेअस्तु ॥ ममवाचमेकमनाजुषस्वबृहस्पतिष्ट्वानियुनक्तुमह्यम् ॥ १ ॥ इत्याचार्यस्यमंत्रपाठः ॥ ततोमाणवकस्यदक्षिणहस्तमाचार्योगृहीत्वा ॥ कोनामासि ॥ इत्याह ॥ एवंपृष्टःकुमारःप्रत्याह ॥ अमुकशर्माअहंभोः ॥ एवंत्रिःआचार्यःप्रतिपृच्छतिमाणवकम् ॥ कस्यब्रह्मचार्यसीतिआचार्यः ॥ भवतइत्युच्यमानेमाणवकेन ॥ माणवकंप्रतिआचार्योब्रूयात् ॥ इंद्रस्यब्रह्मचार्यस्यग्निराचार्यस्तवाहमाचार्यस्तवासौअमुकशर्मन् ॥ अथैनंभूतेभ्यःपरिददात्याचार्यः ॥ ॐ प्रजापतयेत्वापरिददामिदेवायत्वासवित्रेपरिददाम्यद्भ्यस्त्वौषधीभ्यः परिददामिद्यावापृथिवीभ्यान्त्वापरिददामि

१असावित्यस्यस्थानेकुमारस्यनामगृह्णीयादितिगदाधरः ।

विश्वेभ्यस्त्वादेवेभ्यःपरिददामिसर्वेभ्यस्त्वाभूतेभ्यःपरिददाम्यरिष्ट्यै ॥ १ ॥ इत्याचार्यपठितमंत्रेणबटुरक्षणम् ॥ प्रदक्षिणमग्निंपर्युक्ष्योपविशत्याचार्यस्योत्तरंतोमाणवकः ॥ ततःब्रह्मोपवेशनादिपर्युक्षणांतंचरुवर्ज्यम् ॥ पर्युक्षणानंतरमाघारावाज्यभागौमहाव्याहृतयः सर्वप्रायश्चित्तप्राजापत्यांतस्विष्टकृच्चैताश्चतुर्दशाहुतयः ॥ ॐ प्रजापतयेस्वा० इदंप्रजापतयेनमम ॥ १ ॥ ॐ इंद्रायस्वा० इदमिंद्रा० ॥ २ ॥ ॐ अग्नयेस्वा०इदमग्न० ॥ ३ ॥ ॐ सोमायस्वा० इदंसोमा० ॥ ४ ॥ ॐ भूःस्वाहाइदमग्न० ॥ ॥ ५ ॥ ॐ भुवःस्वा० इदंवायवेन० ॥ ६ ॥ ॐ स्वःस्वाहाइदंसूर्याय० ॥ ७ ॥ ॐ त्वन्नोअग्ने० स्मतस्वा० इदमग्नीवरुणाभ्यां० ॥ ८ ॥ ॐ सत्वन्नोऽअग्ने०एधिस्वा० इदमग्नीवरुणाभ्यां० ॥ ९ ॥ ॐ अयाश्चाग्ने० जर्ठस्वाहा ॥ इदमग्नयेअयसे० ॥ १० ॥



---

१ पश्चादग्नेराचार्यस्योत्तरतउपविशतीतिजयरामवासुदेवहरिहरगदाधरादयः॥ दीक्षितइतिगर्गः ॥

ॐ येतेशतं० स्वर्काःस्वा० इदंवरुणायसवित्रेविष्णवेविश्वेभ्योदेवेभ्योमरुद्भ्यःस्वर्के भ्यश्च० ॥ ११ ॥ ॐ उदुत्तमम्० स्यामस्वा० इदंवरुणायादित्यायादितये० ॥ १२ ॥ ॐ प्रजापतयेस्वाहा० इदंप्रजाप० ॥ १३ ॥ ॐ अग्नयेस्विष्टकृतेस्वाहाइदमग्नयेस्वि ष्टकृतेन० ॥ १४ ॥ ततःसंस्रवप्राशनम् ॥ पवित्राभ्यांमार्जनम् ॥ अग्नौपवित्रप्र तिपत्तिः ॥ पूर्णपात्रवरयोरन्यतरस्यब्रह्मणेदानम् ॥ तच्चताम्रादिपात्रे ॥ प्रणीता विमोकः ॥ ॐ आपःशिवाइतिमंत्रेणप्रणीताविमोकोदकेनमूर्ध्न्यभिषिंचेत् ॥ अथै नंब्रह्मचारिणमाचार्यःसप्तशास्ति ॥ ब्रह्मचार्यसीत्याचार्योवदति ॥ भवामीतिब्रह्मचा रीवदति ॥ आपोशान ॥ इत्याचार्यः ॥ अश्नानि ॥ इतिब्रह्मचारी ॥ कर्मकुरु ॥ इत्याचार्यः ॥ करवाणि ॥ इतिब्रह्मचारी । मादिवासुषुप्थाः ॥ इत्याचार्यः ॥ नस्व

१ सप्तमंत्राणांलक्षणानिब्रह्मचर्यब्राह्मणे ।

पिमि॥इतिब्रह्मचारी ॥ वाचंयच्छइत्याचार्यः॥यच्छामिइतिब्रह्मचारी ॥ अध्ययनंसंपा
दय ॥ इत्याचार्यः ॥ संपादयामि ॥ इतिब्रह्मचारी ॥ समिधमाधेहि ॥ इत्याचार्यः ॥
आदधामि ॥ इतिब्रह्मचारी ॥आपोशानइत्याचार्यः ॥ अश्नानीतिब्रह्मचारी ॥ ॥
अथास्मैब्रह्मचारिणेसावित्रीमन्वाहआचार्यः ॥ तत्रादौआचारात्कांस्यपात्रेतंडुला
न्प्रसार्यतदुपरिसुवर्णशलाकया ॐ कारव्याहृतिपूर्विकागायत्रींलिखित्वा ॥ अद्यपू०
तिथौममब्रह्मवर्चससिद्ध्यर्थं वेदाध्ययनाधिकारसिद्ध्यर्थं गायत्र्युपदेशांगविहितंगा
यत्रीसावित्रीसरस्वतीपूजनपूर्वकमाचार्यपूजनंकरिष्ये ॥ मनोजूतिरितिप्रतिष्ठाप्य ॥
श्रीश्चतेइतिषोडशोपचारैः पूजनंकृत्वा॥ ततआचार्यपूजनंकुर्यात ॥ कथंभूतायब्रह्मचा
रिणेइत्यपेक्षायांदक्षिणतस्तिष्ठतऽआसीनायउत्तरतोग्नेः व्यवस्थिताय प्रत्यङ्मुखोप
विष्टायपादोपसंग्रहणपूर्वकमुपसन्नायाचार्यंसमीक्षमाणाय स्वयमपिसमीक्षितायब्र

यादाचार्यः ॥ कथम् ॥ ॐकारव्याहृतिपूर्वकंप्रथमंपक्षः ॥ द्वितीयमर्धर्चशः ॥ तृतीयंसर्वशःपठेत् ॥ तत्रमंत्रः हरिः ॥ ॐ भूर्भुवःस्वः तत्सवितुर्वरेण्यम्भर्गोदेवस्यधीमहि ॥ धियोयोनः प्रचोदयात् ॥ १ ॥ एवंत्रिरुक्तोभयोरपिप्रणवपूर्वकंस्वस्तिकरणम् । संवत्सरेषण्मास्येचतुर्विंशत्यहेद्वादशाहेवेत्येषांकालानामन्यतमे कालेक्षत्रियवैश्ययोः ॥ सद्यस्त्वेवगायत्रींब्राह्मणायानुब्रूयात् ॥ त्रिष्टुभंसावित्रींक्षत्रियस्य ॥ जगतींसावित्रींवैश्यस्यब्रूयात् ॥ इत्युपदेशः ॥ अत्रावसरेब्रह्मचारिणासमिदाधानम् ॥ कुशोपग्रहोभूत्वातिस्रःसमिधआदायदंडसहितएवपश्चादग्नेरुपविश्य ॥ तत्रप्रथमंतावद्दक्षिणहस्तेनाग्नेःसंधुक्षणम् ॥ संधुक्षणमिंधनप्रक्षेपः ॥ वक्ष्यमाणमंत्रैःपंचभिः ॥ ॐ

---

१ शुष्कगोमयखंडैरिंधनप्रक्षेपइतिगदाधरः ।

संं० अग्नेसुश्रवः सुश्रवसंमाकुरु ॥ १ ॥ ॐ यथात्वमग्नेसुश्रवः सुश्रवाऽअसि॥२॥ ॐएवंमाᳬं भा०
॥१६९॥ सुश्रवः सौश्रवसंकुरु ॥ ३ ॥ ॐयथात्वमग्नेदेवानांयज्ञस्यनिधिपाऽअसि ॥ ४ ॥ ॐ
एवमहंमनुष्याणांवेदस्यनिधिपोभूयासम् ॥ ५ ॥ इत्येतैःपंचभिर्मंत्रैःप्रतिमंत्रमिंध
नप्रक्षेपः ॥ उभाभ्यांसंधुक्षणप्रसिद्धिरस्ति ॥ ततःप्रदक्षिणमग्निंजलेनपर्युक्ष्योत्तिष्ठ
न्समिधआदधाति ॥ ॐ अग्नयेसमिधमाहार्षम्बृहतेजातवेदसे ॥ यथात्वमग्नेसमिधा
समिध्यसऽएवमहमायुषामेधयावर्च्चसाप्रजया पशुभिर्ब्रह्मवर्चसेनसमिन्धे जीवपुत्रो
ममाचार्योमेधाव्यहमसान्यनिराकरिष्णुर्यशस्वीतेजस्वी ब्रह्मवर्चस्यन्नादो भूयास ᳬं
स्वाहा ॥ १ ॥ इत्यनेनमंत्रेणप्रथमाम् ॥ ततोनेनैवमंत्रेणद्वितीयांसमिधमादधाति ॥
एषातइतिवासमिदाधानमंत्रः ॥ मंत्रसमुच्चयोवा ॥ ततउपविश्यपूर्ववत्परिसमू
हनम् ॥ प० समूहनम् ॥ अग्नेसुश्रवइत्यादिपंचभिर्मंत्रैःप्रतिमंत्रमिंधनप्रक्षेपः ॥ तत ॥१६९॥

स्तूष्णींपाणीप्रतप्यवक्ष्यमाणैःसप्तभिर्मंत्रैःप्रतिमंत्रेणमुखविमार्जनम् ॥ ॐ तनूपाऽ
अंग्नेसितन्वम्मेपाहि ॥ १ ॥ ॐ आयुर्दाऽअंग्नेऽस्यायुर्मेदेहि ॥ २ ॥ ॐ वर्च्चोदाऽअं
ग्नेसिवर्चोमेंदेहि ॥ ३ ॥ ॐ अग्नेयन्मेतन्वाऽउनन्तन्मऽआपृण ॥ ४ ॥ ॐ मेधांमे
देवःसविताऽआदधातु ॥ ५ ॥ ॐ मेधांमेंदेवीसरस्वतीआदधातु ॥ ६ ॥ ॐ मेधाम
श्विनौदेवावाधत्तांपुष्करस्रजौ ॥ ७ ॥ इत्येतेमुखमार्जनमंत्राः ॥ अत्रशिष्टाचारप्रा
प्ताःकेचनपदार्थालिख्यंते ॥ ॐ अङ्गानिचमऽआप्यायंताम् ॥ इतिमंत्रेणाशिरःप्रभृति
पादांतसर्वांगालंभनम् ॥ ततोदक्षिणहस्ताग्रेण॥ॐवाक्चमऽआप्यायताम् ॥ इतिमुखा
लंभनम् ॥ ॐप्राणश्चमऽआप्यायताम् ॥ इतिनासिकयोरालंभनम् ॥ॐ चक्षुश्चमऽआ

---

१वाक्यभेदात्प्रतिवाक्यंपाण्योःप्रतपनंमुखमार्जनंचेतिगदाधरः॥ललाटादिचिबुकांतंस्पृशेदितिहरिहरः।

प्यायताम् ॥ इतिचक्षुषीयुगपत् ॥ ॐ श्रोत्रंचमऽआप्यायताम् ॥ इतिदक्षिणश्रोत्रम् ॥
अनेनैवमंत्रेणवामम् ॥ ॐ यशोबलंचमऽआप्यायताम् ॥ इतिबाह्वोरुपस्पर्शनम् ॥ तत
स्त्र्यायुषकरणम् ॥ भस्मनाललाटेग्रीवायांदक्षिणेंसेहृदिच ॥ ॐ त्र्यायुषञ्जमदग्नेः ॥
इतिललाटे ॥ ॐ कश्यपस्यत्र्यायुषम् ॥ इतिग्रीवायाम् ॥ ॐ यद्देवेषुत्र्यायुषम् ॥
इतिदक्षिणेंसे ॥ ॐ तन्नोंअस्तुत्र्यायुषमितिहृदि ॥ ततःगोत्रनामपूर्वकंवैश्वानरा
दीनामभिवादनम् ॥ ततोब्रह्मचारीदक्षिणश्रोत्रेसमौकरौकृत्वाभिवादयेत् ॥ अमुकस
गोत्रअमुकप्रवरान्वितअमुकशर्माअहंभोवैश्वानरअभिवादयामिइतित्रिः ॥ ३ ॥
अमुकसगोत्र० ॥ भोःसूर्यअभिवादयामि ॥ ३ ॥ अमुकसगोत्र० ॥ भोआचार्यअ

१ अभिवादनेपाणिग्रहणंनास्तिपादस्पर्शनंकार्यमितिहरिहरः । २ सायाह्ने वरुणम् ।

भिवादयामि ॥ ३ ॥ अमुकसगोत्र० ॥ भोअध्यापकगुरोत्वामभिवादयामि ॥ ३ ॥
ततआचार्यादिःप्रत्यभिवादयेत ॥ अभिवादयस्वआयुष्मान्भवसौम्य अमुकशर्म
न् ॥ इतिप्रत्यभिवादनम् ॥ ॥ यथाहयाज्ञवल्क्यः ॥ दक्षिणंपदमालभ्यपाणिनादक्षिणे
नच ॥ सव्येनसव्यंस्पृष्टव्यमभिवादनकर्मणि ॥ व्यवस्थपाणिनाकार्यमग्निमूर्ध्वगुरुं
तथा उपसंग्रहणंयथाइतिपाठभेदः ॥ उभाभ्यामपिहस्ताभ्यांकारयेच्छ्रोत्रसंदृशौ
इति ॥ अन्यथादोषोस्ति यथा ॥ जन्मप्रभृतियत्किंचिच्चिकित्साधर्ममाचरत् ॥ स
र्वंतन्निष्फलंयातिएकहस्ताभिवादनादिति ॥ अभिवादनंतु ॥ भोशब्दंकीर्तयेदंतेस्व
स्यनाम्नोभिवादने ॥ आयुष्मान्भवसौम्येतिवाच्यःप्रत्यभिवादनेइति ॥ प्रत्यभिवा
दनाकरणे ॥ योनवेत्त्यभिवादस्यविप्रःप्रत्यभिवादनम् ॥ नाभिवाद्यःसविदुषायथाशू
द्रस्तथैवसः ॥ इत्यभिवादनम् ॥ ॥ संध्यावंदनाधिकारस्तु ॥ यावद्ब्रह्मोपदेशोनताव

त्संध्यादिकंचन ॥ ततोमध्याह्नसंध्यादिसर्वकर्मसमाचरेदिति ॥ ॥ अत्रभिक्षाच र्यचरणम् ॥ ब्रह्मचारीपात्रंगृहीत्वा ॥ भवतिभिक्षांदेहि ॥ इत्येवमुक्त्वाब्राह्मणोभिक्षां याचते ॥ भिक्षाग्रहणोत्तरंब्रह्मचारी ॥ ॐ स्वस्तीत्याशीर्वचनंदद्यात् ॥ भिक्षांभव तिदेहीतिक्षत्रियः ॥ भिक्षांदेहिभवतीतिवैश्यः ॥ यत्रप्रत्याख्यानंनकुर्वंतितत्रभिक्षा र्थंगच्छेत् ॥ तिस्रोवाभिक्षाग्राह्याःषड्द्वादशाऽपरिमितावा ॥ आत्मनआचार्यस्यच आहारपरिमितावधिवा ॥ मातुःसकाशात्प्रथमभिक्षांयाचेतेत्येकेआचार्यामन्यंते ॥ अयंप्रथमोधर्मइतिकर्कः ॥ एवंयथोक्तांभिक्षांभिक्षयित्वाआचार्यायभैक्षंनिवेदयेत् ॥ भुंक्ष्वेत्याचार्यानुज्ञातोभिक्षांस्वीकुर्यादितिभिक्षाचर्यचरणम् ॥ वाग्यतोहःशेषंतिष्ठे

१ अत्रमध्याह्नसंध्याकार्येत्युक्तंगदाधरे प्रयोगपारिजातेच॥ नेतिकृष्णभट्टीकारः ॥ब्रह्मयज्ञस्तुद्वितीयदिनमारभ्यगायत्र्याकार्यइतिधर्मसिंधुः ।

दित्येकेअहिंसन्नरण्यात्समिध आहृत्यपूर्ववदाधायवाचंविसृजते ॥ वाग्यतोमौ
नी ॥ अहःशेषंतिष्ठेदिति ॥ वाग्यमनेनियमःकेचिन्मते ॥ नेतिगदाधरः ॥ भिक्षा
निवेदनोत्तरंयावदस्तमयंगुरुसेवनाध्ययनेतिष्ठेदित्येकेआचार्यामन्यंते ॥ अहिंस
न्नितिअच्छिदन्स्वयंभग्नाः समिध आहृत्यपूर्ववदाधायइति ॥ पूर्ववत्संध्योपासनपूर्व
कंतस्मिन्नेवाग्नौपरिसमूहनादित्र्यायुषकरणांतंसमिदाधानमभिवादनंच कुर्यादित्य
र्थः ॥ वाचंविसृजतइति वाग्विसर्गः ॥ यावद्व्रतंतावदग्निरक्षणंत्रिरात्रंवा ॥ अत
आरभ्यआब्रह्मचर्यपरिसमाप्तेब्रह्मचारिणोयमानियमाःकथ्यंते ॥ अधःशायीस्या
त् ॥ अक्षारलवणाशीस्यात् ॥ दंडधारणंकर्तव्यम् ॥ अरण्यात्स्वयंप्रशीर्णाःसमिधआ
हृत्य ॥ सायंप्रातःसंध्योपासनपूर्वकपरिसमूहनादित्र्यायुषकरणांतंयथोक्तंकर्मकर्त
व्यम् ॥ गुरुशुश्रूषाकर्तव्या ॥ सायंप्रातर्भोजनार्थंभोजनसन्निधानेवारद्वयंभिक्षाचर

णंकर्तव्यम् ॥ मधुमांसाशनंनकर्तव्यम् ॥ मज्जनंनकर्तव्यम् ॥उद्धृतोदकेनस्नायादित्य
र्थः ॥ कुशाशनोपरिमसुरिकाद्युपधानंकृत्वानोपविशेत् ॥ स्त्रीणांमध्येअवस्थानंन
कर्तव्यम् ॥ अनृतंनवक्तव्यम् ॥ अदत्तंनगृह्णीयात् ॥ स्मृत्यंतरोक्ताश्चयमनियमाअ
नुष्ठेयाः ॥ यथा ॥ परिधृतवस्त्रंक्षालनंविनानदधीत ॥ भग्नंमुसंह्लग्निंतंविकृतंवस्त्रंन
दधीत ॥ अस्तसमयेभास्करावलोकनंनकुर्यात ॥ शुष्कवदनंपरिवादादिवर्जयेत् ॥
पर्युषितमन्नंभिस्सटान्नंचनभक्षयेत ॥ कांस्यायसवंगमृदपात्रेभोजनंतेनपानंचनकुर्या
त ॥ तांबूलभक्षणंनकुर्यात् ॥ अभ्यंगमक्ष्णोरंजनमुपानच्छत्रादर्शंचवर्जयेत् ॥ इति ॥
यस्यैवमध्येवयसश्चत्वारोवेदामयापठितव्याः सोष्टाचत्वारिंशद्वर्षाणिवेदब्रह्मचर्यंच
रेदिति ॥ स्मृत्युक्तान्पंचाशत्संख्याकान्ब्राह्मणान्भोजयिष्येइति ॥ ॥ अथाशीर्वादः
॥ हरिः ॐ ब्रह्मचर्यमागामित्याह ॥ ब्रह्मणऽएवैतदात्मानन्निवेदयतिब्रह्मचार्यसानी

त्याहब्रह्मणऽएवैतदात्मानम्परिददात्यथैनमाहकोनामासीतिप्रजापतिर्वैकः प्राजाप त्यमेवैनन्तत्कृत्वोपनयते ॥ १ ॥ अथास्यहस्तंगृह्णाति ॥ इंद्रस्यब्रह्मचार्यस्यग्निराचार्य स्तवाहमाचार्यस्तवासावित्येतेवैश्रेष्ठे बलिष्ठे देवतेऽएताभ्यामेवैनठंश्रेष्ठाभ्याम्बलिष्ठा भ्यान्देवताभ्याम्परिददातितथाहास्यब्रह्मचारीनकांचनार्तिमार्च्छति न सयऽएवं वेद ॥ २ ॥ अथैनम्भूतेभ्यःपरिददाति ॥ प्रजापतयेत्वापरिददामिदेवायत्वासवित्रेपरिद दामीत्येतेवैश्रेष्ठेवर्षिष्ठे देवतेऽएताभ्यामेवैनठंश्रेष्ठाभ्याम्वर्षिष्ठाभ्यां देवताभ्याम्परि ददातितथाहास्यब्रह्मचारीनकाञ्चनार्त्तिमार्च्छतिनसयऽएवंवेद ॥ ३ ॥ अद्भ्यस्त्वोषधी भ्यःपरिददामीति । तदेनमद्भ्यश्चौषधीभ्यश्चपरिददातिद्यावापृथिवीभ्यान्त्वापरिददा

मीतितदेनमाभ्यां द्यावापृथिवीभ्याम्परिददाति यद्योरिदꣳसर्वमधिविश्वेभ्यस्त्वाभू
तेभ्यः परिददाम्यरिष्ट्याऽइति तदेनꣳसर्वेभ्योभूतेभ्यः परिददात्यरिष्टयै तथाहास्यब्र
ह्मचारीनकाञ्चनार्तिमार्च्छतिनसयऽएवंवेद ॥ ४ ॥ ब्रह्मचार्यसीत्याहब्रह्मणऽएवैनन्त
त्परिददात्यपोशानेत्यमृतँवाऽआपोमृतमशानेत्येवैनन्तदाहकर्मकुर्विंतिवीर्यंवै कर्मवी
र्यंकुर्वित्येवैनन्तदाहसमिधमाधेहीति समित्स्वात्मानन्तेजसा ब्रह्मवर्चसेनेत्येवैनन्तदा
हमासुषुप्थाऽइति मामृथाऽइत्येवैनन्तदाहापोशानेत्यमृतं वाऽआपोमृतमशानेत्येवै
नन्तदाहतदेनमुभयतोऽमृतेनपरिगृह्णाति तथाहास्य ब्रह्मचारीन कञ्चनार्तिमार्च्छति
नसयऽएवंवेद ॥ ५ ॥ अथास्मैसावित्रीमन्वाह ॥ ताꣳहस्मैताम्पुरासंवत्सरेन्वाहुः

संवत्सरसम्मितावैगर्भाःप्रजायन्तेजातऽएवास्मिंस्तद्वाचन्दध्मऽइति ॥ ६ ॥ अथषट्सुमासेषु ॥ षड्वाऽऋतवःसँवत्सरस्यसँवत्सरसम्मितावैगर्भाःप्रजायन्तेजातऽएवास्मिंस्तद्वाचन्दध्मऽइति ॥ ७ ॥ अथचतुर्विंशत्यहे ॥ चतुर्विंशतिर्वैसंवत्सरस्यार्धमासाःसंवत्सरसम्मितावैगर्भाःप्रजायन्तेजातऽएवास्मिंस्तद्वाचन्दध्मऽइति ॥ ८ ॥ अथद्वादशाहे ॥ द्वादशवैमासाःसंवत्सरस्यसंवत्सरसम्मितावैगर्भाःप्रजायन्तेजातऽएवास्मिंस्तद्वाचन्दध्मऽइति ॥ ९ ॥ अथषडहे ॥ षड्वाऽऋतवःसंवत्सरस्यसंवत्सरसम्मितावैगर्भाःप्रजायन्तेजातऽएवास्मिंस्तद्वाचन्दध्मऽइति ॥ १० ॥ अथत्र्यहे ॥ त्रयोवाऽऋतवःसंवत्सरस्यसंवत्सरसम्मिता वैगर्भाः प्रजायन्ते जातऽएवास्मिंस्तद्वाच

न्दध्मऽइति ॥ ११ ॥ तदपिश्लोकङ्गायन्ति ॥ आचार्योगर्भीभवतिहस्तमाधायदक्षि
णम् ॥ तृतीयस्यार्ठसजायतेसावित्र्यासहब्राह्मणऽइतिसद्योहत्वावब्राह्मणायानुब्रूया
दाग्नेयोवैब्राह्मणःसद्योवाऽअग्निर्ज्जायतेतस्मात्सद्यऽएवब्राह्मणायानुब्रूयात् ॥ १२ ॥
तार्ठहैतामेके ॥ सावित्रीमनुष्टुभमन्वाहार्वाग्वाऽअनुष्टुप्तदस्मिन्वाचन्दध्मऽइतिनत
थाकुर्याद्योहैनन्तत्रब्रूयादान्वाऽअयमस्यवाचमदितमूकोभविष्यतीतीश्वरोहतथैव
स्यात्तस्मादेताङ्गायत्रीमेवसावित्रीमनुब्रूयात् ॥ १३ ॥ अथहैकेदक्षिणतः ॥ तिष्ठते
वासीनायवान्वाहुर्नतथाकुर्याद्योहैनन्तत्रब्रूयाद्बुल्बन्वाऽअयमिममजीजनतबुल्वोभ
विष्यतीतीश्वरोहतथैवस्यात्तस्मात्पुरस्तादेवप्रतीचेसमीक्षमाणायानुब्रूयात् ॥ १४ ॥

तांवैयच्छोन्वाह ॥ त्रयोवैप्राणाःप्राणऽउदानव्यानास्तानेवास्मिंस्तद्दधात्यथार्द्धर्च्चं शोद्वौवाऽइमौप्राणौप्राणोदानावेवप्राणोदानावेवास्मिंस्तद्दधात्यथकृत्स्नामेको वाऽअ युम्प्राणःकृत्स्नऽएवप्राणमेवास्मिंस्तत्कृत्स्नन्दधाति ॥ १५॥ तदाहुः ॥ नब्राह्मणम्ब्रह्म चर्यमुपनीयमिथुनञ्चरेद्गर्भोवाऽएषभवति योब्रह्मचर्यमुपैति नेदिमम्ब्राह्मणंविषिक्ता द्रेतसोजनयानीति ॥ १६ ॥ तद्धवाऽआहुः ॥ काममेवचरेद्धुठ्ठयोवाऽइमाःप्रजादैव्यश्चै वमनुष्यश्चतावाऽइमामनुष्यःप्रजाःप्रजननात्प्रजायन्ते च्छन्दांठंसिवैदैव्यः प्रजास्ता निमुखतोजनयतेततऽएतञ्जनयतेतस्माद्धकाममेवचरेत् ॥ १७ ॥ तदाहुः ॥ नब्रह्मचा रीसन्मध्वश्नीयादोषधीनांवाऽएषपरमोरसोयन्मधुनदन्नाद्यस्यान्तंगच्छानीत्यथहस्मा

सं० ह श्वेतकेतुरारुणेयो ब्रह्मचारी सन्मधु वश्नँस्त्रठ्यौ वा ऽएतद्विद्यायै शिष्टं यन्मधु स तुरसो यस्ये भा०
॥१७८॥ दृक्शिष्टमिति यथाह वा ऽऋचं वा यजुर्वा साम वाभिव्याहरेत्ताद्दृक्तद्य ऽएवं विद्वान्ब्रह्मचारी
सन्मध्वश्नाति तस्मादु कामुमेव वाऽश्नीयात् ॥ १८ ॥ इत्येकादशे काण्डे तृतीयप्रपा
ठके पञ्चमं ब्राह्मणम् ॥ ॐ ब्रह्म वै मृत्यवे प्रजाः ॥ प्रायच्छत्तस्मै ब्रह्मचारिणमेव न प्राय
च्छत्सोऽब्रवीदस्तु मह्यमप्येतस्मिन्भाग ऽइति यामेव रात्रिं समिधन्नाहराता ऽइति त
स्माद्यार्ठं रात्रिम्ब्रह्मचारी समिधन्नाहरत्यायुष एव तामवदाय वसति तस्माद्ब्रह्मचारी स
मिधमाहरेन्नेदायुषोऽवदाय वसानीति ॥ १ ॥ दीर्घसत्त्रं वा ऽएष ऽउपैति ॥ यो
ब्रह्मचर्यमुपैति स यामुपयन्त्समिधमादधाति सा प्रायणीया यार्ठंस्नास्यन्त्सोदयनीया ॥१७९॥

थया ऽअन्तरेणसुत्र्या ऽएवास्यताब्राह्मणाब्रह्मचर्यमुपयन् ॥ २ ॥ चतुर्धाभूतानिप्रविशति ॥ अग्निम्पदामृत्युम्पदाचार्यम्पदात्मन्येवास्यचतुर्थःपादःपरिशिष्यते ॥ ३ ॥ सयदग्नयेसमिधमाहरति ॥ यऽएवास्याग्नौपादस्तमेवतेनपरिक्रीणातितꣳसंस्कृत्यात्मन्धत्तेसऽएनमाविशति ॥ ४ ॥ अथयदात्मानन्दरिद्रीकृत्येवाह्रीर्भूत्वाभिक्षतेयऽएवास्यमृत्यौ पादस्तमेवतेन परिक्रीणाति तꣳसंस्कृत्यात्मन्धत्तेसऽएनमाविशति ॥ ५ ॥ अथयदाचार्यवचसङ्करोति ॥ यदाचार्यायकर्मकरोतियऽएवास्याचार्ये पादस्तमेवतेनपरिक्रीणातितꣳसंस्कृत्यात्मन्धत्तेसऽएनमाविशति ॥ ६ ॥ नहवैस्नात्वा ॥ भिक्षेतापहवैस्नात्वाभिक्षाञ्जयत्यपज्ञातीनामशनायामपपितॄणाꣳसऽएवंविद्वा

सं० न्यस्याएता भूयिष्ठठँश्लाघ्येततामभिक्षेतेत्याहुस्तल्लोक्यमिति सयद्यन्यामभिक्षित भा०
॥१७६॥ व्यान्नविन्देदपि स्वामेवाचार्यजायामभिक्षेताथो स्वाम्मातरन्नैनठँसप्तम्यभिक्षितातो
यात्तमेवम्विद्वाठँसमेवञ्चरन्तठँसर्वैवेदाऽआविशन्तियथाहवाऽअग्निः समिद्धोरोचतऽ
एवठँहैव स्नात्वारोचते यऽएवँविद्वान्ब्रह्मचर्यञ्चरति ॥ ७ ॥ अष्टावष्टौकृत्वो ॥
ब्रह्मवर्चसकामस्याभिषुणुयादित्याहुरष्टाक्षरावैगायत्रीब्रह्मगायत्रीब्रह्मवर्चसीहैवभ
वति ॥ ८ ॥ सयःकामयेत ॥ ब्रह्मवर्चसीस्यादितिवसन्तेसऽआदधतीतब्रह्मवै
वसन्तोब्रह्मवर्चसीहैवभवति ॥ ९ ॥ शतमानम्भवति ॥ शतायुर्वैपुरुषःशते
न्द्रियऽआयुरेवेन्द्रियँवीर्यमात्मन्धत्ते ॥ १० ॥ कां० ११, प्र० २, ॥१७६॥

ब्रा० ६ ब्रह्मवर्चसीभव ॥ आचार्यादीन्गंधादिभिःसंपूज्यतेभ्यश्चदक्षिणांद त्त्वातैराशिषोगृहीत्वा ॥ स्थापितमात्रादिदेवकोत्थापनंमंडपोद्वासनंचकार्यम् ॥ तद्वि धिश्चाग्रेवक्ष्यते ॥ इतिसंस्कारभास्करेउपनयनप्रयोगःसमाप्तः ॥ ॥ अथोपनयना दूर्ध्वंब्रह्मचारिणःसायंप्रातरग्निनित्योपासनविधिः ॥ सायंसंध्योपासनंकृत्वाधृतदंडा दिर्गृहीतेंधनाज्यसमित्स्थापिताग्निसमीपेस्वासनेउपविश्याचम्य प्राणानायम्यदेश कालकीर्तनांते ममसतेजोब्रह्मवर्चससिद्ध्यर्थमग्निनारायणप्रीतये च सायमग्निपरिसमू हनंसमिदाधानादिकंचकरिष्ये ॥ अग्निमुखंकृत्वाचत्वारिशृंगेति ध्यात्वागंधादिना भ्यर्च्य ॥ ततोग्ने सुश्रवइत्यादिपंचभिर्मंत्रैः प्रतिमंत्रंघृतप्लुतेंधनप्रक्षेपः ॥ जलेनाग्निं पर्युक्ष्य ॥ उत्थायआज्यप्लुतसमिधमेकांगृहीत्वाऽग्नयेसमिधमाहार्षमित्यारभ्यभूया सꣳस्वाहेत्यंतंमंत्रंपठित्वातामग्नौजुहुयात् ॥ अनेनैवमंत्रेणद्वितीयांतथातृतीयांसमि

धमादध्यात् ॥ पुनरग्ने सुश्रवइत्यादिपंचभिर्मंत्रैरिंधनंप्रक्षिप्य ॥ तूष्णींपाणीप्रतप्य
तनूपाअग्नेइत्यादिमंत्रैःप्रतिमंत्रंमुखविमार्जनम् ॥ पुनःअंगानिचमइत्यादियशोबलमि
त्यंतमंत्रैःप्रतिमंत्रंप्रत्यंगालंभनंकार्यम् ॥ ततस्त्र्यायुषमितिप्रतिमंत्रेणभस्मललाटेग्री
वायांदक्षिणेंसेहृदिचसंधार्यम् ॥ ततोगोत्रनामपूर्वकंवैश्वानरादीनामभिवादनम् ॥ अ
नेनसायमग्निपरिचरणेनअग्निनारायणःप्रीयताम् ॥ एवंप्रातःस्नानसंध्योपासनोत्तरमा
चमनादिदेशकालकीर्तनोत्तरंप्रातरग्निपरिसमूहनं समिदाधानादिकं चकरिष्येइत्यूहे
नइंधनप्रक्षेपादिअभिवादनांतंसर्वंकर्मकुर्यादिति ॥ उपनयनाग्नौनष्टेपुनरुत्पादनवि
धिः रेणुकारिकायाम् ॥ व्रताग्निनाशेव्रतिनात्रीन्कृच्छ्रांश्चव्रतंचरेत् ॥ प्राग्वदग्निंप्र
तिष्ठाप्यकटिसूत्रादिकंपुनः ॥ स्पृशन्मंत्रान्पठेदग्नावाज्येनाहुतिपूर्ववत् ॥ नगायत्र्यु
पदेशंचकृत्वाग्निपरिशुश्रूषामिति ॥ ॥ अथयमलजातपुत्रयोरुपनयनेनिर्णयः ॥ ॥

संस्कारक्रमार्थंज्येष्ठकनिष्ठभावउच्यते ॥ मनुः ॥ जन्मज्येष्ठेनचाह्वानंसुब्रह्मण्या
स्वपिस्मृतम् ॥ यत्तयोश्चैवगर्भेषुजन्मतोज्येष्ठतास्मृताइति ॥ देवलः ॥ यस्यजात
स्ययमयोःपश्यंतिप्रथमंमुखम् ॥ संतानःपितरश्चैवतस्मिंज्यैष्ठ्यंप्रतिष्ठितम् ॥ भाग
वतेतु ॥ द्वौतदाभवतोगर्भौसूतिर्वंशविपर्ययादित्युक्तेःपश्चादुत्पन्नस्यज्यैष्ठ्यमुक्तम् ॥
वैद्यकेप्यात्रेयसंहितायाम् ॥ यदाविशेद्विधाभूतंबीजंपुष्पपरिक्षरत् ॥ तदाभवेद्विधाग
र्भःसूतिर्वंशविपर्ययादिति ॥ तथापिबहुसंमतंमनुवचनंयुक्तम् ॥ निर्णयसिंधौ ॥ एक
स्मिन्वासरेप्राप्तेकुर्याद्यमलजातयोः ॥ क्षौरंचैवविवाहंचमौंजीबंधनमेवचेति ॥ यम
लयोर्युगपदेवसंस्कारकरणेएकमेवनांदीश्राद्धं कार्यमितिधर्मसिंधौनांदीश्राद्धप्रकरणांते
उक्तम् ॥ यमलयोरेककालेएकमंडपेवासमानसंस्कारोनदोषायेतिधर्मसिंधौविवाहनि
षेधापवादप्रकरणेउक्तम् ॥ रेणुकारिकायाम् ॥ एकस्मिन्वत्सरेचैववासरेमंडपेत

था ॥ कर्तव्यंमंगलंस्वस्रोर्भ्रात्रोर्यमलजातयोः ॥ एकंचाभ्युदयंकार्यंपृथग्वेद्यौव्रतेषु च ॥ पृथक्कुर्वीतसंभारान्पृथगाचार्यमेवच ॥ यामलेकन्यकोद्वाहेपृथग्वरौचवेदिके ॥ पृथग्यौतुकदानंचऐरिण्यादितथैवचेति ॥ संग्रहे ॥ जातैककालेयमलौसुतौव्रतेतथैवकन्येअपिऊढकाले ॥ आचार्ययुग्मंखलुवेदियुग्मंकुर्वीतनांदीमुखमेकमेवेति ॥ अथयमलपुत्रयोः उपनयनेसर्वसंभारान्प्राग्वद्द्विगुणंसंपाद्य ॥ वेदिकेचद्वेविरच्य आचार्यौद्वौइति ॥ ॥ अथयमलपुत्रयोः उपनयनप्रयोगेविशेषः ॥ कर्तापत्न्यासहमंगलंस्नात्वाऽहतवाससीपरिधाय धृतमंगलतिलको मंडपमध्ये शुभासनेप्राङ्मुख उपविश्य स्वदक्षिणतः पत्नींतद्दक्षिणतःयमलजातकुमारौउपवेश्यपवित्रपाणिराचांतःप्राणानायम्य देशकालकीर्तनांते अनयोःयमलजातकुमारयोःद्विजत्वसिद्ध्यर्थंवेदाध्ययनाधिकारार्थं च उक्तप्रकारेणज्येष्ठस्य स्वयंकनिष्ठस्यान्यद्वाराउपनयनाख्यसं

स्कारौअद्यवाश्वःकरिष्ये ॥ ममोपनेतृत्वाधिकारसिद्ध्यर्थंकृच्छ्रत्रयात्मकप्राश्चित्त
पूर्वकंद्वादशसहस्रमथवाद्वादशाधिकसहस्रं गायत्रीजपंस्वयं वाब्राह्मणद्वाराअहमाच
रिष्ये ॥ कुमारेणापिकामचारकामवादकामभक्षणादिदोषपरिहारार्थंकृच्छ्रत्रयात्म
कप्रायश्चित्तपूर्वकं ब्राह्मणद्वाराद्वादशसहस्रं वाद्वादशाधिकसहस्रं गायत्रीजपमहमा
चरिष्ये ॥ पुनःपिता ॥ अनयोःकुमारयोर्ग्रहानुकूलतासिद्ध्यर्थंग्रहयज्ञंकरिष्ये ॥ त
त्रनिर्विघ्नार्थं गणपतिपूजनंस्वस्तिपुण्याहवाचनमविघ्नपूजनंमंडपस्थापनं मातृकापू
जनंवसोर्द्धाराआयुष्यमंत्रजपंनांदीश्राद्धं ग्रहयज्ञांगमाचार्यादिवरणं दिग्रक्षणंपंचग
व्यकरणं भूमिपूजनंपंचभूसंस्कारानग्निप्रतिष्ठापनं ग्रहस्थापनंरुद्रकलशस्थापनंचाद्य
करिष्ये ॥ कालांतरेग्रहयज्ञकरणे संकल्पेयथाकालंग्रहयज्ञंकरिष्येइत्यूहःकर्तव्यः ॥
सर्वथाग्रहयज्ञाकरणेग्रहंयज्ञसंकल्पमेव न कुर्यात् ॥ तत्पक्षेनांदीश्राद्धांतंसंकल्पंकु

 



र्यात् ॥ नांदीश्राद्धोत्तरंपूर्वोक्तप्रकारेणगृहमध्येमातृकाःस्थापयेत् ॥ ग्रहयज्ञकरणे
ग्रहयज्ञांतंकुर्यात् ॥ यदाचौलेनसहोपनयनंक्रियतेतदासंकल्पेचौलोपनयनाख्येक
र्मणीअहंकरिष्येइत्यूहः ॥ अथपितास्वभ्रात्रादिभ्यः यमलजातकनिष्ठकुमारस्यचू
डोपनयनादिवाउपनयनादिसंस्कारस्याधिकारंदद्यात् ॥ तद्यथा ॥ आदौगणपतिं
संपूज्य ॥ अथाधिकारदानम् ॥ भ्रात्रेममास्ययमलजातकनिष्ठकुमारस्यचूडोपनय
नादिवाउपनयनादिसमावर्तनांतसंस्कारकर्माधिकारार्थंत्वामहंवृणे ॥ भ्रातरंगंध
वस्त्रादिनापूजयेत् ॥ तथाचसंग्रहे ॥ भ्रातरस्यकुमारस्यचूडादिस्नातकावधि ॥ सं
स्कारकर्मकरणाधिकारंतेददाम्यहम् ॥ १ ॥ इत्युक्त्वाकुमारंभ्रातुरुत्संगेदद्यात् ॥ त
द्यथा ॥ ग्रहीतावक्ष्यमाणमंत्रेणगृह्णीयात् ॥ चूडादिस्नातकांतानिकर्माणितुतवा
ज्ञया ॥ भ्रातरस्यकुमारस्यकरिष्येहंस्वपुत्रवत् ॥ इतिमंत्रेणकुमारंगृहीत्वाकुंकुमा

दिभिरलंकृत्यप्रयोगवत्संस्कारान्कुर्यात् ॥ अथ यमलजातकन्यकोद्वाहप्रकारः ॥
तत्र संभाराः ॥ वेद्यौ द्वे ॥ यौतुकद्वयं ॥ सोपस्करम् ॥ ऐरिण्याख्यवंशपात्रद्वयम् ॥
अंतःपटवस्त्रेद्वे ॥ मधुपर्कादिसर्वसामग्रीद्वयंसंपाद्येति ॥ यमलजातकन्ययोर्दिनां
तरेणोद्वाहकरणेपितुरेवाधिकारः ॥ तत्रसंकल्पेममास्याः कन्यकायाः इत्यूहः का
र्यः ॥ यमलजातकन्ययोरुद्वाहस्यैकदिनेकरणपक्षेनांदीश्राद्धांतंपित्रैवकुर्यात ॥ वि
वाहदिनकृत्यंतुभ्रात्रादिनाकार्यम् ॥ अत्रप्रधानसंकल्पेममानयोःकुमार्योरित्यूहःक
र्तव्यः ॥ दातृप्रतिग्रहीत्रोरधिकारदानेप्रतिग्रहेचविशेषः ॥ अस्याःकुमार्याःइत्यूहः
कर्तव्यः॥ उभौगणेशंसंपूज्य ॥ भ्रातर्ममास्याःयमलजातकन्यायाःविवाहसंस्कारक
र्माधिकारार्थंत्वामहंवृणे॥ भ्रातरंगंधवस्त्रादिनापूजयेत् ॥ संग्रहेअधिकारदानमन्त्रः ॥
भ्रातर्ममास्याःकन्यायाविवाहोत्साहकर्मसु ॥ अधिकारंप्रदास्यामिकुरुकर्मयथो

दितम् ॥ इतिमंत्रेणकन्यांभ्रातुस्त्संगेदद्यात् ॥ ग्रहीतावक्ष्यमाणमंत्रेणगृह्णीयात् ॥
विवाहादीनिकर्माणिसांगानितुतवाज्ञया॥ भ्रातरस्याःकन्यकायाः करिष्येहंयथोदित
म् ॥ इतिमंत्रेणकन्यांगृहीत्वाकुंकुमादिभिरलंकृत्यविवाहप्रयोगोक्तवत्संस्कारंकुर्यात
विवाहोपनयनयोर्देवकोत्थापनं पितैवकुर्यादितियमलजातविवाहोपनयनसंस्कारप्र
करणम् ॥ अथविकलांगाद्युपनयनप्रकारः ॥ स्मृत्यर्थसारे ॥ षंढांधबधिरस्तब्धजड
गद्गदपंगुषु ॥ कुब्जवामनरोगार्तशुष्कांगविकलांगिषु ॥ ध्वस्तपुंस्त्वेषुचैतेषुसंस्का
राःस्युर्यथोचितम् ॥ मत्तोन्मत्तौनसंस्कार्यौपतितश्चतथैवच ॥ तदपत्यंतुसंस्कार्य
मपरेत्वाहुरन्यथेति ॥ पतितलक्षणंतु ॥ आषोडशाद्वर्षाद्ब्राह्मणस्यानतीतःकालोभ
वतिद्वाविंशाद्वर्षाद्राजन्यस्यचतुर्विंशाद्वर्षाद्वैश्यस्य ॥ एतद्वर्षेऽनतिक्रांतएवोपनयन
कालोभवति ॥ अतऊर्ध्वंपतितसावित्रीकाभवंति ॥ तेनैतान्नोपनयेयुर्नाध्यापयेयुः

नयाजयेयुर्नचैभिर्व्यवहरेयुस्तदपत्यंसंस्कारयेयुः ॥ ब्राह्मण्यांब्राह्मणादुत्पन्नोब्राह्मण एवेतिश्रुतेः ॥ अन्येतुसंस्कार्यमित्याहुः ॥ होममाचार्यःकरोति ॥ उपनयनमाचा र्यसमीपानयनम् ॥ अग्निसमीपेवा ॥ सावित्रीवाचनंवा ॥ अन्यदंगंयथासंभवंकार्य मिति ॥ त्रयाणांपक्षाणामन्यतमेनप्रधानसिद्धिरित्याशयः ॥ मूकबधिरादेःसा वित्रीवाचनासंभवेस्पृष्ट्वाआचार्येणजपःकार्यः ॥ वाचकश्चेत्तर्हिमंत्रोलिखित्वाचा र्येणदर्शयितव्यः ॥ तेनमनसाचिंतितव्यः ॥ यथा ॥ संस्कारमंत्रहोमादीन्करो त्याचार्यएवतु ॥ उपनेयांश्चविधिवदाचार्यस्यसमीपतः ॥ आनीयाग्निसमीपेतुसावि त्रींस्पृश्यवाचयेदितिपारस्करवचनम् ॥ अन्यत्समानम् ॥ उपनेयस्यवासःपरिधानादि षुयेसंस्कारमंत्रास्तानाचार्यःपठेदित्यर्थः ॥ तेषांत्रिरात्रोर्ध्वंनदीर्घव्रतम् ॥ इतिसंस्का रभास्करेविकलांगाद्युपनयनप्रकारः ॥ अथपुनरुपनयनकारणंतद्विधिश्च ॥ तत्रपु

नरुपनयनकारणमाह ॥ तच्चप्रत्यवायनिमित्तकंप्रायश्चित्तभूतंपुनरुपनयनमाद्यम् ॥ तच्च
जातकर्मादिसहितंतद्रहितंप्रायश्चित्तांतरसहितंकेवलंचेत्यनेकविधम् ॥ कृतस्योपनयन
स्योक्तकालाद्यंगवैगुण्येनवैफल्यापत्तावपरम् ॥ तत्रप्रथमंयथा ॥ अमत्याऔषधान्तरा
नाश्यरोगनाशार्थंपैष्ट्याःसुरायाः पानेत्रिमासकृच्छ्राचरणंपुनरुपनयनंच ॥ मत्या
पैष्ट्यन्यसुरायाऔषधार्थंपानेकृच्छ्रातिकृच्छ्रौपुनरुपनयनं चपैष्टीपाने द्वादशाब्दम् ॥
अज्ञानाद्वारुणीगौडीमाध्वीसुरापीताचेत्तप्तकृच्छ्रंपुनरुपनयनम् ॥ अज्ञानाद्रेतोविण्मूत्रा
णामशनेसुरासंसृष्टान्नजलादिभक्षणेचतप्तकृच्छ्रंपुनःसंस्कारश्च ॥ ज्ञात्वाविण्मूत्रा
द्यशनेचांद्रायणंपुनःसंस्कारौ ॥ लशुनपलांडुगृंजनविड्वराहग्रामकुक्कुटनरगोमां
सभक्षणेद्विजातीनांतत्तत्प्रायश्चित्तांतेपुनरुपनयनम् ॥ माधवमतेरक्तलशुनकृष्णवृंता
कभक्षणेनपुनरुपनयनम् ॥ अविखरोष्ट्रहस्तिनीवडवामानुषीक्षीरपानेतप्तकृच्छ्रंपुनःसं

स्कारश्च ॥ रासभोष्ट्राद्यारोहणेकृच्छ्रंपुनःसंस्कारश्च ॥ इदंहेमाद्रिमतमिति ॥ सिं
धौक्कचित ॥ मिताक्षरास्मृत्यर्थसारादिमतेरासभोष्ट्रारोहेउपवासत्रयादिमात्रंनतुपु
नःसंस्कारः ॥ कौस्तुभाशयोप्येवम् ॥ वृषभारोहणेअमत्याकृच्छ्रंमत्याकृच्छ्रत्रया
दि ॥ केचिद्वृषारोहेपुनःसंस्कारंकुर्वंतितत्रमूलंमृग्यम् ॥ एवम्मेषजबस्तमहिषारोहेपि ॥
मांसभक्षकमलभक्षकपशोर्विट्भक्षणेपुनरुपनयनमात्रम् ॥ केचिन्मानुषमलभक्षणेपि
पुनःसंस्कारमात्रमाहुः ॥ प्रेतशय्याप्रतिग्राहीपुनःसंस्कारमर्हति ॥ जीवतोमृत
वार्तां श्रुत्वापुत्रादिनांऽत्यकर्मकरणेतंघृतकुंभेनिमज्ज्योद्धृत्यस्नापयित्वाजातकर्मा
द्युपनयनांतसंस्कारान्कृत्वात्रिरात्रव्रतांतेपूर्वभार्ययातस्यां मृतायामन्यभार्ययावावि
वाहःकार्यः ॥ आहिताग्निश्चेत्पुनराधानायुष्मदित्यादि ॥ तीर्थयात्रांविनाकलिंगांगवं
गांध्रसिंधुसौवीरप्रत्यंतवासिदेशगमनेपुनःसंस्कारः ॥ चांडालान्नभक्षणेचांद्रायणंबु

ब्धिपूर्वकभक्षणंकृच्छ्राब्दमुभयत्रपुनःसंस्कारश्च अजिनंमेखलादंडोभैक्ष्यचर्याव्रतानि च ॥ निवर्तंतेद्विजातीनांपुनःसंस्कारमर्हति ॥ वपनमेखलेतिस्मृत्यंतरेपाठः ॥ एवंगणिकान्नभक्षणेपिब्रह्मचारिणोमधुमांसाशनेपुनरुपनयनंप्राजापत्यं त्रिरात्रोपवासोवा ॥ मत्याभक्षणेपराकः ॥ अभ्यासेद्विगुणंपुनःसंस्कारश्च ॥ पितृमातृगुरुभ्योभिन्नस्यप्रेतस्यांत्यकर्मकरणेब्रह्मचारिणःपुनरुपनयनम् ॥ हस्तमथितदधिभक्षणेबहिर्वेदिपुरोडाशाशनेअभ्यासेकृच्छ्रःपुनःसंस्कारश्च ॥ यःसंन्यासंगृहीत्वाततोनिवृत्यगार्हस्थ्यंचिकीर्षतिसषण्मासंकृच्छ्रान्कृत्वाजातकर्मादिसंस्कारैःसंस्कृतः शुद्धोगार्हस्थ्यंकुर्यात् ॥ एवमनशनंमरणार्थंसंकल्प्यनिवृत्तोपिकुर्यात् ॥ कर्मनाशाजलस्पर्शात्करतोयाविलंघनात् ॥ गंडकीबाहुतरणात्पुनःसंस्कारमर्हति ॥ ॥ अथानध्यायादेश्चद्वितीयम् ॥ प्रदोषेनिश्चयनध्यायेमंदेकृष्णेगलग्रहे ॥ अपराह्णेचोपनीतःपुनःसंस्कारमर्हति ॥

अत्रप्रदोषःप्रदोषदिनम् ॥ कृष्णःकृष्णपक्षएकादश्यादिरंत्यत्रिकरूपोपराह्णश्चदिन
तृतीयभागरूपइत्युक्तम् ॥ अनध्यायाअपिनित्याएवपूर्णिमाप्रतिपदादयःपुनरुपन
यननिमित्तम् ॥ नतुनैमित्तिकाः ॥ अकालवृष्ट्यापिनिमित्तकत्रिरात्रादयः ॥ नै
मित्तिकेषुप्रातर्गर्जितनिमित्तानध्यायएवपुनःसंस्कारनिमित्तम् ॥ अत्रविस्तरःकौ
स्तुभे ॥ अंसाभिमर्शकबटोःसमीपमानयनंप्रधानकर्मतस्यविस्मरणेपुनरुपन
यनम् ॥ एवंगायत्र्युपदेशविस्मरणेपि ॥ अत्रापितेषांनदीर्घव्रतम् ॥ ब्रह्मपुराणेनार
दः ॥ सावित्रीग्रहणादूर्ध्वंतद्दिनेवाचतुर्थके ॥ पंचमेष्टेद्वादशेवावत्सरेव्रतमुत्सृजे
त् ॥ मनुः ॥ पक्षेमासेचवर्षेचमौंजीमोक्षःप्रशस्यते ॥ तृतीयदिवसे कार्यंपंचमेच
विशेषतइति ॥ पुनरुपनयनकारणनिर्णयः ॥ ॥ अथयजुर्वेदिनांप्रायश्चित्तैःसह
पुनरुपनयनप्रयोगः ॥ प्रायश्चित्तार्थेव्रतबंधेविशेषः ॥ तत्रनिमित्तानंतरमेवकरणे

उदगयनपुण्यनक्षत्राद्युक्तकालोनापेक्ष्यते ॥ अन्यथातुयथोक्तकालापेक्षा ॥ तत्र कर्तापितातदभावेपितृव्यादिः सपिंडः ॥ तदभावेन्यःकश्चित ॥ यत्रपुनरुपनयनं प्रायश्चित्तत्वेनोक्तंतत्रपर्षदुपदिष्टविधिनातदेवकार्यम् ॥ यत्रतुप्रायश्चित्तांतरसहितंतत्रोक्तविधिनाप्रायश्चित्तंसंस्कार्येणकारयित्वाऽऽचार्येणतस्योपनयनंकार्यम् ॥ यत्रजातकर्मादिसंस्कारसहितमुपनयनंविहितंतत्र जातादिचौलांतसंस्कारान्कृत्वा कार्यम् ॥ तत्रादौब्रह्मचारिणःपितृजेष्ठाभ्यामन्योच्छिष्टभोजनेस्त्रियासहभोजने वा श्राद्धसूतकान्नगणिकान्नाशनेवाअमुकदोषपरिहारार्थं पर्षदुपदिष्टं प्रायश्चित्तंकरिष्ये इतिकृत्वा ॥ आचार्यस्तु अमुकदोषपरिहारार्थं पुनरुपनयनसंस्कारसिद्धिद्वाराश्रीपर०द्वादशसहस्रगायत्रीजपमहं वा ब्राह्मणद्वाराकरिष्ये ॥ ब्रह्मचारीस्थंडिलेग्निप्रतिष्ठाप्यअग्निमुखंकृत्वाआज्यंसंस्कृत्याघाराज्यभागांतंकृत्वा आज्यप्लुतपलाशसमिधं

गृहीत्वा ॐ पुनस्त्वादि०कामाः स्वाहा ॥ १ ॥ ॐ पुनर्म्मैतुँपुनुरायुर्म्मुऽआगुन्पुनंः
प्राणश्पुनंरात्मामुऽआगुन्पुनश्चक्षुंपुनंश्रोत्रंम्मुऽआगन् ॥ वैश्वानुरोऽअदंब्धस्तनू
पाऽअग्निर्न्नंःपातुदुरितादंवुद्ध्यात्स्वाहा ॥ २ ॥ ततश्चरुहोमः ॥ ॐ सुप्ततेंअग्ने०घृते
नस्वाहा ॥ १ ॥ यत्तेंपुवित्रमुर्च्चिष्यग्नेवितंतमन्तुरा ॥ ब्रह्मुतेनंपुनातुमास्वाहा ॥ २ ॥
पवमानुःसोऽअद्यनंःपुवित्रेंणुविर्चर्षणिः ॥ यःपोतासपुंनातुमास्वाहा ॥ ३ ॥ उभा
भ्यांदेवसवितःपुवित्रणसुवेनच ॥ माम्पुंनीहिविश्वतुःस्वाहा ॥ ४ ॥ ततःस्विष्टकृ
दादिनवाहुतीर्हुत्वाहोमशेषंसमाप्य ॥ गांदत्त्वाअथवागोनिष्क्रयंदद्यात् ॥ ततः कृत
मंगलस्नानोधृततिलकःकर्ताशुभासनउपविश्य ॥ दक्षिणतःसंस्कार्यंचोपवेश्य ॥

सं० आचम्यप्राणानायम्यदेशकालकीर्तनांते अस्यसंस्कार्यस्यपुनः संस्कारसिद्धिद्वारा भा०
॥१८४॥ श्रीपरमेश्वर० जातकर्माद्युपनयनांतान्संस्कारान्करिष्ये ॥ अथवाकेवलमुपनयन
संस्कारंकरिष्येइतिसंकल्पः ॥ तदंगविहितंनिर्विघ्नतासिद्ध्यर्थंगणेशपूजनादिमंड
पप्रतिष्ठानांदीश्राद्धांतंकृत्वा ॥ अधिकारार्थंब्राह्मणान्भोजयित्वाकुमारवपनादिकं
कृत्वाप्रयोगानुसारेणउपनयनंकृत्वावाजातकर्मप्रभृत्युपनयनांतसंस्कारान्कृत्वा ॥ इ
त्याद्यःपक्षः ॥ अथापरमापरिधानात्कृत्वापालाशीसमिधमादायव्रात्यप्रायश्चित्तंहु
त्वाव्याहृतीर्जुहोति ॥ इतिद्वितीयःपक्षः ॥ अथापरोब्राह्मणवचनात्सावित्र्याशतकृ
त्वोभिमंत्रितंघृतंप्राश्य कृतप्रायश्चित्तो भवतीत्यादिकमवददिति तृतीयःपक्षः ॥
तत्रोक्तपक्षाणांशक्ताशक्तभेदेनव्यवस्था ॥ इदंकौस्तुभेद्रष्टव्यम् ॥ एवंशाखांतरेष्व ॥१८४॥
पिवपनमेखलाजिनदंडभैक्ष्यचर्याव्रतादिकं वैकल्पिकव्यवस्थयानुष्ठायस्वस्वशाखो

क्तोपनयनं कार्यम् ॥ ॥ इति संस्कारभास्करे संक्षिप्तपुनरुपनयनप्रयोगः ॥ ॥ अथ ब्रह्मचारिव्रतलोपे प्रायश्चित्तम् ॥ बौधायनः ॥ अत्र शौचाचमनसंध्यावंदनदर्भ भिक्षाग्निकार्यराहित्यशूद्रादिस्पर्शकौपीनकटिसूत्रयज्ञोपवीतमेखलादंडाजिनत्यागदि वास्वापच्छत्रधारणपादुकाद्यारोहणमालाधारणोद्वर्तनानुलेपनांजनजलक्रीडाद्यूतनृ त्यगीतवाद्याभिरतिपाखंडादिभाषणपर्युषितभोजनादिव्रतलोपसकलदोषपरिहारार्थं कृच्छ्रत्रयं चरेन्महाव्याहृत्यादिअनादिष्टहोमं च कुर्यात् ॥ तद्यथा ॥ आचम्यप्रा णानायम्य देशकालकीर्तनांतेपूर्वोक्तशौचाचमनादिव्रतनियमानां मध्येकश्चिद्व्रतलो पस्तज्जनितदोषपरिहारार्थं कृच्छ्रत्रयप्रायश्चित्तंवातत्प्रत्याम्नायगोनिष्क्रयीभूतरजत द्रव्यदानंमहाव्याहृत्यादि अनादिष्टहोमंचकरिष्ये ॥ तत्रादौगोनिष्क्रयरजतद्रव्यं दत्त्वा ॥ व्रतलोपजनितदोषपरिहारार्थंकृच्छ्रत्रयात्मकप्रत्याम्नायेनइदंयथाशक्तिगो

निष्क्रयद्रव्यममुकशर्मणेब्राह्मणायतुभ्यमहंसंप्रददेइति ॥ ततःस्थंडिलेपंचभूसंस्का
रपूर्वकंविटनामानमग्निंप्रतिष्ठाप्य ॥ ब्रह्मोपवेशनाद्याज्यभागांतेव्यस्तसमस्तव्या
हृतीश्चतस्रः पंचवारुणेत्यादिनवाहुतीश्चाज्येनजुहुयात् ॥ तद्यथा ॥ ॐ भूःस्वाहा
इदमग्नयेनमम ॥ ॐ भुवःस्वाहाइदंवायवेन० ॥ ॐ स्वःस्वाहाइदंसूर्याय० ॥ ॐ भू
र्भुवःस्वःस्वाहाइदंप्रजापतयेन० ॥ ॐ त्वन्नोऽअग्ने० स्मत्स्वाहा० इदमग्नीवरुणाभ्यां
न० ॥ ॐ सत्वन्नोअग्ने० एधिस्वा० इदमग्नीवरुणा० ॥ ॐ अयाश्चाग्ने० जर्ठस्वा० इ
दमग्नयेअयसेनमम ॥ ॐ येतेशतं० स्वर्काःस्वा० इदंवरुणायसवित्रेविष्णवेविश्वेभ्यो
देवेभ्योमरुद्भ्यःस्वर्केभ्यश्चन० ॥ ॐ उदुत्तमम्व० स्यामस्वाहा० इदंवरुणाया
दित्यायादितयेचनमम ॥ एताअनादिष्टनवाहुतयः ॥ अनंतरंमहाव्याहृत्यादि
स्विष्टकृदंतादशाहुतीराज्येनहुत्वा ॥ संस्रवप्राशनादिप्रणीताविमोकांतंहोमशेषंसमा

प्य ॥ ॥ त्रुटितानांमेखलादीनांपुनर्ग्रहणंकार्यम् ॥ तथाचमनुः ॥ मेखलामजिनंदंड
मुपवीतंकमंडलुम् ॥ अप्सुप्रास्यविनष्टानिगृहीत्वान्यानिमंत्रवदितिव्रतलोपेप्रायश्चि
त्तम् ॥ ॥ अथवेदारंभनिर्णयः ॥ तत्रवेदब्रह्मचर्यंचरेदित्यनेनवेदाध्ययनांगतयाब्रह्म
चर्याचरणमुक्तम् ॥ वेदाध्ययनारंभकालस्येतिकर्तव्यताचनोक्ता ॥ केवलंसमावर्तन
कर्मसूत्रकारेणारब्धम् ॥ वेदंसमाप्यस्नायात् ॥ अत्रवेदस्यारंभंविनासमाप्तिःकर्तुंन
शक्यते ॥ अतउपनयनानंतरमेववेदारंभस्यसमयः इत्यवगम्यते ॥ इतिकर्तव्यता ॥
पुनःएतदेवव्रतादेशनविसर्गेष्विति ॥ उपाकर्महोमातिदेशाद्व्रतादेशनंवेदारंभःप्राप्नो
ति ॥ अतश्च ॥ उपनीयगुरुःशिष्यंमहाव्याहृतिपूर्वकम् ॥ वेदमध्यापयेदेनंशौचाचा
रांश्चशिक्षयेदिति ॥ अत्रापिनांदीश्राद्धंविनानारभ्यते ॥ अतः कारणाज्ज्योतिःशा
स्त्रोक्तेशुभेदिनेकार्यम् ॥ सचस्वशाखापूर्वकोवेदारंभः ॥ वसिष्ठः ॥ पारंपर्यागतोयेषां

वेदःसपरिबृंहणम् ॥ यच्छाखाकर्मकुर्वीततच्छाखाध्ययनंतथा ॥ १ ॥ अधीत्यशा
खामात्मीयामन्यशाखांततःपरम् ॥ स्वशाखांयःपरित्यज्यशाखारंडःसउच्यते ॥
॥ २ ॥ पराशरः ॥ वेदस्याध्ययनंसर्वंधर्मशास्त्रस्यचैवाहे ॥ अजानतोर्थंतद्व्यर्थंतु
षाणांकंडनंयथा ॥ १ ॥ मनुः ॥ योनधीत्यद्विजोवेदमन्यत्रकुरुतेश्रमम् ॥ सजीवन्ने
वशूद्रत्वमाशुगच्छतिसान्वयः ॥ ॥ १ ॥ इति ॥ अत्रप्रतिवेदस्यारंभणंपृथक्पृथक् ॥
तत्पक्षेप्रतिवेदस्याहुतिद्वयंब्रह्मणे इत्यादिनवाहुत्यनंतरं महाव्याहृत्यादिस्विष्टकृदं
तादशाहुतीर्हुत्वाहोमशेषंसमाप्यवेदारंभंकृत्वाअभ्यसेत् ॥ ततःपरंद्वितीयस्यनांदी
श्राद्धाद्यारंभः ॥ एवंसर्वत्र ॥ तदशक्तौएकतंत्रेणनांदीश्राद्धमेकमेवेतिप्रतिवेदस्याहु
तिद्वयंब्रह्मणेछंदोभ्यश्चहुत्वा अंतेप्रजापत्यादिसप्ताहुतीर्हुत्वाअनंतरंमहाव्याहृत्या
दिदशाहुतयः ॥ तत्रायंक्रमः ॥ वेदाख्येमातृनांदीमुखमथजुहुयाद्वह्निवर्क्केऽन्तरिक्षंवायुं

ब्रह्मादिहुत्वानवयजुषिभवेन्मुख्यतोभूर्भुवाद्याः ॥ ऋग्वेदेप्राक्पृथिव्याग्नयइतिचदि
वेसूर्यमेवंचसामाथर्वेदिभ्यश्चचंद्रमसइतिनिखिलातत्त्वसंख्याहुतीनाम् ॥ १ ॥ अथ
प्रयोगः ॥ तत्रआचार्यउपनयनोत्तरमनध्यायरहितेज्योतिःशास्त्रोक्तशुभदिनेब्रह्मचा
रिणमाहूयशुभासनेस्वस्योत्तरतउपवेश्य ॥ व्रतादेशोवेदारंभस्तत्रप्राणानायम्यदेश
कालकीर्तनांतेअस्यब्रह्मचारिणः अद्यकरिष्यमाणानांवेदव्रतचतुष्टयारंभणकर्मणां
स्वशाखापूर्वकवेदारंभमहंकरिष्ये ॥ तत्रनिर्विघ्नार्थंगणपतिपूजनंस्वस्तिपुण्याहवाचनं
मातृकापूजनंवसोर्द्धारानांदीश्राद्धंचकरिष्यइतिकृत्वा ॥ तत्रपुण्याहवाचनांतेअपापकः
प्रीयतामित्यूहः ॥ ततःस्थंडिलेपंचभूसंस्कारपूर्वकंसमुद्भवनामानमग्निंप्रतिष्ठा
प्य ॥ ततोब्रह्मोपवेशनाद्याज्यभागांतंचरुवर्जंकृत्वा ॥ आज्यभागानंतरंयजुर्वेदाहु
तीर्जुहोति ॥ ॐ अंतरिक्षायस्वाहाइदमंतरिक्षायनमम ॥ ॐ वायवे०इदंवायवेन० ॥

ॐ ब्रह्मणेस्वा० इदंब्रह्मणे० ॥ ॐ छंदोभ्यःस्वा० इदंछंदोभ्यो० ॥ अथऋग्वेदाहुती
र्जुहोति ॥ ॐ पृथिव्यैस्वा० इदंपृथिव्यै० ॥ ॐ अग्नयेस्वा० इदमग्नये० ॥ ॐ ब्र
ह्मणेस्वा० इदंब्र० ॥ ॐ छंदोभ्यःस्वा० इदंछंदोभ्यो० ॥ अथसामवेदाहुतीर्जुहोति ॥
ॐ दिवेस्वा० इदंदिवे० ॥ ॐ सूर्यायस्वा० इदंसूर्या० ॥ ॐ ब्रह्मणेस्वा० इदंब्र
ह्म० ॥ ॐ छंदोभ्यःस्वा० इदंछंदोभ्यो० ॥ ॥ अथाथर्ववेदाहुतीर्जुहोति ॥ ॐ दि
ग्भ्यःस्वा० इदंदिग्भ्योन० ॥ ॐ चंद्रमसेस्वा० इदंचंद्र० ॥ ॐ ब्रह्मणेस्वा० इदंब्र० ॥
ॐ छंदोभ्यःस्वा० इदंछंदो० ॥ ॐ प्रजापतये० इदंप्र० ॥ ॐ देवेभ्यःस्वा०इदंदेवे० ॥
ऋषिभ्यःस्वा० इदमृ० ॥ ॐश्रद्धायैस्वा० इदंश्रद्धायै० ॥ ॐमेधायैस्वा० इदंमेधायै० ॥
ॐ सदसस्पतयेस्वा०इदंसदसस्पतये० ॥ ॐ अनुमतयेस्वा०इदमनुमतये० ॥ ततो
महाव्याहृत्यादिस्विष्टकृदंतादशाहुतयः ॥ ततःसंस्रवप्राशनादिप्रणीताविमोकांतंहो

मशेषंसमाप्य ॥ ततोवेदाध्ययनमारभेत् ॥ तच्चकारिकायाम् ॥ वेदारंभेवसानेचपादौ
ग्राह्यौगुरोःसदा ॥ व्यत्यस्तपाणिनाकार्यमुपसंग्रहणंगुरोः ॥ १ ॥ सव्येनसव्यःस्प्रष्ट
व्योदक्षिणेनतुदक्षिणः ॥ ब्राह्मणः प्रणवंकुर्यादादावंतेचसर्वदा ॥ २ ॥ प्रत्यङ्मुखायोप
विष्टायोपसमीक्षतेगुरुः ॥ वेदारंभमनुब्रूयाद्यथाशास्त्रमतंद्रितः ॥ ३ ॥ हस्तौतुसंयुतौधा
र्यौजानुनोरुपरिस्थितौ ॥ गुरोरनुमतिंकुर्यात्पठन्नान्यमतिर्भवेत् ॥ ४ ॥ हस्तहीनंतु
योधीतेस्वरवर्णविवर्जितम् ॥ ऋग्यजुःसामभिर्दग्धोवियोनिमधिगच्छति ॥ ५ ॥ प्र
णवंप्राक्प्रयुंजीतव्याहृतीस्तदनंतरम् ॥ सावित्रींचानुपूर्वेणततोवेदान्समारभेत् ॥ १ ॥
प्रणवमादावंतेचकुर्यात् ॥ ततःशिष्टाचाराद्ब्रह्मचारिणावेदसरस्वतीपूजनंकार्यम् ॥
अद्यपू० तिथौब्रह्मवर्चससिद्ध्यर्थंवेदसरस्वतीपूजनंचकरिष्ये ॥ वेदसरस्वतींस्थाप्य
वेदोसियेनत्वम् ॥ श्रीश्चतेइतिऋग्भ्यःषोडशोपचारैःसंपूज्य॥ततःप्रत्यङ्मुखायोपवि

ष्टायपादोपसंग्रहणपूर्वकमाचार्यमुखमीक्षमाणायअनसूयकायस्वहस्तौजानुभ्यामुपरि
कृतवतेब्रह्मचारिणेवेदंप्रयच्छति ॥ ॐ भूर्भुवःस्वः ॐ तत्सवितु॰ ॥ १ ॥ ॐ इषेत्वो
र्ज्जेत्वावायवस्थदेवोवः सविताप्रार्प्पयतु श्रेष्ठतमायकर्म्मणऽआप्यायध्वमघ्न्याऽइ
न्द्रायभागम्प्रजावतीरनमीवाऽअयक्ष्मामावस्तेनऽईशतमाघशंसोध्रुवाऽअस्मिन्गो
पतौस्यातबह्वीर्य्यजमानस्यपशून्पाहि ॥ १ ॥ इतियजुर्वेदः ॥ ॐ अग्निमीळेपुरोहि
तंयज्ञस्यदेवमृत्विजम् ॥ होतारंरत्नधातमम्॥१॥इतिऋग्वेदः ॥ ॐ अग्नऽआयाहिवीत
येगृणानोहव्यदातये ॥ निहोतासत्सिबर्हिषि ॥ १ ॥ इतिसामवेदः॥ ॐ शन्नो
देवीरभिष्टयआपोभवंतुपीतये ॥ शंय्योरभिस्रवन्तुनः ॥ १ ॥ इत्यथर्ववेदः ॥ ॐ स्व

स्तीत्युक्त्का ॥ इतिस्वशाखाविधिवत्स्वशाखावेदंपरशाखाविधिवत्परशाखावेदंचपठेत ॥ ब्राह्मणभोजनम् ॥ यांतुमातृगणेतिमातृणांविसर्जनम् ॥ इतिसंस्कारभास्करे वेदव्रतचतुष्टयम् ॥ ॥ अथकेशांतकर्मोच्यते ॥ जन्मतःसप्तदशेवर्षेनोचेद्व्रतविसर्गात्पूर्व कालापकर्षणंकृत्वाउदगयनेशुक्लपक्षेचौलोक्ततिथ्यादौगोदानंकुर्यात ॥ ततआचार्यो बहिःशालायांपत्न्यासहशुभासनेउपविश्य ॥ तद्दक्षितोब्रह्मचारिणमुपवेश्य ॥ आचम्यप्राणानायम्यदेशकालकीर्तनांतेअस्यब्रह्मचारिणःकेशांतक[illegible]हंकरिष्ये ॥ तदंगविहितंगणपतिपूजनं स्वस्तिपुण्याहवाचनमविघ्नपूजनं मंडपस्थापनंमातृकापूजनंवसोर्द्धाराआयुष्यमंत्रजपंनांदीश्राद्धंचकरिष्ये इतिकृत्वा ॥ अत्रपुण्याहवाचनांते

---

१ ब्रह्मचारिणःरेतोत्सर्गादिप्रायश्चित्तंप्रयोगरत्नादिभ्योवगंतव्यम् । २ केशांतकालनिर्णयोगदाधरादिभ्योज्ञेयः ॥ मंडपप्रतिष्ठाकर्तव्या ॥ तथापीदानींतनानामकरणान्नात्रलिखिता ।

प्रजापतिःप्रीयतामित्यूहःकर्तव्यः ॥ बहिःशालायांस्थंडिलेपंचभूसंस्कारपूर्वकंसूर्य
नामाग्निंप्रतिष्ठाप्य ॥ ततोब्रह्मोपवेशनादिपात्रासादनंचरुवर्जम् ॥ पात्रासादनानंतर
मुपकल्पनीयानि ॥ शीतोदकम् ॥ उष्णोदकम् ॥ नवनीतपिंडः ॥ घृतपिंडोवा ॥ त्र्ये
णीशलली ॥ सप्तविंशतिकुशतरुणानि ॥ ताम्रपरिष्कृतआयसक्षुरः ॥ आनडुहगो
मयपिंडः॥ नापितोवरश्च ॥ अत्रगौरेव वरः॥ एतान्युपकल्प्य ॥ पवित्रच्छेदना
दिपर्युक्षणांतेआघारावाज्यभागौचहुत्वा ॥ ततोमहाव्याहृत्यादिस्विष्टकृदंतदशाहु
तयः॥ तद्यथा ॥ ॐ प्रजापतयेस्वाहा इदंप्रजा० ॥ ॐइंद्रायस्वाहा इदमिंद्रा० ॥ ॐ
अग्नयेस्वा० इदम० ॥ ॐ सोमायस्वा० इदंसोमा० ॥ ॐ भूःस्वाहाइदमग्न० ॥ ॐ
भुवःस्वा० इदंवा० ॥ ॐ स्वःस्वा० इदंसूर्याय० ॥ ॐ त्वन्नोअग्ने० इदमग्नीवरु० ॥ ॥१८९॥

ॐ सत्वन्नोऽअग्ने० इदमग्नीव० ॥ ॐ अयाश्चाग्ने० इदमग्नयेअ० ॥ ॐ येतेशतं० इदं वरुणा० सवि० ॥ ॐ उदुत्तमं० इदंवरुणायादि० ॥ ॐ प्रजापत०इदंप्रजा० ॥ ॐ अग्नयेस्विष्टकृते० इदं० ॥ ततः संस्रवप्राशनादिप्रणीताविमोकांतंहोमशेषंसमाप्य ॥ ततोमातुरंकेब्रह्मचारिणमुपवेश्य ॥ एकस्मिन्पात्रेशीतास्वप्सूष्णाअपआसिंचति ॥ उदकासेकमंत्रेविशेषः ॥ ॐ उष्णेन० केशश्मश्रुवपेति ॥ अथात्रनवनीतपिंडंप्रास्यति ॥ ततउदकमादायदक्षिणगोदानमुंदति ॥ ॐ सवित्राप्रसूताइति मंत्रेण ॥ ततः त्र्येण्याशलल्याविनयति ॥ त्रीणिकुशतरुणान्यंतर्दधाति ॥ ॐ ओषधेत्रायस्वइतिमंत्रेण ॥ ताम्रपरिष्कृतायसक्षुरग्रहणम् ॥ ॐ शिवोनामासि० इतिमंत्रेण ॥ ततः केशकुशक्षुरसंलग्नीकरणम् ॥ ॐ निर्वर्तयाम्या० इतिमंत्रेण ॥ छेदनमंत्रस्तु ॥ ॐ ये

नावपत्सवि० इतिमंत्रेणप्रच्छिद्यानडुहेगोमयपिंडेप्रास्यत्युत्तरतोध्रियमाणे ॥ एवमे
वापरंवारद्वयंदक्षिणगोदानेतूष्णींकर्मकर्तव्यम् ॥ ततःपश्चिमगोदानेउंदनादिसंलग्नक
रणांतमेकवारंपूर्ववत्समंत्रकंकुर्यात् ॥ छेदनमंत्रस्तु ॥ ॐ त्र्यायुषञ्जमद० ॥ इति
मंत्रेणप्रच्छिद्या० ॥ पश्चिमगोदानेएवंपुनर्वारद्वयंतूष्णींकर्मकर्तव्यम् ॥ ततः उत्तर
गोदानेउंदनादिसंलग्नकरणांतमेकवारंपूर्ववत्समंत्रकंकुर्यात् ॥ छेदनमंत्रस्तु ॥ ॐ
येनभूरिश्च० ॥ इतिमंत्रेणप्रच्छिद्यान० ॥ पुनरुत्तरगोदानेएवंपुनर्वारद्वयंतूष्णींकर्म
कर्तव्यम् ॥ ततः शिरःसमंतान्मुखांतंक्षुरंत्रिवारं भ्रामयित्वा ॥ मंत्रे विशेषः ॥ ॐ
यत्क्षुरेणमज्ज० शिरोमास्यायुःप्रमोषीर्मुखम् ॥ १ ॥ इतिमंत्रेण ॥ ततःशिरःसमुंद्यना
पितायक्षुरंप्रयच्छति ॥ ॐ अक्षण्वंपरिवपेत्यनेनमंत्रेण ॥ नापितःशिखांरक्षित्वा
केशश्मश्रुवपनंकुर्यात् ॥ ब्रह्मचारिणःस्नानम् ॥ केशांतेआचार्यायगांददाति ॥ स

वेंधुसंस्कारकर्मस्वाधानादिविवाहांतेषुपितैवकर्ता ॥ तदभावेअन्यः ॥ यथाश
क्तिब्राह्मणान्भोजयिष्ये ॥ यांतुमातृइतिमातॄणांविसर्जनम् ॥ ॥ संवत्सरंब्रह्मचर्य
मवपनंचइतिकेशांतकर्मानंतरंब्रह्मचारीब्रह्मचर्यव्रतंचरेत् ॥ अवपनंचकेशांतोत्त
रंसंस्कृतःसंवत्सरंवपनंवर्जयेत् ॥ द्वादशरात्रंषड्रात्रंत्रिरात्रमंततःइतिविकल्पः ॥
इतिसंस्कारभास्करेकेशांतप्रयोगः ॥ ॥ अथसमावर्तनकर्मोच्यते ॥ समावर्त
नमुदगयनेकार्यं तथापिकर्मवशान्मार्गशीर्षेविवाहप्रसक्तौदक्षिणायनेपिकार्यम् ॥ इ
तिधर्मसिंधौ ॥ समावर्तनकालाः ॥ सावित्रीग्रहणादूर्ध्वंतद्दिनेवाचतुर्थके ॥ तृती
येद्वादशेवर्षेवत्सरेव्रतमुत्सृजेत् ॥ पूर्वार्धोक्तकालौ अन्यथागौणेतिकारिकाकारः ॥
वेदमधीत्यगुरुणानुज्ञातःस्नायात् ॥ ब्रह्मचर्यंवाष्टाचत्वारिंशद्वर्षाणिसमाप्यस्ना
यात् ॥ द्वादशवार्षिकंवाव्रतंसमाप्यगुर्वनुज्ञातःस्नायात् ॥ उभयंवासमाप्यस्ना

 



यात ॥ वेदशब्देनविधिर्विधेयस्तर्कइत्येतत्त्रयमुच्यते ॥ विधिर्विधायकंब्राह्मणवा
क्यम् ॥ विधेयोमंत्रः ॥ तर्कोर्थवादः ॥ शिक्षाकल्पोव्याकरणंनिरुक्तंछन्दोज्योतिषमि
त्येभिःषडंगैः सहितंवेदमधीत्यावगम्यचस्नानमिच्छंत्येकेआचार्याः ॥ नकल्पमा
त्रेग्रंथमात्रेअधीतेऽनवबुद्धेस्नानमिच्छंति ॥ अनुष्ठानायोग्यत्वात् ॥ ग्रंथमात्रा
ध्ययनेपिकृतेयाज्ञिकोयज्ञविद्याकुशलःकामंस्नायात् ॥ तच्चज्योतिःशास्त्रोक्तशुभदि
नेब्रह्मचारीकृतनित्यक्रियोऽर्थादिनागुरुंसंपूज्यतेनानुज्ञातः समावर्तनाख्यं कर्मकुर्या
त् ॥ वागीशादितिसौम्यपौष्णदिनकृन्मित्रोत्तरारोहिणीगोविंदेषु शशांकभानुगुरु
विच्छुक्रार्कवारादिषु ॥ रिक्तापर्वतथाष्टमींप्रतिपदंमेषंचकीटंहरिंहित्वाशुद्धियुतेष्टमे
ह्निविमलेकुर्यात्समावर्तनमितिश्रीधरः ॥ तत्रायंक्रमः ॥ स्नानेच्छोर्मातृनांदीसप्तत्रिहु ॥१९१॥
तिसमित्त्वाष्टकुंभाभिषेकोमौंजींमुक्त्वारवीक्षादधितिलवपनंदंतधावावनेजौ ॥ लेपो

वासांसि सूत्रंस्रजमथ शिरसोवेष्टनंकर्णभूषां कृत्वानेत्रांजनादिरपिचपदत्राणयष्टिप्रवासाः ॥ ततआचार्यउक्तदिनेकृतनित्यक्रियःसभार्यःब्रह्मचारिणासहशुभासनेउपविश्याचम्यप्राणानायम्यदेशकालकीर्तनांते अस्यब्रह्मचारिणः गृहस्थाश्रमांतरप्राप्तिद्वाराश्रीपरमेश्वरप्रीत्यर्थंसमावर्तनाख्यंकर्मकरिष्ये ॥ तदंगविहितंगणपतिपूजनंस्वस्तिपुण्याहवाचनंमातृकापूजनं वसोर्धाराआयुष्यमंत्रजपंनांदीश्राद्धं च करिष्येइतिकृत्वा ॥ अत्रपुण्याहवाचनांतेसुश्रवःप्रीयतामितिवदेत् ॥ ततःभोआचार्यअहंस्नास्येइत्यनुज्ञाप्रार्थनाब्रह्मचारिणः ॥ स्नाहीतिप्रत्यनुज्ञागुरोः ॥ ततःपादोपसंग्रहणंगुरोः ॥ ततःपरिश्रितेपंचभूसंस्कारपूर्वकंसूर्यनामानमग्निंप्रतिष्ठाप्य ॥ ततोब्रह्मोपवेशनादिपात्रासादनंचरुवर्जम् ॥ पात्रासादनानंतरमुपकल्पनीयानि ॥ संधुक्षणानि ॥ पर्युक्षणार्थमुदकम् ॥ समिधः ॥ हरिताः कुशाः ॥ अष्टौवारिकुंभाः ॥ धौतवस्त्रम् ॥ द

धितिलावा ॥ नापितः ॥ स्नानार्थमुदकम् ॥ औदुंबरंकनिष्ठिकाग्रवत्स्थूलंद्वादशांगुलं दीर्घंसरलंसत्वचंदंतधावनकाष्ठंब्राह्मणस्य ॥ दशांगुलदीर्घंराजन्यस्य ॥अष्टांगुलदीर्घंवैश्यस्य ॥ उद्वर्तनद्रव्यम् ॥ स्नानार्थमुष्णोदकम् ॥ चंदनम्॥अहतेवाससी ॥यज्ञोपवीतं पुष्पाणि ॥ उष्णीषम् ॥ कर्णालंकारौ ॥ अंजनम् ॥ आदर्शः ॥ छत्रम् ॥ उपानहौ॥वैणवदंडः ॥ पूर्णपात्रम् ॥ वरोवा ॥एतान्युपकल्प्य ॥ पवित्रच्छेदनादिपर्युक्षणांतेआघाराज्यभागौचजुहुयात् ॥ ॐ प्रजापतयेस्वा० इदंप्र० ॥ ॐ इंद्रायस्वा० इदमिं० ॥ ॐ अग्नयेस्वा० इदम० ॥ ॐ सोमाय०इदंसो० ॥ इत्याज्यभागानंतरंस्वशाखावेदारंभणाहुतिहोमः ॥ अनंतरंब्रह्मणेछंदोभ्यइत्याहुतिद्वयमपिजुहोति ॥ यदिवेदचतुष्टयमधीत्यस्नानंकरोतितदाप्रतिवेदंवेदाहुतिद्वयंहुत्वाब्रह्मणेछंदोभ्य इत्याहुतिद्वयं पुनर्जुहोति ॥ ततःप्रजापतयइत्यारभ्यानुमत्यंतासप्ताहुतीर्जुहोति ॥ एवंवेदद्वयत्रयाध्य

यनेपियोज्यम् ॥ ततोमहाव्याहृत्यादिस्विष्टकृदंतादशाहुतयः ॥ तद्यथा ॥ ॐ अंत
रिक्षायस्वा० इदमंत० ॥ ॐ वायवेस्वा० इदंवा० ॥ ॐ ब्रह्मणेस्वा० इदंब्र० ॥ ॐ छं
दोभ्यः स्वा०इदंछं० ॥ इतियजुः ॥ ॐ पृथिव्यैस्वा०इदंपृ० ॥ ॐ अग्नयेस्वा० इदमग्न
ये० ॥ ॐ ब्रह्मणेस्वा०इदंब्र० ॥ ॐ छंदोभ्य०ःस्वा० इदंछं० ॥ इतिऋक् ॥ ॐ दिवे
स्वा०इदंदि० ॥ ॐसूर्यायस्वा० इदंसू० ॥ ॐब्रह्मणेस्वा०इदंब्र० ॥ ॐछंदोभ्यःस्वा०
इदंछं० ॥ इतिसाम ॥ ॐ दिग्भ्यः स्वा०इदंदि० ॥ ॐ चंद्रमसे० इदंचं० ॥ ॐ ब्रह्म
णे० इदंब्र० ॥ ॐ छंदोभ्य०इदंछं० ॥ इत्यथर्वः ॥ ॐ प्रजापतये०इदंप्र० ॥ ॐ देवे
भ्यःस्वा० ॥ ॐ ऋषिभ्यःस्वा० ॥ ॐ श्रद्धायै० ॥ ॐमेधायै० ॥ ॐ सदसस्पतये०
॥ ॐ अनुमतये० ॥ ॐ भूःस्वा० इदम० ॥ ॐभुवःस्वा०इदं वा० ॥ ॐ स्वःस्वाहा०

इदंमू० ॥ ॐ त्वन्नोअग्ने० इदमग्नीव० ॥ ॐ सत्वन्नोअग्ने० इदमग्नीव० ॥ ॐ अया श्चाग्ने० इदम०अ० ॥ ॐ येतेशतं० इदंव०स०वि० ॥ ॐ उदुत्तमम्०॥इ०व०दित्या०॥ ॐ प्रजाप० इंदंप्र० ॥ ॐ अग्नयेस्विष्टकृ०इदम० स्वि० ॥ ततःसंस्रवप्राशनादिप्रणी ताविमोकांतंहोमशेषंसमाप्य ॥ ततःपरिसमूहनादित्र्यायुषकरणांतंसमिदाधानंब्र ह्मचारीकरोति ॥ आचार्यस्योत्तरतउपविश्य ॥ दक्षिणहस्तेनाग्नेः संधुक्षणप्रक्षेपःव क्ष्यमाणमंत्रैःपंचभिः ॥ॐ अग्नेसु० ॥ ॐ यथात्वमग्ने० ॥ ॐ एवंमा ७६०॥ॐ यथात्व म०॥ॐ एवमहंम० ॥ इत्येतैः पंचभिर्मंत्रैःप्रतिमंत्रमिंधनप्रक्षेपः ॥ प्रदक्षिणमग्निंपर्यु क्ष्योत्तिष्ठन्त्समिधआदधाति ॥ ॐ अग्नयेस० ॥ १ ॥ इतिमंत्रेणप्रथमसमिधमादधा ति ॥ अनेनैवमंत्रेणद्वितीयांतथातृतीयाञ्च ॥ उपविश्यपुनः ॥ अग्नेसुश्रवेत्यारभ्यपं

चेंधनप्रक्षेपः ॥ ॥ तूष्णींपाणीप्रतप्यवक्ष्यमाणैः सप्तभिर्मंत्रैः प्रतिमंत्रंमुखविमार्जनम्॥
ॐ तनूपा० तन्वंमे० ॥ ॐ आयुर्दा०स्यायु० ॥ ॐ वर्चोदा०वर्चो० ॥ ॐ अग्नेय
न्मे० ॥ ॐ मेधांमेदेवः॥ ॐ मेधांमेदेवी० ॥ॐ मेधामश्वि० ॥ इत्येतैर्मुखमार्जनम् ॥
अत्रशिष्टाचारः ॥ ॐ अंगानिचम० इतिमंत्रेणप्रतप्तपाणिभ्यांशिरः प्रभृतिपादपर्यं
तानिसर्वाण्यंगान्यालभते ॥ ततोदक्षिणहस्ताग्रेण॥ॐवाक्चमआ०इतिमुखालंभनम् ॥
ॐ प्राणश्च०इतिनासारंध्रेयुग० ॥ ॐचक्षुश्च०चक्षुषीयु० ॥ ॐ श्रोत्रंच०इ०श्रोत्रेच०
इ० श्रोत्रेयु० ॥ ॐयशोबलंच ॥ इतिबाह्वोरुपस्पर्शनम् ॥ ततस्त्र्यायुषाणिकरोति ॥
अनामिकयाभस्मगृहीत्वाभस्मनाललाटेग्रीवायांदक्षिणेंऽसेहृदिच ॥ त्र्यायुषमिति
प्रतिमंत्रम् ॥ ॐ त्र्यायुषंजमदग्नेः० ॥१॥ इतिमंत्रस्यप्रतिपादेन ॥ ततोगोत्रनाम
पूर्वकंवैश्वानरादीनामभिवादनम् ॥ ततआचार्यःपरिश्रितस्योत्तरतोष्टानामुदकुम्भानां

दक्षिणोत्तराणांस्थापनम् ॥ उदकुंभानांपुरस्तात्प्रागग्रकुशास्तरणम् ॥ तेषुस्नानकर्ता तिष्ठेदुदङ्मुखः ॥ ॐ येप्स्वंतरग्नयः प्रविष्टागोह्यउपगोह्योमयूखोमनोहास्खलुविरुजस्तनुदूषुरिंद्रियहातान्विजहामियोरोचनस्तमिहगृह्णामि ॥ इत्यनेनमंत्रेणैकस्मादुदकुंभादुदकंगृहीत्वातेनोदकेनाभिषिंचेतिस्नानकर्तात्मानम् ॥ ॐ तेनमामभिषिञ्चामि श्रियैयशसेब्रह्मणेब्रह्मवर्चसाय ॥ १ ॥ इतिमंत्रेणाभिषिञ्चति ॥ पुनःयेप्स्वंतरग्नयइति मंत्रेणैवद्वितीयोदकुंभादुदकमादाय ॥ ॐ येनश्रियमकृणुतांयेनावमृशतꣳ सुरान् ॥ येनाक्षावभ्यषिंचतांयद्वांतदश्विनायशः ॥ १ ॥ इतिमंत्रेणाभिषिंचति ॥ पुनःयेप्स्वं तरग्नयइत्यनेनतृतीयोदकुंभादुदकमादाय ॥ ॐ आपोहिष्ठा० ॥ १ ॥ इतिमंत्रेणाभिषिंचति ॥ पुनःयेप्स्वंतरग्नयइत्यनेनचतुर्थोदकुंभादुदकमादाय ॥ योवः शिव० ॥ ॥ १ ॥ इतिमंत्रेणाभिषिंचति ॥ पुनःयेप्स्वंतरग्नय० ॥ १ ॥ इतिमंत्रेणपंचमोदकुं

भादुदकमादाय ॥ ॐ तस्माऽअरंग० ॥१॥ इतिमंत्रेणाभि०॥पुनःयेप्स्वंतरग्नयइत्यनेन
मंत्रेणषष्ठसप्तमाष्टमोदकुंभेभ्यःप्रत्येकमुदकमादाय तूष्णींवारत्रयमभिषिंचतिस्ना
नकर्तात्मानम् ॥ ततउदुत्तममितिमंत्रेणमेखलांशिरोमार्गेणनिःसार्यभूमौनिधाय ॥
तथैवाजिनंचोत्तार्य ॥ दंडत्यागंकृत्वा तम्रुदगग्रंभूमौनिधाय ॥ अन्यद्वासस्तू
ष्णींपरिधायादित्यमुपतिष्ठतेब्रह्मचारी ॥ ॐ उद्यन्भ्राजभृष्णुरिंद्रोमरुद्भिरस्तात्प्रात
र्यावभिरस्तादशसनिरसिदशसर्निमाकुर्वांविदन्मागमयोद्यन्भ्राजभृष्णुरिंद्रो मरुद्भि
रस्ताद्दिवायावभिरस्ताच्छतसनिरसि शतसनिंमाकुर्वांविदन्मागमयोद्यन्भ्राजभृष्णु
रिंद्रोमरुद्भिरस्तात्सायंयावभिरस्तात्सहस्रसनिरसिसहस्रसनिंमाकुर्वांविदन्मागमय ॥
॥ १ ॥ इत्यादित्योपस्थानमंत्रः ॥ ततोदधिप्राशनंतिलप्राशनंवातूष्णीम् ॥ जटालो
मनखानांनिकृंतनम् ॥ स्नानम् ॥ औदुंबरकाष्ठेनदंतधावनम् ॥ ॐअन्नाद्यायव्यूहध्वठं

संं० सोमोराजायमागमत् ॥ समेमुखंप्रमार्क्षंतेयशसाचभगेनच ॥ १ ॥ इतिमंत्रेणदंता भा०
॥१९५॥ न्धावयेत् ॥ ततःसुगंधिद्रव्येणोद्वर्तनम् ॥ उष्णोदकेनस्नानम् ॥ अंगप्रोञ्छनम् ॥ तत
श्चन्दनाद्यनुलेपनंमध्यमानामिकाभ्यांगृहीत्वामुखनासिकयोरालंभनम् ॥ ॐ प्राणा
पानौमेतर्पयचक्षुर्म्मेतर्प्पयश्रोत्रम्मेतर्प्पय ॥ १ ॥ इतिमंत्रेणालंभनम् ॥ ततःपाण्योर
वनेजनंकृत्वातदुदकमादायापसव्यंकृत्वादक्षिणाभिमुखोभूत्वा तदुदकंदक्षिणस्यांदि
शिनिषिंचेत् ॥ ॐ पितरःशुन्धन्ताम् ॥ इत्यनेनमंत्रेण ॥ ततोयज्ञोपवीतीभूत्वा ॥
उदकोपस्पर्शनम् ॥ ततश्चंदनादिनात्मानमनुलिप्यजपेत् ॥ ॐ सुचक्षाअहमक्षीभ्यां

---

१ चंदनेनमुखनासिकेचानुलिंपयतीतिगदाधरः सर्वशरीरोद्वर्त्तनंकार्यमितिहरिहरः ॥ २ अत्रपा ॥१९५॥
णिभ्यांचन्दनंग्राह्यंपाण्योरवनेजनंनिषिंचेदितिवक्ष्यमाणत्वाद्गदाधरेण ॥

म्भूयासꣳसुवर्चामुखेन ॥ सुश्रुत्कर्णाभ्याम्भूयासम् ॥ १ ॥ इत्यनेनमंत्रेणानुलिप्य ॥
सकृद्धौताहतवासःपरिधानम् ॥ ॐ परिधास्यैयशोधास्यैदीर्घायुत्वायजरदष्टिरस्मि ॥
शतंचजीवामिशरदःपुरूचीरायस्पोषमभिसँव्ययिष्ये ॥ १ ॥ इत्यनेनमंत्रेणवा
सःपरिधाय ॥ अथयज्ञोपवीतधारणम् ॥ ॥ ॐ यज्ञोपवीतम्पर० ॥ १ ॥ आचम्य ॥
अथोत्तरीयधारणम् ॥ ॐ यशसामाद्यावापृथिवीयशसेन्द्राबृहस्पती ॥ यशोभग
श्चमाविदद्यशोमाप्रतिपद्यताम् ॥ इतिमंत्रेणात्मानमाच्छादयीत ॥ एकंचेद्वासोभव
तितदातस्यैवपरिधानीयवाससउत्तरार्धमुत्तरीयंकुर्यात् ॥ ॐ याऽआहरज्जमदग्निः
श्रद्धायैकामायेन्द्रियाय ॥ ताऽअहम्प्रतिगृह्णामियशसाचभगेनच ॥ १ ॥ इतिमंत्रे

---

१ धारयेद्वैणवीं यष्टिं सोदकं च कमंडलुम्॥यज्ञोपवीतद्वंद्वं च शुभेरुक्मेचकुंडलेइतिमनुः॥हरिहरोपि एकं चेत्पूर्वस्योत्तरवर्गेणप्रच्छादयीतेतिगदाधरादयः ॥

 णपुष्पमालाग्रहणम् ॥ ततस्तांपुष्पमालांशिरसिबध्नीयात् ॥ ॐ यद्यशोप्सरसामिन्द्र 
 श्चकारविपुलंपृथु ॥ तेनसङ्ग्रथिताःसुमनसऽआबध्नामियशोमयि ॥ १ ॥ इत्यनेनपु
ष्पमालाबंधनम् ॥ उष्णीषेणशिरोवेष्टयते ॥ ॐ युवासुवासाःपरिवीतऽआगात्सऽउश्रे
यान्भवतिजायमानः ॥ तन्धीरासःकवयऽउन्नयन्तिस्वाध्योमनसादेवयन्तः ॥ इ
त्यनेनमंत्रेणोष्णीषम् ॥ ॐ अलङ्करणमसिभूयोलङ्करणम्भूयात् ॥ इत्यनेनमंत्रेणक
र्णवेष्टकौप्रतिमुञ्चते ॥ प्रथमंदक्षिणकर्णेततोऽनेनैवमंत्रेणवामकर्णे ॥ ॐ वृत्रस्यां
सिकुनीकंश्चक्षुर्दाअंसिचक्षुर्मेंदेहि ॥ १ ॥ इत्यनेनमंत्रेणाक्षिणीकज्जलमंक्ते ॥ प्र
थमंदक्षिणंततोनेनैवमंत्रेणवामम् ॥ सौवीरांजनमितिहरिहरः ॥ अत्रचसव्यंनेत्रमं 
क्काततोदक्षिणांजनमंत्रावृत्त्यासव्यंवाअग्रेमानुषेतिमंत्रलिंगादयंगदाधराशयः ॥

प्रथमंदक्षिणंततोवाममितिहरिहराशयः ॥ मंत्रेणोपानहौप्रतिमुच्यंतेपादयोर्युगपत् ॥
ॐ विश्वाभ्योमानाष्ट्राभ्यस्पारिपाहिसर्वतः ॥ १ ॥ इतिमंत्रेणवैणवंदंडमादत्ते ॥
मेखलोन्मोचनादिदंडदानांतंस्नानकर्ताकर्मकरोतिनाचार्यः ॥ दंतप्रक्षालनादीनि
नित्यमपिमंत्रवद्भवंति ॥ वासश्छत्रोपानहांचनवानामुपादानेमंत्रोभवति ॥ नतु
नित्यधारणे ॥ ततआचार्यःस्नातस्यनियमान्वदेत् ॥ शूद्रादिस्पर्शनंनकर्तव्यम् ॥
इच्छयाशूद्रोपिअस्नातकोनियमेष्वधिक्रियते ॥ नृत्यगीतवादित्राणिनप्रतिगच्छे
त् ॥ इच्छयापरैःक्रियमाणंसद्गीतंश्रोतुंगच्छेत् ॥ रागसहितंसद्गीतम् ॥ स्वयंचनकु
र्यात ॥ क्षेमेसतिरात्रौग्रामांतरंनगच्छेत् ॥ अक्षेमेतुकामंगच्छेत् ॥ क्षेमेसतिनधा
वेतइतिनशीघ्रंगच्छेत् ॥ उदपानावेक्षणइतिकूपमध्येअवलोकनंनकर्तव्यम् ॥ वृक्षा
रोहणंनकर्तव्यम् ॥ फलप्रपतनमितिफलत्रोटनंनकर्तव्यम् ॥ संधिसर्पणइतिसंध्यासम

येगमनंवाअपमार्गेगमनंनकर्तव्यम्॥ विवृतइतिनग्नस्नानंनकर्तव्यम् ॥ विषमलंघन
मितिपर्वतगर्तादेर्लंघनंनकर्तव्यम् ॥ शुक्लवदनामितिलज्जाकरंदुःखकरममंगलभाषणंन
कर्तव्यम् ॥ संध्यादित्यप्रेक्षणमितिसंध्यासमयेउपरक्तसूर्यबिंबावलोकनंनकर्तव्यम् ॥
भैक्षणानिइतिसवर्णविनासिद्धभिक्षाचर्यानकर्तव्या ॥ अप्स्वात्मानंनावेक्षेतइतिजल
मध्येस्वमुखंनपश्येत् ॥ अजातलोम्नींमितिअनुत्पन्नलोम्नींस्त्रीम ॥ पुंसीमितिपुरुषा
कृतिंस्त्रीम् ॥ षंढंचइतिनपुंसकंप्रसिद्धम् ॥ एतान्नोपहसेत् इतिअभिगमनंनकारये
त् ॥ गर्भिणींविजन्याइतिब्रूयात् ॥ सकुलमितिनकुलंब्रूयात्॥भगालमितिकपालम् ॥
मणिधनुरितींद्रधनुर्ब्रूयात ॥ गांधयंतींपरस्मैनाचक्षीतइतिपरस्यगांवत्संपाययं
तींतांपरस्मैस्वामिनेवानकथयेत् ॥ उर्वरायामनंतर्हितायांभूमौइतिसस्यवत्यांवाकु
शादियज्ञियतृणवत्यांभूमौमूत्रपुरीषोत्सर्गंनकुर्यात् ॥ उत्सर्पैस्तिष्ठन्नइतितथैवधाव

मानः संन्नुत्तिष्ठन्त्सन्मूत्रपुरीषोत्सर्गंनकुर्यात् ॥ स्वयंप्रशीर्णेनकाष्ठेनगुदंप्रमृजीतइ
तिआत्मनः प्रयत्नंविनापतितेनयज्ञियरहिताकंटककाष्ठेनगुदंप्रोञ्छेत् ॥ यथा । तृणाद्यं
तर्हितभूमौशिरः प्रावारैरावेष्ट्ययज्ञोपवीतंनिवीतंकृत्वाअलंवितं कर्णेकृत्वादिवोदङ्मु
खोरात्रौदक्षिणाभिमुखउपविश्यमौनीभूत्वामूत्रपुरीषोत्सर्गंकुर्यात् ॥ यज्ञोपवीतस्या
निवीतत्वंविनैवकर्णेधारणमनाचारः ॥ मूत्रोत्सर्गेशुद्धमृदंलिंगेसकृत्त्रिवारंवामकरेद्वि
वारमुभयोः करयोर्दत्त्वातावद्वारंजलेनक्षालयेत् ॥ पुरीषेतुशुद्धमृदमेकांलिंगेगुदेतिस्रः
वामकरेदशउभयोः करयोः सप्तपंचत्रिर्वापिपादयोर्दत्त्वातावतैवजलेनक्षालयेत् ॥ मूत्रे
चत्वारिगंडूषाणिपुरीषेद्वादशगंडूषोद्गिरणमिति ॥ विकृतंवासोनाच्छादयीतइतिनी
ल्यादिरंजितवस्त्रंनपरिदधीत ॥ दृढव्रतइतिस्थिरसमारब्धव्रतोभवेत् ॥ वधत्रः स्या
त्सर्वतऽआत्मानंगोपायेत्सर्वेषांमित्रमिवेतिवधात ॥ धातात्रायकः स्वेषांपरेषांचमित्र

मिवसखेवज्ञायेत ॥ स्नातकस्यसतोऽहोरात्रत्रयंव्रतचर्योच्यते ॥ अमांसाशीभवति
अमृन्मयेनपात्रेणउदकादिकंपिबति ॥ ऋतुमतीस्त्रीशूद्रभाषणंनकरोति ॥ शवंप्रसि
द्धम् ॥ कृष्णशकुनिरितिकाकः ॥ शुनामितिश्वाकुक्कुरः ॥ एतेषांदर्शनंचनकुर्यात् ॥
शावोमृतकस्तस्मिन्नजातेसति क्रीत्वालब्ध्वाज्ञातिभिर्यद्दद्यतेतच्छावान्नंनाद्यात् नगृ
ह्णीयान्नभक्षयेदित्यर्थः ॥ शूद्रस्यअवरवर्णस्यनापितादेरपिअन्नंतच्छूद्रान्नंनाद्यात
नगृह्णीयादित्यर्थः ॥ सूतकेप्रसवाशौचेसतिज्ञातीनामन्नंतत्सूतकान्नंनाद्यान्नभक्षये
दित्यर्थः मूत्रपुरीषष्ठीवनंचातपेनकुर्यादिति ॥ मूत्रपुरीषेप्रसिद्धे ॥ ष्ठीवनंमुखाल्लालादि
आतपेचनकुर्यात ॥ सूर्याच्चात्मानंनांतर्दधीतेतिच्छत्रादिनामूत्रोत्सर्गंनकुर्यात् ॥ तप्त
नोदकार्थान्कुर्वीतइति ॥ तप्तेनोदकेनशौचाचमनादिकाःक्रियाःकार्याः ॥ अवज्योत्य

दीपादिनारात्रौभोजनंनकर्तव्यम् ॥ सत्यवदनमेववाकर्तव्यम् ॥ यथा॥रागंद्वेषमहंका रंत्यक्त्वाचत्वारिअभ्यसेत् ॥ क्षमादयाशांतिसत्यंसर्वेज्ञानीसमोक्षभागिति ॥ नाध स्तनाअमांसादयोयमनियमाःकर्तव्याः ॥ यदिप्रवर्ग्यवान्महावीरःसोमयागार्थंस्वी कृतदीक्षः दीक्षितोभवति तदामूत्रपुरीषष्ठीवनादिअवर्ज्योत्यरात्रौभोजनांतानिनकु र्यादितियमनियमाअनुष्ठेयाः ॥ यथाशक्तिब्राह्मणान्भोजयिष्ये ॥ आचार्यादिपू जनंतेभ्यश्चदक्षिणांदत्त्वातैराशिषोगृहीत्वा मातॄणांविसर्जनंकृत्वाकर्मेश्वरार्पणंकुर्या त् ॥ ॥ इतिसंस्कारभास्करेसमावर्तनप्रयोगः ॥ अथातुरदशायांसमावर्तनविधिः ॥ आतुरदशायांयथोक्तसमावर्तनाभावेसंक्षेपतस्तत्कार्यम् ॥ तत्रप्रयोगसंकल्पंकृत्वाब्र ह्मचारिलिंगानिमेखलादीनि त्यक्त्वातीर्थेस्नात्वावासःपरिधानाचमनतिलकधारणा निकृत्वाग्निंप्रतिष्ठाप्यप्रजापतिंमनसाध्यात्वातूष्णींसमिधमादध्यात् ॥ अन्यदपि

अविरोधितूष्णीं कर्तव्यमितिसमावर्तनानुकल्पइतिधर्मसिंधुः ॥ ॥ इति संस्कारभा
स्करेसमावर्तनेआतुरदशायांसमावर्तनविधिः समाप्तः ॥ ॥ ॥

---

अथक्रमप्राप्तोविवाहः ॥ तत्रअनाश्रमिनिर्णयःप्रायश्चित्तंच ॥ यथा ॥ अनाश्रमी
नतिष्ठेतदिनमेकमपिद्विजः ॥ आश्रमेणविनातिष्ठन्प्रायश्चित्तीभवेद्विजइतिदक्षस्मृ
तेः ॥ एतत्प्रायश्चित्तनिष्कृतिर्मिताक्षरायाम् ॥ अनाश्रमिप्रायश्चित्तंयथा ॥ अनाश्र
मीसंवत्सरंप्राजापत्यकृच्छ्रंचरित्वाश्रममुपेयात् ॥ द्वितीयेऽतिकृच्छ्रंतृतीयेकृच्छ्राति
कृच्छ्रमतऊर्ध्वंचांद्रायणमितिहारीतोक्तेः ॥ धेनोरभावेनिष्कःस्यात्तदर्धं पादमेववा ॥
गुंजाअशीतिःकर्षस्तुकर्षाश्चत्वारिनिष्ककः ॥ सुवर्णंरजतंवापिदद्याच्छक्त्यनुसारत

इति ॥ अशीतिगुंजात्मकः कर्षः चत्वारः कर्षाएकोनिष्कश्चेति ॥ ॥ प्राजापत्यकृ
च्छ्रंद्वादशदिनसाध्यंतद्यथा ॥ प्रथमत्रिदिनेप्रातःएकभुक्तंषड्विंशतिग्रासपरिमितंहवि
ष्यान्नंभोक्तव्यम् ॥ द्वितीयेत्रिदिनेनक्तंद्वाविंशतिग्रासपरिमितंभोक्तव्यम् ॥ तृतीयेत्रि
दिनेअयाचितंचतुर्विंशतिग्रासपरिमितंमध्याह्नेभोक्तव्यम् ॥ अत्रसर्वत्रहविष्यान्नंभो
क्तव्यम् ॥ अयाचितंयाञ्चारहितम् ॥ चतुर्थेत्रिदिनेअनशनमितिप्राजापत्यकृच्छ्रम् ॥ ए
तत्प्रत्याम्नायेगौरेका ॥ ॥ अतिकृच्छ्रंयथा ॥ प्रथमेत्रिदिनेएकभुक्तंपाणिपूरितंहवि
ष्यान्नंभोक्तव्यम् ॥ द्वितीयेत्रिदिनेअयाचितंपाणिपूरितंभोक्तव्यम् ॥ तृतीयेत्रिदिनेउप
वासइतिनवदिनसाध्यमतिकृच्छ्रम् ॥ एतत्प्रत्याम्नायेगोद्वयम् ॥ ॥ कृच्छ्रातिकृच्छ्रं
यथा ॥ एकग्रासपर्याप्तस्यप्राणधारणपर्याप्तस्यवादुग्धस्यएकविंशतिदिनेषुभक्षणेकृ
च्छ्रातिकृच्छ्रम् ॥ एतत्प्रत्याम्नायेगोचतुष्टयंत्रयंवा ॥ ॥ ॥ चांद्रायणंयथा हविष्या

न्नस्यमयूरांडप्रमाणमेकग्रासमेवं शुक्लप्रतिपदमारभ्य पूर्णिमांतमेकैकवर्धितग्रासंकृ
ष्णप्रतिपदमारभ्यअमांतमेकैकग्रासंन्यूनंचेतियवमध्यचांद्रायणव्रतम् ॥ पक्षेति
थिवृद्ध्याषोडशग्रासाः ॥ क्षयेचतुर्दशग्रासाश्चेति ॥ ग्रासान्नंगायत्र्याभिमंत्रयेदि
तिमहार्णवे ॥ एतत्प्रत्याम्नायेष्टौपंचचतस्रोवागावइति ॥ प्रथमाब्देप्राजापत्यंकृच्छ्रं
व्रतेसंकल्पः ॥ देशकालकीर्तनांतेअमुकशर्मणःममब्रह्मचर्यव्रतविसर्गदिनमारभ्य
एकाब्दपर्यंतं वातन्न्यूनदिनपर्यंतमनाश्रमस्थितिजन्यदोषपरिहारार्थं प्राजापत्यकृ
च्छ्रव्रतप्रत्याम्नायैकगोनिष्क्रयीभूतंयथाशक्तिरजतमुद्राद्रव्यदानमहमाचरिष्ये ॥ इ
तिसंकल्पांतेब्राह्मणंसंपूज्यपूर्वंकल्पितद्रव्यंगृहीत्वा ॥ इमांप्राजापत्यकृच्छ्रप्रत्या
म्नायैकगोनिष्क्रयीभूतरजतद्रव्यमुद्राममुकशर्मणेब्राह्मणायतुभ्यमहंसंप्रददे ॥ द्वि
तीयाब्देअतिकृच्छ्रव्रतेसंकल्पः ॥ देश० ममब्रह्मचर्यव्रतमारभ्यअब्दद्वयपर्यंतम

नाश्रमास्थितिजन्यदोषपरिहारार्थमतिकृच्छ्रव्रतप्रत्याम्नायगोद्वयनिष्क्रयीभूतं यथा
शक्तिरजतमुद्राद्रव्यदानमहमाचरिष्ये ॥ इतिसंकल्पांतेब्राह्मणंसंपूज्यपूर्वकल्पि
तंद्रव्यंगृहीत्वा ॥ इदमतिकृच्छ्रप्रत्याम्नायगोद्वयनिष्क्रयीभूतंरजतमुद्राद्रव्यममु०
तुभ्यमहंसंप्रददे ॥ तृतीयाब्देकृच्छ्रातिकृच्छ्रव्रतेसंकल्पः ॥ देश० ममब्रह्मचर्यव्रतमा
रभ्य अब्दत्रयपर्यंतमनाश्रमस्थितिजन्यदोषपरिहारार्थं कृच्छ्रातिकृच्छ्रव्रतप्रत्या
म्नायगोचतुष्टयनिष्क्रयीभूतंयथाशक्तिरजतमुद्राद्रव्यदानमहमाचरिष्ये ॥ इतिसं
कल्पांतेब्राह्मणंसंपूज्य ॥ कृच्छ्रातिकृच्छ्रप्रत्याम्नायगोचतुष्टयनिष्क्रयीभूतांरजतद्र
व्यमुद्राममु०तुभ्यमहंसंप्रददे ॥ तृतीयाब्दोर्ध्वंकस्मिंश्चिद्वर्षेचांद्रायणव्रतेसंकल्पः ॥
देश० मम ब्रह्मचर्यव्रतमारभ्य अद्यदिनपर्यंतमनाश्रमस्थितिजन्यदोष० चांद्राय
णव्रतं तत्प्रत्याम्नायपंचगोनिष्क्रयीभूतयथाशक्तिरजतद्रव्यमुद्रादानेनाह० ॥ इति

संकल्पांते ब्राह्मणंसंपूज्यपूर्वकल्पितद्रव्यंगृ० ॥ इमांचान्द्रायणव्रतप्रत्याम्नायपंच
गोनिष्क्रयीभूतरजतद्रव्यमुद्रामसु०तुभ्यमहंसंप्रददेइतिअनाश्रमित्वप्रायश्चित्तम् ॥
विवाहोपयोगिकन्यादिप्रकारोनिर्णयश्च ॥ गुरवेतुवरंदत्त्वास्नायीततदनुज्ञया ॥ वेद
व्रतानिवापारंनीत्वाह्युभयमेववा ॥ अविप्लुतब्रह्मचर्योलक्षण्यांस्त्रियमुद्वहेत् ॥ अनन्य
पूर्विकांकांतामसपिंडांयवीयसीम् ॥ अरोगिणींभ्रातृमतीमसमानार्षगोत्रजामिति
याज्ञवल्क्योक्तेः ॥ त्रिविधोपिवेदव्रतोभयस्नातकोऽविलंबेनलक्षणादिविशिष्टांस्त्रियं
परीक्षितामुद्वहेत् ॥ अनन्यपूर्विकामितिअन्येषांवाग्दानादिनानपूर्वंदत्ताम् ॥ असपिं
डांसापिंड्यसंबंधरहिताम् ॥ यवीयसींन्यूनवयस्काम् ॥ असमानार्षगोत्रजांस्वसमान
गोत्रप्रवररहितामिति ॥ अत्रापिकुलमग्रेपरीक्षेतेतिगृह्यादिवचनादादौसदाचारादि
गुणवद्धीनक्रियत्वादिदोषरहितंकुलंपरीक्ष्यतज्जोद्वाह्या ॥ तदनुलक्षणान्यपिपरीक्ष

णीयानि ॥ लक्षणानिचशुभाशुभसूचकानि ॥ तनुलोमकेशदशनादीनिप्रत्यक्षावग
म्यानिबाह्यानि ॥ तथाचमनुः ॥ अव्यंगांगींसौम्यनाम्नींहंसवारणगामिनीम् ॥ तनु
लोमकेशदशनांमृद्वंगीमुद्वहेत्स्त्रियमिति ॥ ॥ कात्यायनः ॥ अव्यंगांदोषरहितांसु
रूपांवयपूर्विकाम्॥ सवर्णसुकुलोत्पन्नांशुभलक्षणसंयुताम् ॥ प्रतिगृह्णीततांकन्यांकुल
संतानवर्धिनीमिति ॥ तथाचज्योतिर्निबंधे ॥ मृद्वंगीगूढगुल्फासमकुचनयनावृत्तना
भीरुवक्राकृष्णभ्रूनेत्रकेशास्थिरतरसुनखादीर्घनेत्राविलोमा ॥ मृद्वाणीस्वल्पभाला
लघुललितगमापाणिपादोष्ठरक्ता साकन्योद्वाहिताचेत्सुतधनविपुलान्नायुरारोग्यदा
स्यादिति ॥ अथकन्यादोषाः ॥ निर्गुणाशुष्कसंभाषीक्रोधयुक्तासरोगिणी ॥ विषयो
गावंध्ययोगाकुलविध्वंसयोगका ॥ दरिद्रजारयोगाचहीनाचरणसंयुता ॥ एतद्दोषदशै
र्युक्तातांकन्यांनप्रतिग्रहेदिति ॥ अथवरगुणाः ॥ तत्रबुद्धिमतेकन्यांप्रयच्छेदितिबह्व

 



चगृह्ये॥तथाचज्योतिर्निबंधे ॥ विद्यावंतंसुरूपंसुभयकुलशुचिंज्ञातशीलंदृढांगंनिर्व्या
धिंशांतियुक्तंद्विजसुरप्रणतौकिंचिदाढ्यंप्रयुक्तम् ॥ सम्यक्पृष्टोच्चपृच्छंप्रचुरतरधियंमू
त्रधारंसुलिंगमेतद्रूपंवरिष्ठंवरमिहवरयेत्कन्यकायाःसुवेशम् ॥१॥ यमः ॥ कुलंचशीलं
चवयश्चरूपंविद्यांचवित्तंचसनाथतांच ॥ एतान्गुणान्सप्तपरीक्ष्यदेयाकन्याबुधैःशेषम
चिंतनीयम् ॥ १ ॥ अथवरदोषाः ॥ मूकोंधोबधिरःकुब्जःस्तब्धःपंगुर्नपुंसकः ॥ कुष्ठी
रोगीह्यपस्मारीदशदोषाःप्रकीर्तिताः ॥ अन्यच्च ॥ आचारहीनोमूर्खश्चकुरूपश्चौ
रजारकः ॥ पाखंडीचतथोन्मत्तागूहकःकुलदूषकः ॥ व्रतकर्मरतश्चैवदशदोषाःप्रकी
र्तिताः ॥ एतद्दोषप्रयुक्तायेतेषुकन्यानदीयते ॥ अन्यच्च ॥ षंढमूकांधबधिरका
णकुब्जाश्चवामनः ॥ अश्रोत्रीपंगवश्चैवतेषुकन्यानदीयते ॥ अन्यच्च ॥ श्वित्रीकु 
ष्ठीह्यपस्मारीकुनखीश्यावदंतकः ॥ व्रणयुक्तोव्याधियुक्तस्तेषुकन्यानदीयतेइति ॥

पतितः प्रागुक्तः ॥ असपिंडामितिसापिंड्यंवर्जनीयम् ॥ अथसापिंड्यनिर्णयः ॥ व
ध्वावरस्यवातातः कूटस्थाद्यदिसप्तमः ॥ पंचमीचेत्तयोर्मातातत्सापिंड्यंनिवर्ततेइ
ति ॥ कूटस्थइतिमूलपुरुषमारभ्यात्रगणना ॥ कूटस्थोमूलपुरुषोयतः संतानभेदतः ॥
संस्कारकौस्तुभे ॥ दशभिः पुरुषैः ख्याताच्छ्रोत्रियाणांमहाकुलात ॥ उद्वहेत्सप्तमा
दूर्ध्वंतदभावेतुसप्तमाम् ॥ पंचमीं तदभावेतुपितृपक्षेस्वयंविधिरिति ॥ सप्तमींचतथा
षष्ठींपंचमींचतथैवच ॥ एवमुद्वाहयेत्कन्यांनदोषः शाकटायनः ॥ चतुर्थींवातृती
यांवापक्षयोरुभयोरपि ॥ विवाहयेन्मनुः प्राहपाराशर्योंगिरायमः ॥ १ ॥ चतुर्थी
मुद्वहेत्कन्यांचतुर्थः पंचमोवरः ॥ पराशरमतेषष्ठींपंचमोनतुपंचमीम् ॥ इतिसापिंड्य
दीपिकायाम् ॥ पंचमवरपंचमीकन्योद्वाहेव्यवस्थोक्ताविश्वरूपनिबंधे ॥ द्वौपुत्रौपूर्व
जात्स्यातांतयोरपिचसंततिः ॥ पंचमःपंचमींकन्यांनतत्रवरयेद्द्विजः ॥ १ ॥ द्वेक

न्येपूर्वजातस्यातांसंततिः स्यात्तयोरपि ॥ पंचमः पंचमींकन्यांवरस्तत्र समुद्वहेत ॥
॥ २ ॥ कन्यापुत्रौतुसंभूतौपूर्वजात्संततिस्तयोः ॥ यदिस्याद्वरयेत्तत्रपंचमः पंचमी
मपीति ॥ ३ ॥ असपिंडाचयामातुरसपिंडाचयापितुः ॥ साप्रशस्ताद्विजातीनांदा
रकर्मणिमैथुने ॥ यत्तुदोषानुरूपेणकुलमार्गेणचोद्वहेत् ॥ नित्यंसंव्यवहार्यः स्याद्वे
दोक्तैस्तत्प्रतीयंतेइति ॥ तच्चयथाशास्त्रोक्तप्रकारेणयथादेशाचारकुलाचारानुसारेण
कुलदीर्घसंकोचितविचारतोव्यवस्थाज्ञेया ॥ विस्तरस्तुग्रंथांतरेज्ञेयः ॥ मातुलक
न्यानिषेधस्तु ॥ यथा ॥ मातुलस्यसुतांविप्रोदक्षिणेतांसमुद्वहेत ॥ वर्जनीयाप्रयत्ने
नसर्वैर्वाजसनेयिभिरिति ॥ तत्रगोत्रप्रवरविचारेणोद्वहेत् ॥ गोत्रप्रवरैक्यमहद्दोषः ॥
अथदत्तकसापिंड्यनिर्णयः ॥ तद्विवरणंयथा ॥ गौतमः ॥ ऊर्ध्वंसप्तमात्पितृबंधु
भ्योबीजिनश्च ॥ मातृबंधुभ्यः पंचमादिति ॥ उक्तंच ॥ वसुदेवांगजाताचकौंतेयस्य

विरुद्धयत इतिवार्तिकव्याख्यावसरेन्यायसुधाकृतादत्तकविषयमेतदित्यंगीकृत्य कुंत्याजनककुलेसाप्तपूरुषंसापिंड्यमितिव्याख्यातं तद्विषयत्वेनैवसापिंड्यमीमांसायाम् ॥ अतःकुलद्वयेपिसाप्तपूरुषंसापिंड्यंप्रतीयते ॥ पैठीनसस्तु ॥ त्रीन्मातृतः पंच पितृतःसप्तपुरुषानतीत्योद्वहेदित्याह ॥ व्याख्यातमेतदपरार्केदत्तकादिपुत्रान्नपितृपक्षतोनिवृत्तपिंडगोत्रार्षेयान्प्रत्येतदुच्यतेपंचपितृतइति ॥ अतश्चप्रतिग्रहीतृकुलेसाप्तपूरुषं सापिंड्यंप्रतीयते प्रतिग्रहीतृमातृपितृककुलयोस्त्रिपुरुषसापिंड्यमितिप्राञ्चः ॥ अथात्रव्यवस्थोक्तासापिंड्यदीपिकायाम् ॥ दत्तक्रीतादीनांजनकगोत्रेणोपनयनेकृतेजनककुलेसाप्तपूरुषंसापिंड्यम् ॥ प्रतिग्रहीतृमातृपितृकुलेनिर्वाप्यपिंडलक्षणंत्रिपूरुषंसापिंड्यम् ॥ प्रतिग्रहीतृगोत्रेउपनयनमात्रेकृतेपंचपूरुषम् ॥ जातकर्माद्युपनयनांतेकृतेसाप्तपूरुषमितिपठीनसिवचःसाफल्यायव्याख्येयम् ॥ नकेवलंदत्तकस्य

परिणयनार्थमेवैषसापिंडयोपन्यासः ॥ किंतुतत्संततेस्तत्पित्रादिकुलोत्पन्नैःसहसंबंध
संभवनिर्णयार्थमपि ॥ अन्यथापार्थसुभद्रयोरदत्तकयोःसंबन्धासंभवशंकायार्जुन
सुभद्रयोरदत्तकयोः संबन्धासंभवशंकाया आचार्यकर्तृकोपन्यासस्यतदुपपत्त्यैसुधा
यांगौतमीयोपन्यासस्यालग्नकतापत्तेः यादृशदत्तकस्ययथासापिंडयमुक्तंतत्संतताव
पितथैवतद्बोध्यम् ॥ अतएवयन्मदनपारिजातोक्तम्॥दत्तपुत्र्याःसुतस्यमातुःप्रतिग्रहीतृ
मातुःकुलेत्रिपूरुषंसापिंडयम् ॥ दत्तकपुत्रसुतस्यस्वजनककुलेपंचपूरुषमितितदपिपूर्वो
क्तरीत्यादत्तकविशेषसंततिविषयत्वेनव्याख्येयम् ॥ मुख्यावयवानुवृत्त्यभावेपिद्वि
तीयसापिंडयप्रकारमाह सुमंतुः ॥ पितृपत्न्यःसर्वामातरस्तद्भ्रातरोमातुलास्तद्भगि
न्योमातुःस्वसारस्तद्दुहितरश्चभगिन्यस्तदपत्यानिभागिनेयानि अन्यथासंकरकारि ॥२०४॥
णःस्युरितिमदनपारिजातेमाधवीयेचतद्भागिन्यइतिपठितेअन्यग्रंथेषुतुपठयंते ॥ अत्र

यावद्वचनंवाचनिकमितिन्यायेनपरिणीतेष्वेवातिदेशिकंसापिंडयं नतुपंचमसप्तमादि
पर्यंतमितिभट्टचरणप्रभृतयोबहवइति ॥ यवीयसींस्वापेक्षयावयसावपुषाचन्यूनाम् ॥
अरोगिणीमचिकित्स्यराजयक्ष्मादिरोगरहिताम् ॥ भ्रातृमतीमितिपुत्रिकाकरणशं
कानिवृत्त्यर्थम् ॥ यत्रतुपुत्रिकाकरणाभावनिश्चयस्तत्रतामभ्रातृकामप्युद्वहेत् ॥ इति
दत्तकसापिंडयनिर्णयः ॥ अथगोत्रप्रवरनिर्णयः ॥ विश्वामित्रोजमदग्निर्भरद्वाजो
थगौतमः ॥ वसिष्ठोत्रिः कश्यपश्चइत्येतेसप्तऋषयः ॥ सप्तानामृषीणामगस्त्याष्ट
मानांयदपत्यंतद्गोत्रमित्याचक्षतइति ॥ असमानार्षगोत्रजामिति ॥ ऋषेरिदमार्षंगो
त्रप्रवर्तकस्यमुनेर्व्यावर्तकःप्रवरइत्यर्थः ॥ गोत्रंवंशपरंपरयाप्रसिद्धम् ॥ स्वसमानेआर्षे
गोत्रेयस्यतस्माज्जातायानभवतितांयास्कमाधूलमौकानांभिन्नगोत्राणामपि भार्गववै
तहव्यसावेतसेतिप्रवरैक्यमस्तितत्रविवाहोमाभूदितिअसमानार्षजामित्युक्तम् ॥ आं

गिरसांबरीषयौवनाश्वेतिमांधात्रांबरीषयौवनाश्वेति ॥ आंगिरसमांधातृप्रवरभेदे
पियौवनाश्वगोत्रैक्यम् ॥ तादृशविवाहवारणायासमानगोत्रजामित्युक्तम् ॥ तथाचगो
त्रप्रवरौपृथक्पर्युदासेनिमित्तभूतौ ॥ प्रवरैक्येविशेषमाहबौधायनः ॥ पंचानांत्रिषु
सामान्यादविवाहस्त्रिषुद्वयोः ॥ भृग्वंगिरोगणेष्वेवंशेषेष्वेकोपिवारयेदितिविवाहमि
तिशेषः ॥ भृगूणांनविवाहोस्तिचतुर्णामादितोमिथः ॥ श्येतादयस्त्रयस्तेषांविवाहोमि
थइष्यते ॥ षण्णांवैगौतमादीनांविवाहोनेष्यतेमिथः ॥ दीर्घतमाओतथ्यश्चकक्षी
वांश्चैकगोत्रजाः ॥ भरद्वाजाग्निवेश्याश्चशृंगाःशैशिरयःकताः ॥ एतेसमानगोत्राःस्यु
र्गर्गानेकेवदंतिवै ॥ पृषदश्वामुद्गलाविष्णुवृद्धाएकोगस्त्योहारीतःसंस्कृतयाकपिः ॥
यास्कश्चैषांमिथइष्टोविवाहः सर्वैरन्यैर्जामदग्न्यादिभिश्च ॥ यावत्समानगोत्राःस्यु
र्विश्वामित्रोनुवर्तते ॥ तावद्वसिष्ठश्चात्रिश्चकश्यपश्चपृथक्पृथक् ॥ द्व्यार्षेयाणांत्र्या

र्षेयःसन्निपातोऽविवाहस्त्र्यार्षेयाणांपंचार्षेयःसन्निपातोऽविवाहः ॥ एकएवऋषिर्याव
त्प्रवरेष्वनुवर्तते ॥ तावत्समानगोत्रत्वमृतेभृग्वंगिरोगणादित्यसमानप्रवरैर्विवाहः ॥
भरद्वाजाश्वकपयोगर्गारौक्षायणाइति ॥ चत्वारोपिभरद्वाजानोद्वहेयुःपरस्परम् ॥ १ ॥
औतथ्यप्रवरोयेषांगौतमानांभवेदिह ॥ तैःसर्वैरपिनैवेष्टाभरद्वाजस्यसंगतिः ॥ १ ॥
इतिसंक्षिप्तगोत्रप्रवरनिर्णयः ॥ अथदत्तकस्यगोत्रादिनिर्णयः ॥ तत्रयश्चप्रतिग्रही
त्राजातकर्मादिभिश्चूडादिभिर्वासंस्कृतस्तदेकगोत्रः ॥ एवमभिप्रेत्यैवगोत्ररिक्थेज
नयितुर्नभजेदंतिमःसुतइतिशास्त्रमपिप्रवृत्तम् ॥ एतदन्यस्तुप्रतिग्रहीत्रोपनयनमा
त्रसंस्कृतस्तद्बुत्तरतःप्रतिग्रहीतोवादेवरातवद्विगोत्रएवेतिव्यवस्थाप्रागवादि ॥ तथा
प्येषांव्यवस्थाअभिवादनश्राद्धादिगतगोत्रनिर्देशार्था ॥ विवाहेतुदत्तकमात्रेणबी
जिप्रतिग्रहीत्रोःपित्रोर्गोत्रप्रवरवर्जनंकार्यम् ॥ प्रवरमंजर्यादिनिबंधेषुतन्निषेधोक्तेः ॥ इ

तिदत्तकस्यगोत्रप्रवरनिर्णयः ॥ अथप्रत्युद्वाहादिनिषेधोनारदेन ॥ प्रत्युद्वाहोनैवकार्यो
नैकस्मैदुहितृद्वयम् ॥ नचैकजन्ययोःपुंसोरेकजन्येतुकन्यके ॥ नैवंकदाचिदुद्वाहोनै
कदामुंडनद्वयमिति ॥ यत्कुटुंबोत्पन्नाकन्यकास्वकुलआनीयतेतत्कुटुंबेएवस्वकुटुं
बोत्पन्नकन्यकाप्रदानंप्रत्युद्वाहइत्युच्यते ॥ प्रायस्तत्रविरुद्धसंबंधसद्भावात् ॥ तथाच
गृह्यपरिशिष्टे ॥ कन्यांयवीयसीमसपिंडामसगोत्रामविरुद्धसंबंधामुपयच्छेदिति ॥
विरुद्धोलौकिकसम्बंधोयस्याःसातथा ॥ भार्यास्वसुर्दुहितापितृव्यपत्नीस्वसाभ्रातृदु
हितृकन्यादेवरकन्याचेत्यादयः ॥ प्रकृतेतुभ्रातृदुहितृकन्यादेवरकन्याचकन्यैव
व्यवह्रियतइतिकृत्वानस्त्रीपरिणयनम् ॥ लोकविरुद्धसंबंधएवमादौविरुद्धसंबंधेसत्ये
वप्रत्युद्वाहनिषेधोनान्यत्रेतिवेदितव्यम् ॥ आसांप्रत्युद्वाहोनकार्यएव ॥ तथैकस्मै
वरायदुहितृद्वयंनदद्यात् ॥ ज्येष्ठायांजीवत्यांसत्यांकनिष्ठांनदद्यात् ॥ मृतौत

॥२०६॥

स्यैववरस्यकनिष्ठांदद्यात् ॥ अन्यथाविरुद्धसम्बन्धाभावात् ॥ इदमपिप्राग्विरुद्धसंबं
धेसतिवेदितव्यम् ॥ एवंविधउद्वाहः कदाचिन्नकार्यः ॥ तथैकस्मिन्नेवकालेमुंडनद्वयं
नकार्यम् ॥ तथाच ॥ एकजन्येतुकन्येद्वेपुत्रयोर्नैकजन्ययोः ॥ नपुत्रीद्वयमेकस्मैप्रद
द्यात्तुकदाचनेति ॥ इतिप्रत्युद्वाहनिर्णयः ॥ अथसोदरकन्यापुत्रयोर्विवाहयोःसमान
संस्कारत्वेप्येकवर्षेकर्तव्यत्वमनुज्ञातंज्योतिःशास्त्रे ॥ सोदर्ययोः कन्यकयोःसुतयोरे
कवत्सरे ॥ विवाहोनस्मृतइति ॥ अत्रैकवर्षनिषेधेनभिन्नवर्षे कर्तव्यता विधीयते ॥
निषेधस्त्वेकवर्षेपिषण्मासादर्वागेव ॥ तथाचसारसमुच्चये ॥ एकोदरभ्रातृविवाहकृ
त्यंस्वस्रोर्नपाणिग्रहणंविधेयम् ॥ षण्मासमध्येमुनयःसमूचुर्नमुंडनंमंडनतोपिकुर्या
त् ॥ अतएकवर्षनिषेधाद्भिन्नवर्षेतुषण्मासादर्वागपिनैवदोषः ॥ यदितुज्येष्ठमासेय
स्यविवाहादौकृतेकार्त्तिकेमार्गशीर्षे तत्सोदरस्यविवाहादौक्रियमाणेषण्मासाभ्यंतरे

पिचतुर्मासातिक्रमणान्नदोषः ॥ यदुक्तंवाक्यसारे ॥ एकःकर्ताशुभंकुर्यान्नपुत्र्योःपु
त्रयोरपि ॥ षण्मासेवाचतुर्मासेवर्षभेदेतुशोभनमिति ॥ षण्मासमध्येचतुर्मासमध्ये
वापुत्र्योः पुत्रयोरपिशुभंविवाहादिकमेकः कर्तानकुर्यात् ॥ वर्षभेदेतुषण्मासातिक्रमा
भावेपिशुभंस्यादिति ॥ तदुपलक्षणेनात्रप्रवेशनिर्गमादिदोषोनास्तीतिगम्यते ॥ त
थाचज्योतिःसारे ॥ नैकस्मिन्वत्सरेकुर्यात्प्रवेशान्निर्गमंक्वचित् ॥ अतिक्रांतेवत्सरेस्या
त्तथामासचतुष्टयेइतिद्वितीयादिविवाहेपुनरुपनयनादौचसमानसंस्कारत्वाविचारः ॥
जातकर्मसंस्कारत्वाद्वृद्धिश्राद्धादौस्वयमेवकर्तव्यत्वाच्च ॥ तथाचवचनम् ॥ जातकर्मा
दिसंस्कारेपिताकुर्वीतनांदिकम् ॥ समावृत्तौस्वयंकुर्यादाद्येपाणिग्रहेपितेति ॥ पुनरु
पनयनेआश्वलायनः ॥ अथोपेतपूर्वस्यकृताकृतंकेशवपनंमेधाजननंचानिरुक्तंपरि
दानंकालश्चेति ॥ अत्रपरिदानादीनामभावात्स्वयमेवकर्तृत्वंसिद्धम् ॥ देशव्यवस्था

यामपिनदोषः पठ्यते ॥ ज्योतिषशास्त्रे ॥ एकोदर्योः करतलग्रहणंयदिस्यादेकोदर
स्थवरयोः कुलनाशनंच ॥ एकाब्दिकेहिविधवाभवतीहकन्यानद्यंतरेपिशुभदंपृथुशै
लरोधेइति ॥ एकाब्दमध्येएकोदर्योः कन्ययोःकरतलग्रहणंयदिस्यात् ॥ एकोदरस्थ
वरयोर्वाकरतलग्रहणंस्यात्तदा कुलनाशनंकन्याविधवाचभवति ॥ नदीव्यवधानेपृ
थुशैलव्यवधानेपिशुभदंभवति ॥ नद्यंतरेणशैलांतरंचलक्ष्यते ॥ तथाचस्मृ
तिः ॥ व्यवधानंमहानद्यागिरिर्वाव्यवधायकः ॥ वाचोयत्रविभिद्यंतेतद्देशां
तरमुच्यते ॥ अतः पृथुपदंनद्यापिसंबंधनीयंतेननदीमहतीगृह्यते ॥ चतुर्विंश
तियोजनायामहानद्योगोदावर्यादयोद्वादशपुराणादौप्रसिद्धाः ॥ पृथुशैलः सह्य
विंध्यादिः ॥ अयंचसकलभिन्नाब्दादौविधिः प्रवेशनिर्गमनिर्णयेवेदितव्यः ॥
समानन्यायतत्त्वात् ॥ अथैकमातृप्रसूतयोर्निर्णयः संहितासारावल्याम् ॥ एकमातृ

प्रसूतानामेकस्मिन्वत्सरेयदि ॥ विवाहंनैवकुर्वीतवदंतिमुनयोयथा ॥ १ ॥ ॥ स्मृत्यंतरे ॥ ॥ विवाहस्त्वेकजन्यानामेकस्मिन्नुदयेकुले ॥ नाशंकरोत्येकवर्षे स्यादेकविधवायतः ॥ २ ॥ उदयोलग्नम् ॥ एकजन्यानामेकस्मिंल्लग्नेविवाहः कुल विनाशंकरोति ॥ एकवर्षेत्वेकाविधवास्यादित्यन्वयः ॥ विवाहोव्रतबंधादीनामुपल क्षणम् ॥ तथाचज्योतिःशास्त्रे ॥ एकमातृजयोरेकवत्सरेपुरुषस्त्रियोः ॥ नसमानक्रि यांकुर्यान्मातृभेदेविधीयते ॥ पुरुषौचस्त्रियौचपुरुषस्त्रियौ ॥ पृथक्त्वविवक्षायांबहुत्वा संभवान्नबहुत्वम् ॥ एकमातृजयोर्द्वयोः स्त्रियोरेकवर्षेसमानक्रियांनकुर्यादित्यर्थः ॥ समानक्रियातुल्यसंस्कारः ॥ अत्रवर्षंतुमनुजमानेन ॥ मनुजवर्षेणसंवत्सरव्यवहा रात् ॥ तद्वर्षंचैत्रादिफाल्गुनामांतंग्रहगणितेप्रसिद्धम् ॥ यत्तुगर्गवचनम् ॥ भ्रातृयुगेस्व सृयुगेभ्रातृस्वसृयुगेतथा ॥ नजातुमंगलंकुर्यादेकस्मिन्मंडपेऽहनीति ॥ एकस्मिन्मंड

पेऽहनीतिनिषेधादेकवर्षेपिभिन्नेऽहनिकर्तव्यतार्थसिद्धा ॥ अपिच ॥ पुत्रीपरिणयादू
र्ध्वंयावद्दिनचतुष्टयम् ॥ पुत्र्यंतरस्यकुर्वीतनोद्वाहमितिसूरयः ॥ दिनचतुष्टयमध्येपु
त्र्यंतरस्यविवाहनिषेधाद्दिनचतुष्टयोत्तरमेकवर्षेपि पुत्र्यंतरस्यविवाहोविधीयतइत्यु
क्तत्वाद्दिनचतुष्टयग्रहणेमंडपोद्वासनांतानिविवाहसमाप्तिकर्माणिलक्ष्यंते ॥ प्रायश्च
तुर्थदिनेतेषांविधानात् ॥ अतएववराहः ॥ उद्वाह्यपुत्रींनपिताविदध्यात्पुत्र्यंतरस्यो
द्वहनंनजातु ॥ दिनानिचत्वारिहिमंगलस्यसमापनंतावदतोविदध्यात् इति ॥ अत
श्चैकमंडपेशोभनद्वयस्यनिषेधोस्तीतिसिद्धम् ॥ तथाचयमलजातेनिर्णयसिंधौ ॥ ए
कस्मिन्वासरेप्राप्तेकुर्याद्यमलजातयोः ॥ क्षौरंचैवविवाहंचमौंजीबंधनमेवच ॥ अ
त्रविशेषः भट्टकारिकायाम् ॥ एकस्मिन्वत्सरेचैववासरेमंडपेतथा ॥ कर्तव्यंमंगलंस्व
स्त्रोर्भ्रात्रोर्यमलजातयोरिति ॥ ननुस्त्रीणामुपनयनस्थानेविवाहइत्युक्तत्वात् ॥ सो

दरकन्यापुत्रयोर्विवाहोपनयनयोःसमानसंस्कारत्वमितिचेदुच्यते ॥ अष्टमेवर्षे ब्राह्मणमुपनयेदित्याश्वलायनवचनेनकुमारमित्यनुवर्तते ॥ कुमारीनिवृत्त्यर्थमिद मितिवृत्तिकृताव्याख्यातम् ॥ हरदत्तेनापिब्राह्मणग्रहणंचात्रस्त्रीशूद्रादिनिवृत्तयइति ॥ अतोऽध्ययनाधिकारात्स्त्रीणामुपनयननिषेधएव ॥ यथाहभारद्वाजः ॥ उपनयनाख्यं यत्कर्मविद्यार्थंसमुदीरितमिति ॥ अतएवाहोपनयेद्गुरुः शिष्यम् ॥जाताधिकाराज्जन नादष्टमेऽब्देभवेदिदम् ॥ कुमाराधिकृतेश्चापिनस्त्रीणामिदमुच्यतइत्यतःस्त्रीणामुपनय ननिषेधएव ॥ एवंचेत्तर्हिस्त्रीणांद्विजन्मत्वंनस्यात् ॥ तस्मात्स्त्रीणांद्विजन्मत्वसिद्ध्यर्थ मेवोपनयनस्थानेविवाहइत्युक्तमेतदेवस्पष्टीकृतंमनुना ॥ वैवाहिकोविधिःस्त्रीणामौप नायनिकः स्मृतः॥पतिसेवागुरौवासोगृहस्थाग्निपरिक्रियेति ॥ अतः स्त्रीणांविवाह विधिरेवोपनयनमितिकृत्वाकन्यापुत्रयोर्विवाहोपनयनयोः समानसंस्कारत्वमितिउ

च्यते ॥ पुरुषाणामुपनयनादूर्ध्वंस्त्रीणांविवाहादूर्ध्वंयथावर्णपूर्णमाशौचमित्युक्त्वा
स्त्रीणांविवाहएवचेत्स्त्रीणांविवाहएवोपनयनंस्यात्तदापुरुषाणांस्त्रीणांचोपनयनादूर्ध्वं
पूर्णमाशौचमित्यवक्ष्यत् ॥ अपिच ॥ स्त्रीणांविवाहकालेचेद्गुरुशुद्धिर्नविद्यते ॥
द्विजानांचोपनयनेगुरुंतत्रैवपूजयेत् ॥ इत्यादौस्त्रीनरयोःपृथगुपादानात् ॥ स्त्रीवि
वाहस्तुविवाहएव ॥ एतत्तुमनुवचनेविवाहएवोपनयनंतत्स्त्रीणांद्विजन्मत्वोपादानप
रम् ॥ अन्यथाश्वलायनादिवचनैर्विरुध्यते ॥ अतःकन्यापुत्रयोरुद्वाहोपनयनयोर्नस
मानसंस्कारत्वमितिसिद्धम् ॥ अतःसोदरकन्यापुत्रयोर्विवाहोपनयनेएकवर्षेपिकर्त
व्येएव ॥ तत्रापिपुत्रोपनयनकर्मसमाप्यपुत्र्युद्वाहंकुर्यात् ॥ नमुंडनंमंडनतोपिकु
र्यादितिनिषेधात् ॥ परिवेतृत्वंतुपुत्रकृतंपुत्रस्यकन्याकृतंकन्यायायाएव ॥ तथाविध
गर्गादिवचनदर्शनात ॥ अतःकन्यापुत्रयोःपरस्परकृतोनपरिवेतृत्वपरिवेत्तित्ववि

चारः ॥ अथप्रवेशनिर्गमनिर्णयः ॥ तत्रज्योतिःशास्त्रे ॥ स्त्रीविवाहःकुलेनिर्गमः क
थ्यतेपुंविवाहःप्रवेशोमुनींद्रैःस्मृतः ॥ निर्गमादादितोनप्रवेशः शुभस्त्वेकसंवत्सरांताव
धिःकीर्तितः ॥ कुलेसापिंड्ये ॥ उभयत्रकुलस्यान्नमित्यादिषुविज्ञानाचार्यविद्येंद्रा
रण्यादिमुनिभिस्तथाव्याख्यातत्वात् ॥ सापिंडयंसप्तपूरुषंप्रसिद्धम् ॥ वासिष्ठे ॥नपुंवि
वाहोर्ध्वमृतुत्रयेपिविवाहकार्यंदुहितुःप्रकुर्यात् ॥ नमंडनाच्चापिहिमुंडनंतुगोत्रैकता
यांयदिनाब्दभेदेइति ॥ गोत्रैकतायामितिसांपिंडशेद्रष्टव्यम् ॥ सापिंडानामेववि
वाहसम्बन्धनिषेधइति॥तथाचस्मृतिः॥नित्यश्राद्धमधीतञ्चस्नानञ्चशिशिरैर्जलैः॥सपि
ण्डोनैवकुर्वीतपिण्डान्नोद्वासनावधीति॥तथाचगार्ग्यः॥ नांदीश्राद्धेकृतेपश्चाद्यावन्मातृ
विसर्जनम्॥ दर्शश्राद्धंक्षयश्राद्धंस्नानंशीतोदकेनच ॥ अपसव्यंस्वधाकारंनित्यश्राद्धंत
थैवच॥ब्रह्मयज्ञंचाध्ययनंनदीसीम्नोश्चलंघनम्॥उपवासव्रतञ्चैवश्राद्धभोजनमेवच॥अप

सव्यंस्वधाकारंनित्यश्राद्धंतथैवच ॥ नैवकुर्युःसपिंडाश्चमंडपोद्वासनावधीति ॥
विवाहव्रतचूडासुवर्षमर्द्धंतदर्धकम् ॥ पिंडान्सपिंडानोदद्युःप्रेतपिण्डंविनानरेति ॥
॥ स्मृत्यन्तरे ॥ पुत्रोद्वाहान्नैवपुत्रीविवाहोपिऋतुत्रये ॥ अब्दांतरान्मुंडनंचनैक
दामुंडनद्वयम् ॥ पूर्वार्द्धंस्पष्टम् ॥ विवाहानंतरमब्दांतरादब्दमध्येमुंडनंचनकार्यम् ॥
तथा ॥ एकदाएकस्मिन्नेवकालेमुंडनद्वयंनकार्यम् ॥ एतदपिसापिण्डयेद्रष्टव्यम् ॥ भि
न्नवर्षादिषुतुनदोषइतिप्रागुक्तमेव ॥ तथाचज्योतिःसागरे ॥ संवत्सरेविदेशेतुमंड
नादपिमुंडनम् ॥ नरोद्वाहात्स्त्रीविवाहंप्राहुर्गर्गमुखाअपि ॥ तथाच ॥ संवत्सरेकि
यन्न्यूनेनरोद्वाहेकृते सति ॥ राजांतरंयदिभवेच्छस्तःपाणिग्रहःस्त्रियइति ॥ राजांतरं
वत्सरांतरम् ॥ ज्योतिःशास्त्रेऽपि ॥ षण्मासमध्येयदिभूभृदंतरंभवेद्विवाहः पुरुषेविवा
हिते ॥ स्त्रीणामपीच्छंतिपराशराद्याःकुलेविवाहव्रतपूर्वकंचेति ॥ भूभृदंतरंराजां

तरम् ॥ तच्चोत्तरवर्षेएवभवति ॥ अतोभूमृदंतरंवर्षांतरमित्यर्थः ॥ तथाचोक्तम् ॥
यश्चैत्रशुद्धप्रतिपद्यदैकोवारःसराजामुनिभिः प्रतिष्ठितइति ॥ वर्षंतु मानुषमानेने
तिप्रागुक्तम ॥ कुलेसापिण्डयेशेषंस्पष्टम्॥ यत्तुमेधातिथिवचनम् ॥ पुरुषत्रयपर्यंतंप्रति
कूलंचगोत्रिणाम् ॥ प्रवेशनिर्गमौतद्वत्तथामंडनमुडनमिति ॥ एतद्भिन्नजातीयेषुसापि
डयेवेदितव्यम ॥ यतस्तेषांसापिण्डयंत्रिपुरुषमेव ॥ तथाहशंखः ॥ यद्येकजाताबहवः
पृथक्क्षेत्राःपृथग्जनाः ॥ एकपिण्डाःपृथक्छौचाःपिण्डेष्वावर्ततेत्रिष्विति ॥ अथ
शोभनसन्निपातनिर्णयः ॥ तत्रसायणीये ॥ एकस्मिञ्च्छोभनेवृत्तेद्विशुभंनैवकार
येत् ॥ यदिकुर्यात्प्रमादेनतत्रनस्याच्छुभंध्रुवमिति ॥ वृत्तेप्रवृत्तेसमाप्तइतियावत ॥
ततःसंवत्सरेचूडाकर्मविधीयते ॥ द्वितीयेवातृतीयेऽपिकर्तव्यं श्रुतिचोदनादित्या
दिप्रयोगदर्शनात् ॥ इदमेकमंडपविषयम ॥ एकमंडपेशोभनद्वयस्यप्राङ्निषिद्धत्वात् ॥

॥२११॥

एकगृहेऽपिसहशोभनस्यनिषेधः ॥ मंदिरवामभागेवेदीविधानाद्वास्तुमंडपमध्येवि
धानाच्चएकगृहेएकमंडपःस्यादिति ॥ अतएवस्पष्टमुक्तंप्रयोगसारे ॥ एकलग्नेद्विलग्नेवा
द्वेगृहेयस्यशोभने ॥ तयोरेकंप्रनष्टंस्याद्वर्द्धतेन्यदितिश्रुतिरिति ॥ यस्यगृहेएकलग्ने
द्वयोर्लग्नयोर्वाद्वेशोभनेभवतइत्यन्वयः ॥ शोभनंविवाहोपनयनादि ॥ एवमेकमंड
पेएकगृहेवाएककर्तरिवाशोभनद्वयस्यनिषेधइति ॥ यत्त्वाचार्यवचनम् ॥ एकमातृ
प्रसूतेद्वेकन्येवापुत्रकौतयोः ॥ सहोद्वाहंसकुर्वीततथैवव्रतबंधनमिति ॥ अत्रसोदर्ययो
रेककालउद्वाहादिनिषेधाद्भिन्नमातृकयोः सहोद्वाहादिकरणमागतं तद्भिन्नकर्तृत्वे
नभिन्नगृहेसतिवेदितव्यम् ॥ अन्यथापूर्ववचनविरोधः ॥ एवंद्वयोर्निषेधेआदिनिषेधः
सिद्धएव ॥ कर्तृत्वमेवात्रविवक्षितम् ॥ वृद्धिश्राद्धाधिकारीपित्रादेरेवनतुविवाहहोमक
र्तुर्वरस्य ॥ उद्वाह्यपुत्रींनपिताविदध्यात्पुत्र्यंतरस्योद्वहनंनजातु ॥ इत्यादिवचनलिंग

दर्शनात् ॥ अन्यथाकन्याविवाहेकर्तृत्वासंभवाच्च ॥ ॥ अथमंडनमुंडनविचारः ॥
संहितासारावल्याम् ॥ नमंडनान्मुंडनमूर्ध्वमिष्टंनपुत्रयोर्मुंडनमेकवर्षे ॥ नपुंविवाहो
र्ध्वमृतुत्रयेऽपिविवाहकार्यंदुहितुश्चकुर्यादिति ॥ एतत्सपिंडतायांज्ञातव्यम् ॥ कुले
ऋतुत्रयादर्वाङ्नकुर्यान्मुंडनत्रयम् ॥ प्रवेशान्निर्गमंपश्चान्मंडनान्नतुमुंडनमितिग
दितत्वात् ॥ मंडनंविवाहः ॥ मुंडनंचौलोपनयनादि ॥ तथाचसारसमुच्चये ॥ पा
णिपीडनविधेरनंतरंचौलकोपनयनेविवर्जयेदिति ॥ चौलोपनयनाभ्यांगोदानसमाव
र्तनयोरपिग्रहणमतिदेशत्वात् ॥ तथाचश्रीपतिः ॥ व्रतबंधवद्विधेयंनियतव्रतविसर्ग
श्च ॥ केशांतकर्मविहितंचौलसमंषोडशेवर्षेइति ॥ एतदेवस्पष्टीकृतं ज्योतिर्निबंधे ॥
व्रतंसमावर्तनकंसचौलंकेशांतमेतानिवदंतितज्ज्ञाः ॥ क्षौरंपुरस्कृत्यभवंतियस्माच्चत्वा
रितस्मादिहमुंडनानीति ॥ केचिच्चौलकर्मैवमुंडनमितिवदंतितद्बहुवाक्यविरोधा

न्नादरणीयंशिष्टसमाचाराच्चभिन्नवर्षादिषुनदोषइतिप्रागुक्तमेव ॥ तदेवोदाहृतंसंहि
तासारावल्याम् ॥ फाल्गुनेचैत्रमासेतुपुत्रोद्वाहोपनायने ॥ भेदादब्दस्यकुर्वीतनर्तु
त्रयउल्लंघनमिति ॥ एतद्बहुवाक्यतायांनसंशयनिवृत्तिः ॥ किंतुषोडशवर्षैकेशां
तोद्वादशद्वादशवर्षाण्येकैकस्यवेदस्यब्रह्मचर्यमिति वेदप्रामाण्येनकुले त्रिपुरुषसापिंड्ये
विवाहःकिन्नभवतिइत्यादिशंकयामुंडनशब्दार्थनिश्चयेकात्यायनः ॥ मुंडनंचौलमि
त्युक्तंव्रतोद्वाहौतुमंडनम् ॥ चौलंमुंडनमित्युक्तंवर्जयेद्वरणात्परम् ॥ मौंजीचोभयतः
कार्यायतोमौंजीनमुंडनम्॥मौंजीप्राधान्यमित्युक्तंमौंज्यंगंमुंडनंस्मृतम् ॥ मौंज्यांमुंड
नमंगंनप्रधानमिति ॥ वरणात्परंकन्यावरणोत्तरमितिसंस्काररत्नमालायाम् ॥ मंडनेकृ
तेपुनरुपनयनादेश्चनायंनिषेधः ॥ तत्रकेशमुंडनस्यकृताकृतत्वात्पुनरुपनयनादेःप्रा
यश्चित्तात्मकत्वेनविहितस्य कालातिक्रमे प्रायश्चित्तावृत्तिभयादनुक्तकालत्वाच्च ॥ इ

तिमंडनमुंडननिर्णयः ॥ ॥ अथगुरुलघुमंगलनिर्णयः ॥ ॥ सारसमुच्चये ॥ चूडा
केशांतसीमंतविवाहोपनयनंबुधाः ॥ गुरुमंगलमित्याहुस्तद्वर्ज्यंलघुमंगलम् ॥ तच्चगु
रुमंगलाल्लघुमंगलंनिषिध्यते ॥ ज्योतिःशास्त्रे ॥ ज्येष्ठंकृत्वातुषण्मासंनकुर्याल्लघुमंग
लम् ॥ कुर्वंतिमुनयःकेचिदन्यस्मिन्नपिवत्सरइति ॥ तथाच ॥ मातृयज्ञक्रियापूर्वं
ज्येष्ठंकृत्वातुमंगलम् ॥ऋतुत्रयंपुनर्यावन्नकुर्याल्लघुमंगलम् ॥ मातृयज्ञोमातृपूजातस्याः
क्रियावृद्धिश्राद्धादिः ॥ तथाचचतुर्विंशतिमते ॥ तिस्रःपूज्याःपितुःपक्षेतिस्रोमाता
महेतथा ॥ इत्येतामातरःप्रोक्ताःपितुर्मातुःस्वसाष्टमी ॥ ब्राह्म्याद्यास्तुततःसप्तदुर्गा
क्षेत्रगणाधिपान् ॥ वृद्ध्यादौपूजयित्वातुपश्चान्नांदीमुखान्पितॄन् ॥ मातृपूर्वान्पितॄ
न्पूज्यततोमातामहानपि ॥ मातामहीततःपूज्यायुग्माभोज्याद्विजातयः ॥ एत
द्विधिपूर्वकंगुरुमंगलंकृत्वाषण्मासाभ्यंतरेलघुमंगलंनकार्यमित्युक्तंभवति ॥ मातृपू ॥२१३॥

जादीनांचूडाकर्मादिषुप्राधान्येनविहितत्वाच्चूडाकर्मादिकंगुरुमंगलमित्युच्यते ॥ त
थाचगृह्यकारिकायाम् ॥ पुंसवनेचसीमंतचौलोपनयनेष्विह ॥ विवाहेचानलाध्येयप्र
भृतिश्रौतकर्मसु ॥ इदंश्राद्धंप्रकुर्वीतबीजवृद्धिनिमित्तकम् ॥ अन्येषोडशसंस्कारेश्रा
वण्यादिष्वपीष्यतइति ॥ अत्रपुंसवनग्रहणात्सीमंतसाहचर्याच्चपुंसवनमपिगुरुमंग
लंभवति ॥ चौलातिदेशात्केशांतमपि ॥ अयंगुरुमंगलानंतरंलघुमंगलस्यनिषेधः
कालातिपन्नस्यैव ॥ नयथाकालप्राप्तस्य ॥ सिंहस्थगुरौगुरुशुक्रास्ताधिमासादिषु
चास्यविधानात ॥ जातकर्मादेराशौचांतरप्राप्तावपिविधानाच्च ॥ तथाचज्योतिः
शास्त्रेउक्तम् ॥ सीमंतजातकादीनिप्राशनांतानिचक्रमात ॥ कर्तव्यानिनदोषोस्तिपं
चाननगतेगुरौ ॥ वृद्धमनुः ॥ अग्न्याधेयंप्रतिष्ठांचयज्ञदानव्रतानिच ॥ वेदव्रतवृषो
त्सर्गचूडाकरणमेखलाः ॥ मांगल्यमभिषेकंचमलमासेविवर्जयेत ॥ बाल्येवायदि

वावृद्धेशुक्रेचास्तमुपागते ॥ मलमासइवैतानिवर्जयेद्देवदर्शनमिति ॥ अत्रचूडाकर
णादीनांवर्जनाच्छेषाणांनदोषइतिज्ञापितम् ॥ तथाचबृहस्पतिः ॥ यस्याःक्रियायाः
संप्राप्तः कालोमासैर्दिनैरपि ॥ नतत्रमौढ्यदोषोस्तिअस्तोवागुरुशुक्रयोरिति ॥ आव
श्यकत्वमाहाश्वलायनः ॥ ततोमृतेवापतितेसंन्यस्तेवाविदेशगे ॥ तद्गोत्रजेनश्रेष्ठेनका
र्याःपुंसवनादयइति ॥ अतःकालप्राप्तस्यजातकर्मादेरावश्यककर्तव्यत्वादयंदोषो
न ॥ अयंचनिषेधःप्रायएककर्तृकस्येतिगम्यते ॥ गुरुलघुमंगलयोर्भिन्नकर्तृकत्वेतुन
दोषः ॥ वाक्यद्वयेऽपिज्येष्ठंकृत्वेतिउक्ता ॥ प्राप्त्यप्रदर्शनादेककर्तुः प्रतीयमानत्वाद्वि
शेषादर्शनाच्चाभिन्नवर्षादिष्वपिनदोषइतिप्रागुक्तमेवसमावर्तनसंज्ञकमिति ॥ एत
द्दिगवलंबेनान्यदपिसुधीभिर्निर्णेतव्यम् ॥ इतिगुरुलघुमंगलनिर्णयः ॥ अथपरिवे
त्रादिनिर्णयः ॥ तल्लक्षणमाहमनुः ॥ दाराग्निहोत्रसंयोगंकुरुतेयोऽग्रजेस्थिते ॥ परि

वेत्तासविज्ञेयःपरिवित्तिस्तुपूर्वजइति ॥ स्मृत्यंतरे ॥ ज्येष्ठायांयद्यनूढायांकन्यानोद्वा ह्यतेऽनुजा ॥ स्यादग्रेदिधिषुर्ज्ञेयापूर्वान्यादिधिषुःस्मृता ॥ परिवेत्रादिस्वरूपकथनपूर्वं कंतत्प्रायश्चित्तमाहहारीतः ॥ ज्येष्ठेऽनिर्विष्टेकनीयान्निविशमानःपरिवेत्ताभवतिपूर्वः परिवित्तिः परिवेदिनीकन्यापरिदायीदातापरियष्टायाजकः तेसर्वेपतिताःसंवत्सरंप्रा जापत्येनकृच्छ्रेणपावयेयुरिति ॥ एतत्कामतःपित्राद्यनुज्ञातोद्वाहविषयम् ॥ अकामतः पित्रादिदत्तोद्वाहेतुमानवतंत्रेमासिकम् ॥ अज्ञानतःपित्राद्यदत्तोद्वाहेयाज्ञवल्कीयंव्रत चतुष्टयम् ॥ उपपातकशुद्धिःस्यादेवंचांद्रायणेनवा ॥ पयसावापिमासेनपराकेणाथ वापुनरिति ॥ एवमितिगोवधप्रायश्चित्तातिदेशः ॥ अज्ञानतःपित्रादिदत्तोद्वाहेतुय मः ॥ कृच्छ्रद्वयंपरिवेत्ताकन्यायाःकृच्छ्रएवतु ॥ अतिकृच्छ्रंचरेद्दाता यष्टाचांद्राय णंचरेदिति ॥ प्रायश्चित्तांतेविशेषमाहवसिष्ठः ॥ परिवेदनःकृच्छ्रातिकृच्छ्रौचरित्वा

तस्मैदत्त्वापुनर्निविशेत्तांचैवोपयच्छेदिति ॥ परिवेदनइतिपरिवेत्तुरेवसंज्ञा ॥ तस्मै ज्येष्ठाय ब्रह्मचर्यंतंभैक्ष्यमिव निवेद्यपुनरुद्वहेत्कामित्युक्ते तामेवेतिव्याचष्टेविज्ञानेश्व रः ॥ तथाग्रदिधिषुपत्यादेरपिविशेषंवसिष्ठः ॥ अग्रेदिधिषुपतिःकृच्छ्रंद्वादशरात्रिंचरित्वानिविशेततांचैवोपयच्छेतेति ॥ दिधिषुपतिःकृच्छ्रातिकृच्छ्रौचरित्वा तस्मैपुनर्निविशेदितिचरित्वाज्येष्ठायामन्येनोढायांपश्चात्तामेवोद्वहेत् ॥ तस्मैकनी यस्याःपूर्ववज्ज्येष्ठांदत्त्वाअन्यामुद्वहेतेतिव्याख्यातंपारिजातादौएवंनिर्णयति ॥ प रिवेदनदोषस्यापवादमाहयमः ॥ पितृव्यपुत्रान्सापत्नान्परपुत्रांस्तथैवच ॥ दाराग्निहो त्रधर्मेषुनदोषःपरिवेदिनइति ॥ परपुत्रादत्तकादयइतिपारिजातः ॥ सौदर्यविष येपित्वाहकात्यायनः ॥ देशांतरस्थान्क्लीबांश्चतथाकुष्ठव्रणानपि ॥ वेश्यातिसक्तप तितशूद्रतुल्यातिरोगिणः ॥ जडमूकांधबधिरकुब्जवामनखेलकान् ॥ अतिवृद्धानभा

यांश्चकृषिसक्तानग्रास्यच ॥ धनवृद्धिप्रसक्तांश्चकामतःकारिणस्तथा ॥ कुहको
न्मत्तचौरांश्चपरिवेत्तानदुष्यति ॥ खेलकोभग्नपादद्वयः ॥ अभार्योनैष्ठिकब्रह्मचा
रिणः ॥ कामतःकारिणोविवाहादिच्छायानिवृत्ताइतिव्याख्यातंपारिजाते ॥
देशांतरगतज्येष्ठस्यप्रतीक्षावधिमाहवसिष्ठः ॥ अष्टौद्वादशवर्षाणिज्येष्ठभ्रातरमसंनि
विष्टमप्रतीक्षमाणःप्रायश्चित्तीभवतीति ॥ द्वादशेतुमुख्यःपक्षः ॥ द्वादशैवतुवर्षाणि
श्रेयान्धर्मार्थयोगतः ॥ न्याय्यः प्रतीक्ष्यतंभ्राताश्रूयमाणःपुनःपुनरिति ॥ अत्राप्यप
वादःकार्ष्णाजिनिः ॥ उन्मत्तकिल्बिषीकुष्ठीपतितःक्लीबएववा ॥ राजयक्ष्मामया
वीचनन्याय्यंस्यात्प्रतीक्षितुमिति ॥ कन्याविषयेप्युक्तदोषापवादंगर्गः ॥ एकमा
तृप्रसूतानांकन्यानांपरिवेदने ॥ दोषःस्यात्सर्ववर्णेषुनदोषोभिन्नमातृष्विति ॥
वृद्धमनुः ॥ विवाहेनाधिकारेणज्येष्ठकन्यास्थितायदि ॥ तदानुज्ञांविनाचापिकनि

ष्ठामुद्वहेत्तदेति ॥ अन्यत्सर्वंपारिवेदनोक्तमनुसंध्येयमितिपारिजातः ॥ इतिपरिवे
त्रादिनिर्णयः ॥ ॥ अथविवाहेआशौचप्राप्तौतदपोह्यसद्यःशौचचंद्रिकाकारआह ॥
॥ तत्रयाज्ञवल्क्यः ॥ दानेविवाहेयज्ञेचसंग्रामेदेशविप्लवे ॥ आपद्यपिचकष्टायां
सद्यःशौचंविधीयते ॥ दातुर्वरस्यकन्यायाः सद्यःशौचंविधीयतेइतिषट्त्रिंशन्मते ॥
विवाहोत्सवयज्ञेषुत्वंतरामृतसूतके ॥ परैरन्नंप्रदातव्यंभोक्तव्यंचद्विजोत्तमैः ॥ व्रत
यज्ञविवाहेषुश्राद्धेहोमार्चनेजपे ॥ प्रारंभेसूतकंनस्यादनारंभेतुसूतकम् ॥ प्रारंभश्च
तेनैवोक्तः ॥ प्रारंभोवरणंयज्ञेसंकल्पोव्रतसत्रयोः ॥ नांदीमुखंविवाहादौश्राद्धेपाक
परिक्रियेति ॥ वरणंतुमधुपर्कांतेज्ञेयम् ॥ तथाचब्राह्मे ॥ गृहीतमधुपर्कस्ययजमा
नाच्चऋत्विजइत्युक्तेः ॥ एतच्चवरणमस्त्येव ॥ अवरणवत्स्वाधानेष्टिपशुबंधादिषु
तुस्वीयाद्यपदार्थेप्रवर्तनमेवारंभः ॥ तथाचदर्शपूर्णमासयोरवृतस्यहोतुःसामिधेनी

षुप्रवृत्तस्याशौचाभावः ॥ कन्यायाःवरपितरंप्रतिदानमेवविवाहः ॥ वरंप्रतितुहोम
पाणिग्रहणादि ॥ प्रारब्धपाकेश्राद्धकर्तुः ॥ कृतनिमंत्रणेश्राद्धेतुश्राद्धभोक्तुरितिव्यव
स्येतिकालविवेचनकारादयः ॥ शंकरभट्टकृतधर्मप्रकाशेतुतत्तत्स्मृतिषुपाकनिष्पत्ति
कृतसंकल्पितनिमंत्राणांत्रयाणामपि आशौचाभावनिमित्तत्वोक्तेर्निमित्तत्रयसमुच्च
यएवश्राद्धेनाशौचंतथैवशिष्टसमाचारादित्युक्तम् ॥ मुहूर्तांतरालाभेसामग्र्यांकृतायां
सूतकिनोप्यधिकारोपायमाहपारिजातेविष्णुः ॥ अनारब्धविशुद्ध्यर्थंकूष्मांडैर्जुहु
याद्घृतम् ॥ गांदद्यात्पंचगव्याशीततःशुध्यतिसूतकीति ॥ ततःशुध्यतीतिपुनरुक्ति
र्विवाहाद्युपयोगिपाकपरिवेषणादावपिशुद्धिज्ञापनार्था ॥ गाम्पयस्विनींदद्यात् ॥
संकटेसमनुप्राप्तेसूतकेसमुपस्थिते ॥ कूष्मांडीभिर्घृतंहुत्वागांचदद्यात्पयस्विनीम् ॥
चूडोपनयनोद्वाहप्रतिष्टादिकमाचरेत् ॥ यदैवसूतकप्राप्तिस्तदैवाभ्युदयक्रियेतिसं

ग्रहोक्तेः ॥ स्मृतिकौस्तुभेचौलप्रसंगेतुआरंभोत्तरंसूतकेप्राप्तेविशेषः ॥ संग्रहेइत्यु
क्त्वाकूष्माण्डीभिर्घृतंहुत्वेतिसंग्रहवाक्यमुपन्यस्तम् । एवंशुद्धिपूर्वकंविवाहाद्यनुष्ठाने
तदंगत्वेनसंकल्पितान्नभोजनेनदोषइतिबृहस्पतिनोक्तम् । विवाहोत्सवयज्ञेषुत्वंतरामृ
तसूतके ॥ पूर्वसंकल्पितान्नेननदोषःपरिकीर्तितइति ॥ मृतसूतकमध्येविवाहाद्यनु
ष्ठानेउक्तशुद्धिपूर्वकमारब्धेइत्यर्थः ॥ नान्दीश्राद्धोत्तरंसूतकादौविवाहारंभोत्तरमपि
संकल्पितान्नेनैवविशेषइतिषट्त्रिंशन्मते ॥ पूर्वार्धंतुपूर्ववत् ॥ परैरन्नंप्रदातव्यंभो
क्तव्यंचद्विजोत्तमैरिति ॥ विवाहादिमध्येसूतकादिप्राप्तावित्यर्थः ॥ पूर्वसंकल्पिता
न्नभोजनसमयेसूतकादौतुविशेषस्तत्रैव ॥ भुंजानेषुतुविप्रेषुत्वंतरामृतसूतके ॥ अन्य
गेहोदकाचांताःसर्वेतेशुचयःस्मृताइति ॥ भोक्तृभिर्भुक्तशेषस्त्याज्यः ॥ पक्वशेषः
सूतकिभिर्भोक्तव्यइत्याशयः ॥ ॥ अथविवाहेवधूवरजननीरजोदोषनिर्णयः ॥

वधूवरान्यतरयोर्ज्जननीचेद्रजस्वला ॥ तस्याःशुद्धेःपरंकार्यंमांगल्यंमनुरब्रवीत ॥
॥ १ ॥ माधवीये ॥ प्रारंभात्प्राग्विवाहस्यमातायदिरजस्वला ॥ निवृत्तिस्तस्यकर्त
व्यासहत्वश्रुतिचोदनात् ॥ १ ॥ प्रारंभात्प्रागितिनांदीश्राद्धात्प्रागितिज्ञेयम् ॥
नांदीमुखंविवाहादावित्यादिनातस्यैवप्रारंभः ॥ वृद्धमनुः ॥ विवाहव्रतचूडासुमा
तायदिरजस्वला ॥ तदानमंगलंकार्यंशुद्धौकार्यंशुभेप्सुभिः ॥ मेधातिथिः ॥ चौले
चव्रतबंधेचविवाहेयज्ञकर्मणि ॥ भार्यारजस्वलायस्यप्रायस्तस्यनशोभनम् ॥ गर्गः ॥
यस्योद्वाहादिमांगल्येमातायदिरजस्वला ॥ तदानतत्प्रकर्तव्यमायुःक्षयकरंयतः ॥
बृहस्पतिः ॥ वैधव्यंचविवाहेस्याज्जडत्वंव्रतबंधने ॥ चूडायांचशिशोर्मृत्युर्विघ्नोया
त्राप्रवेशयोः ॥ रजोदर्शनस्यनांदीश्राद्धोत्तरमुत्पत्तौततःपूर्वमुत्पत्तावपिमुहूर्तांतरा
लाभेश्रीपूजनादिकांशांतिंकृत्वातदैवचौलादिकार्यम् ॥ यथाकारिकानिबंधे ॥ सूति

कोदक्ययोःशुद्ध्यैगांदद्याद्धोमपूर्वकम् ॥ प्राप्तेकर्मणिशुद्धास्यादितरस्मिन्नशुध्यति ॥
अलाभेसुमुहूर्तस्यरजोदोषेह्युपस्थिते ॥ श्रियंसंपूज्यतत्कुर्याद्वृत्रहत्याभयंकरीम् ॥
हैमींमाषमितांपद्मांश्रीसूक्तविधिनाचरेत् ॥ प्रत्यृचंपायसंहुत्वाऽभिषिच्यशुभमाचरे
त् ॥ श्लोकभेदेनप्रतिपदोक्तारंभस्यमुहूर्तांतरालाभस्यश्रवणान्नपरस्परसापेक्षत्वम् ॥
रजोदर्शनादिसंभावनायांनांदीश्राद्धस्यापकृष्यानुष्ठानेप्यवधिरुक्तःप्रयोगरत्ने ॥ एक
विंशत्यहर्यज्ञेविवाहेदशवासराः ॥ त्रिषट्चौलोपनयनेनांदीश्राद्धंविधीयते ॥ अथ क
न्यारजोदर्शनेनिर्णयः ॥ विवाहात्पूर्वंकन्यारजोदर्शनेजातेविवाहयोग्यतासिद्ध्यर्थ
मुपायमाहाश्वलायनः ॥ पिताऋतून्स्वपुत्र्यास्तुगणयेदादितःसुधीः ॥ दानावधिगृहे
यत्नात्पालयेच्चरजोवतीम् ॥ दद्यात्तदृतुसंख्यागाःशक्तःकन्यापितायदि ॥ दातव्यैकापि
यत्नेनदानेतस्यायथाविधि ॥ दद्याद्वाब्राह्मणेष्वन्नमतिनिःस्वःसदक्षिणम् ॥ तदतीतर्तु

संख्येषुवरायप्रतिपादयेत् ॥ उपोष्यत्रिदिनंकन्यारात्रौपीत्वागवांपयः ॥ अदृष्टरजसे
दद्यात्कन्यायैरत्नभूषणम् ॥ तामुद्वहन्वरश्चापिकूष्मांडैर्जुहुयाद्घृतमितिविष्णुः॥यद्देवे
तिचऋक्सूक्तंकूष्मांडंपरिकीर्तितम् ॥ नवाहुत्त्याहुनेदाज्यंहोमःकूष्मांडिकीर्तितः ॥
तस्याःकन्यायादानेकर्तव्येयथाविधिसुवर्णशृङ्गादिगोदानविधिनेत्यर्थः । वरायेतिउ
क्तप्रकाराणामन्यतमेनदातुःकन्यादानेयोग्यताभवतीत्यर्थः । उपोष्येतिश्लोकेनदृष्ट
रजस्ककन्याया उपवासत्रयांतेगव्यपयः पानपूर्वकमदृष्टरजसेकुमार्यैरत्नभूषणदा
नेनविवाहयोग्यताउच्यते ॥ तामुद्वहन्नितिवरस्यकूष्मांडहोमेनतदुद्वाहयोग्यतेतिबो
द्धव्यम् ॥ अथविवाहहोमकालेकन्याऋतुमतीचेत्तत्रयज्ञपार्श्वे ॥ विवाहविहितेतंत्रेहो
मकालउपस्थिते ॥ कन्यामृतुमतींदृष्ट्वाकथंकुर्वंतियाज्ञिकाः ॥ स्नापयित्वातुतांक
न्यामर्चयित्वायथाविधि ॥ युञ्जानाज्याहुतिंहुत्वाततःकर्मणियोजयेत् ॥ अन्यच्च ॥

युंजानः प्रथमंमंत्रैरष्टाविंशतिसंख्यया ॥ आज्याहुतिंचजुहुयाद्गांचदद्यात्पयस्विनीम् ॥
॥ यद्वा ॥ स्मृत्यर्थसारे ॥ विवाहहोमेप्रक्रांतेयदिकन्यारजस्वला ॥ त्रिरात्रंदंपती
स्यातांपृथक्छय्यासनाशिनौ ॥ चतुर्थेहनिसंस्नातौतस्मिन्नग्नौयथाविधि ॥ विवा
हहोमंकुर्वीतइत्यादिस्मृतिसंग्रहइति ॥ ॥ अथप्रतिकूलनिर्णयः ॥ कृष्णभट्टीये
॥ वधूवरार्थेघटितेसुनिश्चितेवरस्यगेहेप्यथकन्यकायाः ॥ म्रियेतकश्चिन्मनुजोथ
नारीतदानकुर्युःखलुमंडनंते ॥ मनुः ॥ वाग्दानानंतरंयत्रउभयस्यकुलेषुच ॥ त्र्य
ब्दोनबालमरणेप्रतिकूलंनविद्यते ॥ स्मृतिरत्नावल्याम् ॥ ऊनद्विवार्षिकेप्रेतेनतस्यप्र
तिकूलता ॥ शांतिःस्याच्छुभदानृणांकूष्मांडगणहोमतः ॥ वाङ्निश्चयेकृतेपश्चा
त्पितरौनिधनंगतौ ॥ तयोस्तत्प्रतिकूलंस्यान्नान्येषांतुकदाचनेतिवृद्धवसिष्ठः ॥ वर
वध्वोःपितामातापितृव्यश्चसहोदरः ॥ एतेषांप्रतिकूलंस्यान्महाविघ्नप्रदंभवेत ॥ पि

तापितामहश्चैवमाताचैवपितामही ॥ पितृव्यस्त्रीसुतोभ्राताभगिनीवाविवाहिता ॥
एभिरेवविपन्नैश्चप्रतिकूलंबुधैःस्मृतम् ॥ अन्यैरपिविपन्नैस्तुकेचिद्बूचुर्नतद्भवेदिति ॥
मांडव्यः ॥ वाग्दानानंतरंमातापिताभ्राताविपद्यते ॥ विवाहोनैवकर्तव्यः ॥ स्ववंशहि
तमिच्छतेति ॥ ॥ अथसंकटेप्रवृत्तिप्रकारमाहमेधातिथिः ॥ ॥ वाग्दानानंतरंय
त्रकुलयोःकस्यचिन्मृतिः ॥ ततःसंवत्सरादूर्ध्वंविवाहः शुभदोभवेत् ॥ पुरुषत्रयप
र्यंतंप्रतिकूलंस्वगोत्रिणाम् ॥ प्रवेशान्निर्गमस्तद्वत्तथामंडनमुंडने ॥ प्रेतकर्माण्यनिर्व
र्त्यचरेन्नाभ्युदयक्रियाम् ॥ आचतुर्थंततः पुंसिपंचमेशुभदंभवेदिति ॥ स्मृतिरत्नाव
ल्याम् ॥ पितुरब्दमिहाशौचंतदर्धंमातुरेवच ॥ मासत्रयंतुभार्यायास्तदर्धंभ्रातृपुत्रयोः
॥ अन्येषांतुसपिंडानामाशौचंमाससंमितम् ॥ तदंतेशांतिकंकृत्वाततोलग्नंविधीयते
इति ॥ ज्योतिःप्रकाशे ॥ प्रतिकूलेपिकर्तव्योविवाहोमाससमंतरा ॥ शांतिंविधायगांद

त्वावाग्दानादिचरेत्पुनरिति ॥ स्मृत्यंतरे ॥ प्रतिकूलेपिकर्तव्यंकेप्याहुर्बहुसंप्लवे ॥
प्रतिकूलेसपिंडस्यमासमेकंविवर्जयेत् ॥ विवाहस्तुततःपश्चात्तयोरेवविधीयतइति ॥
ज्योतिःसागरे ॥ दुर्भिक्षेराष्ट्रभंगेचपित्रोर्वाप्राणसंशये ॥ प्रौढायामपिकन्यायांना
नुकूलंप्रतीक्षतइति ॥ अन्यत्रापि ॥ दीर्घरोगाभिभूतस्यदूरदेशस्थितस्यच ॥ उदा
सीनस्थितस्यापिप्रतिकूलंनविद्यते ॥ संकटेसमनुप्राप्तेयाज्ञवल्क्येनयोगिना ॥ शां
तिरुक्तागणेशस्यकृत्वातांशुभमाचरेत् ॥ अकृत्वाशांतिकंयस्तु निषिद्धेसति दारुणे ॥
प्रकरोतिशुभंकर्मविघ्नस्तस्यपदेपदे ॥ वृद्धवसिष्ठः ॥ प्रतिकूलेतुसंप्राप्तेविवाहंनै
वकारयेत् ॥ अंतेदोषविनाशायकुर्याच्छांतिमिमांशुभाम् ॥ श्रियैजातइतिश्रियम् ॥
इदंविष्णुरितिविष्णुम् ॥ गौरीर्मिमायेतिगौरीम् ॥ त्र्यंबकमितित्र्यंबकम् ॥ परंमृ
त्योरितियमम् ॥ पूजयित्वातिलाज्यंचहुनेदष्टोत्तरंशतम् ॥ ॐ भूःस्वाहामृत्युर्न

॥२२०॥

इयतांस्नुषायैसुखंवर्धतांस्वाहा ॥ ततोहोमंसमाप्य गोदक्षिणाभवेदिति ॥ स्मृतिचंद्रिकायाम् ॥ कृतेवाङ्निश्चयेपश्चान्मृत्युर्भवतिगोत्रिणः ॥ तदानमंगलंकार्यंनाशवैधव्यदंध्रुवम् ॥ वाग्दानानंतरंयत्रकुलयोःकस्यचिन्मृतिः ॥ तत्रोद्वाहोनैवकार्यःस्ववंशक्षयदोषकृदिति ॥ अत्रयद्यपिम्रियेतकस्यचिदिति मृत्युर्भवति कस्यचिदितिचाविशेषेणोक्तम् ॥ तथापिपितामहादीनामपिमरणस्यप्रतिकूलदोषनिमित्तत्वेनक्वचिदकीर्तनादविवाहितायाभगिन्याइति विवाहितायामरणस्य तथात्वानुक्तेर्मेधातिथिवाक्ये स्वगोत्रिणामितिचंद्रिकावाक्येमर्त्यस्यगोत्रिण इतिचकीर्तनाद्वध्वावरस्यवासगोत्रसपिंडेषुत्रिपुरुषांतर्गतेमर्त्यैमृतेप्रतिकूलदोषइतिमंतव्यम् ॥ स्त्रीचवरस्यद्वितीयादिविवाहसमयेपूर्वोढासुतास्तस्यांपूर्वोत्पन्नः एतत्पौत्रोपलक्षणम् ॥ एवंपितृव्यग्रहणंतत्पुत्रस्यएवं वरमारभ्यजनकत्रिपुरुषीकूटस्थमारभ्य संतानभेदेच त्रिपुरुषी

अत्रबोद्धव्या ॥ वधूवरयोःसमानगृहेतन्मरणेकंचित्कालंप्रतीक्ष्यैवविवाहइति ॥ तदाकुर्युरित्यादिशब्दैर्बोध्यते ॥ तयोस्तत्प्रतिकूलंस्यादितिकालप्रतीक्षाशांतिभ्यामसमाधेयोदोषःद्वयोर्युगपन्मरणजइत्यर्थः ॥ अतएवोक्तंनान्येषांतुकदाचनेति ॥ अन्येषांसपिंडानांतयोरप्येकैकमरणजस्तुसमाधेयइतिआशयः ॥ वृद्धवसिष्ठवाक्येचतुर्णांमरणस्य महाविघ्नकरत्वकथने तत्रप्रतीक्षासहिताकेवलंवाविनायकशांतिरिति कथनार्थम् ॥ अतएवतद्विधिवाक्यशेषेणशांत्यकरणेपदेपदेइतिविघ्नस्यमहत्त्वंप्रदर्शितम् ॥ एभिरेवंविपन्नैरितिकालप्रतीक्षासहितायाः ॥ श्रीपूजनादिशांतेर्निमित्तमेतन्मरणमेवेत्याशयः ॥ अतएवमांडव्यवाक्येनैवकर्तव्योनिमित्तानिमित्तानंतरमितिव्याख्येयम् ॥ इतिप्रतिकूलनिर्णयः ॥ अथचूडोपनयनोद्वाहानांप्रारंभोत्तरंमुहूर्तांतरालाभेजननाशौचपाते संकटवशात्प्राप्तकर्मकरणेतच्छुद्ध्यर्थं प्रायश्चित्तीभूतमार्तंडानुसारी

कूष्मांडीहोमप्रयोगः ॥ ॥ कृतस्नानादिर्यजमानःपत्न्यासंस्कार्येणचसहपीठादा
वुपविश्याचम्य अस्यामुकसंस्कार्यस्य जननाशौचमध्येसंकटवशेनअमुकसंस्कारं
कर्तुंकूष्मांडमंत्रैराज्यहोमं पयस्विनीगोदानं तन्निष्क्रयंवापंचगव्यप्राशनंचकरिष्ये
इति ॥ तत्रादौनिर्विघ्नतार्थंगणपतिपूजनंस्वस्तिवाचनमपिकुर्वंति ॥ कूष्मांडहोमंकर्तु
मस्मिन्स्थंडिलेपंचभूसंस्कारपूर्वकंविटंनामानमग्निंप्रतिष्ठाप्यसंपूज्य ॥ तत्रदेवताभि
ध्यानम् ॥ तत्रप्रजापतिमिंद्रमग्निंसोमम् ॥ प्रधानमग्निंवायुंसूर्यंकूष्मांडमंत्रैः॥ अग्निंवा
युंसूर्यमग्नीवरुणौअग्नीवरुणौअग्निंवरुणंसवितारंविष्णुंविश्वान्देवान्मरुतः स्वर्कान्व
रुणमादित्यमदितिंप्रजापतिमग्निंस्विष्टकृतमेताअंगप्रधानार्थादेवताः आज्येनास्मि
न्कर्मण्यहंयक्ष्ये ॥ ततोदक्षिणतो ब्रह्मासनादिआज्यभागांतं कृत्वा ॥ ॥ नात्रचरुः ॥

१ कूष्मांडहोमस्य प्रायश्चित्तत्वात् ।

 

कूष्मांडहोममंत्राः ॥ ॐ यद्देवादेवहेडनंदेवासश्चकृमावयम् ॥ अग्निर्मातस्मादेनसो विश्वान्मुञ्चत्वंहसः स्वाहा ॥ १ ॥ इदमग्नयेनमम ॥ ॐ यदिदिवा यदिनक्तमेनांसि चकृमावयम् ॥ वायुर्मातस्मादेनसोविश्वान्मुञ्चत्वंहसः स्वाहा ॥ २ ॥ इदंवायवे० ॐ यदिजाग्रद्यदिस्वप्नऽएनांसिचकृमावयम् ॥ सूर्योमातस्मादेनसोविश्वान्मुञ्चत्वंहसः स्वाहा ॥ ३ ॥ इदंसूर्यायनमम ॥ ततोभूराद्याःस्विष्टकृदंतादशाहुतयः ॥ ततः संस्रवप्राशनादिप्रणीताविमोकांतंहोमशेषंसमाप्य ॥ ततःपयस्विनीगोदानम् ॥ प्रतिग्रहीतृब्राह्मणपूजनम् ॥ गांवस्त्रालंकारादिभिः संपूज्य ॥ दानमंत्रः ॥ गवामंगेषुतिष्ठंतीति ॥ इमांगांपयस्विनींयथाशक्त्यलंकृतांजननाशौचदोषनिरसनार्थंकूष्मांडीप्रायश्चित्तहोमसांगतासिद्ध्यर्थं प्राप्तकर्मकरणेअधिकारार्थंचअमुकशर्म 

णेब्राह्मणायतुभ्यमहंसंप्रददे ॥ दानसांगता० इमांदक्षिणां० अथवागोनिष्क्रयीभूतं निष्कार्धंपादंवासुवर्णमूल्यरजतद्रव्यंसदक्षिणाकंतुभ्यमहं० ततोविधिवत्पंचगव्यंकृत्वा॥यत्त्वगस्थिगतंपापंदेहेतिष्ठतिमामके ॥ प्राशनात्पंचगव्यस्यदहत्यग्निरिवेंधनमितिपठितमंत्रपूर्वकम् ॥ ॐ इत्यनेनप्राशयेत् ॥ यथाशक्तिब्राह्मणभोजनसंकल्पः ॥ ब्राह्मणान्संपूज्यतैराशिषोगृहीत्वाअग्निंविसृज्य ॥ अनेनकृतेनकर्मणाश्रीपरमेश्वरःप्रीयताम् ॥ इतिसंस्कारभास्करेकूष्मांडीहोमप्रयोगः ॥ अथविवाहहोमकालेकन्याऋतुमतीचेत्तत्रहोमप्रयोगः ॥ कन्यासुस्नाताशुभासनेउपविश्य ॥ ऋतुदोषविनाशार्थं प्राप्तकर्मणियोग्यतासिद्ध्यर्थंयुंजानहवनंपयस्विनीगोदानंपयःप्राशनंचकरिष्ये ॥ निर्विघ्नतासिद्ध्यर्थंगणेशंसंपूज्य ॥ युंजानहोमंकर्तुमहमस्मिन्स्थंडिलेपंचभूसंस्कारपूर्वकंविटनामानमग्निंप्रतिष्ठाप्यसंपूज्य ॥ दक्षिणतोब्राह्मासनाद्याज्यभागांतेनात्रचरुः ॥

युंजानःप्रथमम्॥ युंजतेमनइतिऋग्भ्यांचतुर्दशावृत्त्याष्टाविंशत्याहुतीराज्येनहुत्वा॥ तौचमंत्रौ ॥ ॐ युञ्जानःप्रथमंमनस्तत्त्वायसविताधियं ॥ अग्निर्ज्योतिर्निचाय्यपृथिव्याअध्याभरत्स्वाहा ॥ इदंसवित्रेनमम ॥ १ ॥ युञ्जतेमनउतयुञ्जतेधियोविप्राविप्रस्यबृहतोविपश्चितः ॥ विहोत्रादधेवयुनाविदेकइन्महीदेवस्यसवितुःपरिष्टुतिःस्वाहा ॥ १ ॥ इदंसवित्रेनमम॥ ततोभूराद्याः स्विष्टकृदंतादशाहुतयः ॥ संस्रवप्राशनादिप्रणीताविमोकांतहोमशेषंसमाप्य ॥ ततःपयस्विनींगांदद्यात् ॥ गांवस्त्रालंकारादिभिःसंपूज्य ॥ प्रतिग्रहीतृब्राह्मणंसंपूज्य ॥दानमंत्रः ॥ गवामंगेषुतिष्ठंति भुवनानिचतुर्दश ॥ यस्मात्तस्माच्छिवंमेस्यादिहलोकेपरत्रच ॥इमांगांपयस्विनीं यथाशक्त्यलंकृतामृतुदोषनिरासार्थं:युञ्जानप्रायश्चित्तहोमसिद्ध्यर्थं प्राप्तकर्मकरणे अ

धिकारार्थंचब्राह्मणायतुभ्यमहंसंप्रददे ॥ दानसांगतासिद्ध्यर्थमिमांदक्षिणांतुभ्यमहं संप्रददे ॥ अथवागोनिष्क्रयीभूतंनिष्कंनिष्कार्धंवासुवर्णमूल्यरजतद्रव्यंसदक्षिणा कंतुभ्यमहंसंप्रददे ॥ ततःपयःप्राशनम् ॥ कामधेनुसमुद्भूतंघृतबीजंशशिप्रभम् ॥ त स्यप्राशनमात्रेणरजोदोषोविनश्यतु ॥ इदंरजोदोषनिवृत्त्यर्थंत्रिदिनंपयःप्राश्यम् ॥ अग्निंविसृजेत् ॥ इतियुञ्जानहोमविधिः ॥ ॥ अथवधूवरमातृरजःप्राप्तौनांदीश्राद्धो त्तरंमुहूर्तांतरालाभेसंकटेप्राप्तकर्माधिकारार्थंश्रीशांतिकरणेप्रयोगः ॥ आचम्यदे शकालौसंकीर्त्यअस्यसंस्कार्यस्य विवाहादिमंगलमध्ये अस्मत्पत्न्यारजउत्पन्नदोष निरासार्थंसकलारिष्टशांत्यर्थंसंस्कारस्यबह्वायुष्यप्राप्त्यर्थंश्रीशांतिंकरिष्ये ॥ त दंगत्वेनगणपतिपूजनंस्वस्तिवाचनंकृत्वाआचार्यंवृत्वा स्थंडिलेपंचभूसंस्कारपूर्वकं वरदनामानमग्निंप्रतिष्ठाप्यसंपूज्य ॥ तत्पुरतःभद्रपीठे तंदुलाष्टदलंविरच्यतदुपरिकल

शांसंस्थाप्योपरिपूर्णपात्रंनिधाय वस्त्रयुग्मेनसंवेष्ट्यतदुपरिअग्न्युत्तारणप्राणप्रतिष्ठापू
र्वकंस्वर्णमयींश्रीमूर्तिंप्रतिष्ठाप्य ॥ श्रीसूक्तेनषोडशोपचारैःसंपूज्यप्रार्थयेत् ॥ म
हालक्ष्मिनमस्तुभ्यंसहस्रकरमंडिते ॥ आयुःश्रीमंगलंदेहिरजोदोषंनिवारयेति ॥ द
क्षिणतोब्रह्मासनाद्याज्यभागांतंकृत्वापंचदशर्चांश्रीसूक्तेनप्रत्यृचं तिलाज्यपायसहो
मंकृत्वा ॥ भूरादिस्विष्टकृदंतादशाहुतीर्हुत्वाज्येन ॥ ततःसंस्रवप्राशनादिप्रणीतावि
मोकांतंहोमशेषंसमाप्य ॥ गवामंगेष्वितिगांवातन्निष्क्रयद्रव्यंदत्त्वा ॥ ऐंद्रवारुण
पावमानीयमंत्रैरंगसूक्तैरभिषेकमंत्रैश्चसंस्कार्येणसहाभिषिच्य ॥ प्रतिमामाचार्या
यदत्त्वादक्षिणांदत्त्वाविप्राशिषोगृहीत्वा ब्राह्मणभोजनसंकल्पंकृत्वा प्रतिमाग्निंविसृ
ज्य ॥ यस्यस्मृत्येतिनत्वाकर्मसंपूर्णतांवाचयेदितिसंस्कारभास्करेश्रीशांतिप्रयो
गः ॥ अथविघ्नपरिहारायविनायकशांतिरुच्यते ॥ ॥ तत्रकालः ॥ विष्णुधर्मे ॥

हस्तपुष्याश्वयुक्सौम्येवैष्णवेचोत्तरात्रये ॥ नक्षत्रेचमुहूर्तेचमैत्रेवाब्रह्मदैवते ॥ शु
क्लपक्षेचतुर्थ्यांचवासरेधिषणस्यच ॥ विघ्नस्यपरिहारार्थंशांतिंकुर्याद्विनायकीमिति
॥ अथविनायकशांतिसंभाराः ॥ सिद्धार्थाः ॥ गोघृतम् ॥ सर्वौषध्यः ॥ प्रियंगुः ॥
नागकेशरम् ॥ चंदनम् ॥ अगरु ॥ कर्पूरः ॥ कस्तूरी ॥ सप्तमृदः ॥ अश्वस्थानात् ॥
गजस्थानात् ॥ वल्मीकात ॥ सरित्संगमात् ॥ अशोष्यह्रदात ॥ राजद्वारात ॥
गोगोष्ठात् ॥ ७ ॥ गोरोचनम् ॥ चंदनम् ॥ कुंकुमम ॥ अगरुप्रभृतयो गंधाः ॥ गुग्गु
लुः ॥ अव्रणाश्चत्वारःकुंभाः ॥ आनडुहंरोहितचर्म ॥ भद्रासनम् ॥ श्रीपर्णिपीठम् ॥
चूतादिपंचपल्लवाः ॥ चतस्रःस्रजः ॥ अहतवस्त्राणि ॥ श्वेतवस्त्रम ॥ सार्षपतैलम् ॥
औदुंबरवृक्षोद्भवःस्रुवः ॥ शूर्पम् ॥ सकृत्फलीकृतास्तंडुलाः ॥ तिलपिष्टम् ॥ तिलपिष्ट
मिश्रितौदनः ॥ शूद्रवर्णो ॥ पकापक्कंमांसम् ॥ पकापक्काश्चमत्स्याः ॥ द्विजवर्णेमा

षपिष्टमयंमत्स्यमांसंच ॥ चित्रविचित्राणिपुष्पाणि ॥ सुगंधिद्रव्याणि ॥ अद्रव
णं ॥ त्रिविधासुरा ॥ गौडी ॥ पैष्टी ॥ माध्वीच ॥ द्विजवर्णे ॥ पयोगुडलवणमि
श्रगौडी ॥ पयोलवणमाषपिष्टमिश्रपैष्टी ॥ पयोमधुलवणमिश्रमाध्वी ॥ मूलकः ॥
कंदाकारोभक्ष्यइत्यर्थः ॥ पूरिकाः ॥ अपूपाः ॥ ३ ॥ स्नेहपक्वगोधूमविकारइत्य
र्थः ॥ उंडेरकस्रजः ॥ ३ ॥ माषपिष्टदामयापोतास्रजइत्यर्थः ॥ दध्योदनम् ॥ पा
यसम् ॥ गुडमिश्रशाल्यादिपिष्टम् ॥ मोदकाः ॥ दूर्वाः ॥ यजमानपत्न्योरहतवस्त्रा
णि ॥ विनायकांबिकयोः सौवर्ण्योर्द्वेप्रतिमे ॥ इतिविनायकशांतौसंभाराः ॥ अ
थप्रयोगः ॥ उक्तकालेपवित्रपाणिरधिकारीप्राणानायम्यदेशकालौसंकीर्त्य ॥ अ
द्ये० मम अमुकस्य कर्तव्यउपयने विवाहेनिश्चयोत्तरं कस्यचिदमुकसपिंडगोत्र ॥२२९॥
जपुरुषस्यसंजातमृतिजनितप्रतिकूलसकलदोषपरिहारद्वारावधूवरयोः आयुरभि

वृद्धिपूर्वकसंतत्यविच्छेदसकलभूतिसिद्ध्यर्थं श्रीपरमेश्वरप्रीत्यर्थं सनवग्रहमखांविनायकशांतिंकरिष्ये ॥ वाअस्यकुमारस्यउपनयनकर्मणोनिर्विघ्नफलसिद्ध्यर्थंविनायकशांतिंकरिष्ये ॥ इतिसंकल्पः ॥ तदंगत्वेनगणेशपूजनादिनांदीश्राद्धांतंकृत्वाऽऽचार्यवरणंकुर्यात ॥ आचार्यस्तुयथास्वर्गेशक्रादीनांबृहस्पतिः ॥ तथा० ॥ एवंचतुरःपराशरमतेष्टौवाऋत्विजोवृणुयात् अष्टौचेत्तेषुचत्वारोस्वस्तिवाचकाः ॥ तथाचत्वारःस्वस्तिवाचकाइतिमदनरत्ने ॥ अस्ययागस्य० ॥ १ ॥ तेषांवस्त्रादिभिःपूजनम् ॥ ततःसाचार्योयजमानोवामहस्तेगौरसर्षपान्गृहीत्वारक्षोहणमित्यादिमंत्रैः सर्षपान्विकीर्य ॥ गायत्र्यादिभिर्मंत्रैःपंचगव्यंकृत्वा ॥ अपोहिष्ठेतित्रिभिर्मंत्रैःकर्मभूमिंप्रोक्ष्य ॥ भूरसीतिमंत्रेणभूमिंपूजयेत् ॥ ततआचार्यःपंचवर्णैःशुक्लैर्वापिष्टैर्मध्येस्व

१ यज्ञियमध्यदेशे ।

स्तिकंकृत्वा तदुपरिआनडुहंचर्म प्राग्ग्रीवमुत्तरलोमतदभावेप्रागग्रंकुशानास्तीर्यंतत्र श्रीपर्णिकाष्ठजं पीठमुत्तरच्छदं संस्थाप्य तच्छ्वेतवस्त्रेणाच्छाद्य तच्चतुर्दिक्षुचत्वारिस्व स्तिकानिकृत्वा तेषुप्रागादितएकवर्णांश्चतुरः कुंभान्महीद्यौरित्यादिमंत्रैः पूर्णपात्रांतं चतुर्ब्राह्मणैः पृथक्पृथक् मन्त्रावृत्त्यासंस्थापयेत् ॥ तत्रविशेषः ॥ कलशेषुह्रदोदकं नदीसंगमोदकेनापूर्यपंचमृदःक्षिपेत् ॥ पंचमृद्यथा ॥ अश्वस्थानाद्गजस्थानाद्व ल्मीकात्संगमाद्ध्रदादिति ॥ उद्धृतासिवराहेणकृष्णेनशतबाहुना ॥ मृत्तिकेहरमेपा पंयन्मयादुष्कृतंकृतमितिमंत्रेणाक्षिपेत् ॥ गंधानिक्षेपेचंदनागरुकेशरकस्तूरीकर्पूरगो रोचनगुग्गुलंनिक्षिपेदिति ॥ चंदनमालाविभूषितान्कृत्वा ॥ कलशस्यमुखेविष्णु रित्यादिदेवदानवइत्यंतंपठेत ॥ ततश्चतुर्दिक्षुचत्वार ऋत्विजः त्वन्नोऽअग्नेतिमंत्रे

णवरुणमावाह्य षोडशोपचारैः संपूज्य ॥ आनोभद्राः० ॥ १ ॥ शन्नोवातः० ॥
॥ २ ॥ इत्यादिस्वशाखोक्तशांतिकमंत्रान्पठेयुः ॥ ततआचार्योभद्रासनस्थपूर्वतो
होमार्थंस्थंडिलंकृत्वा ॥ तदीशान्यांहस्तमात्रवेदिकायांपीठेवस्त्रादौवामहीद्यौरित्या
दिपूर्णपात्रांतंकलशंसंस्थाप्य ॥ ततःस्वर्णमयविनायकांबिकामूर्त्योरग्न्युत्तारणपूर्वकं
प्राणप्रतिष्ठांकृत्वा ॥ कलशोपरिसंस्थाप्य ॥ आवाहयेत् ॥ तत्रमंत्रः॥ ॐ तत्पुरुषायवि
द्महेवक्रतुंडायधीमहि ॥ तन्नोदंतिःप्रचोदयात् ॥ इतिविनायकम् ॥ सुभगायैविद्महे
काममालिन्यैधीमहि ॥तन्नोगौ० इत्यंबि० हेमप्र० गौरीमावा०अपरार्केभविष्येत्वन्या
अपिउक्ताःतत्परितोयथावकाशंप्रतिमास्वक्षतपुंजेषुवा२ योमेकेशम् ॥ पार्वतीम्॥भीम

---

१ गणानान्त्वाअम्बिकेतिमंत्रावुक्तौशांतिमयूखे। २ एतादेवताःअपरार्कोक्तभविष्यत्पुराणानुसारेण।

जम् ॥ वासुदेवम् ॥ अर्कमंडलम् ॥ सोममंडलम्॥भौमम्॥बुधम्॥बृहस्पतिम्॥शुक्रम्॥
शनैश्चरम् ॥ राहुम् ॥ केतुम्॥बाहुलेयम्॥ विष्णुम् ॥ एतान्॥ इंद्रादिलोकपालांश्चावा
हनादिनैवेद्यांतैरुपचारैःसंपूज्य ॥ भद्रासनस्यपूर्वतःकृतेस्थंडिलेग्निस्थापनंकुर्यात् ॥
॥ तद्यथा ॥ अद्यपू॰ अस्मिन्सग्रहमखविनायकशांत्याख्येकर्मणिअस्मिन्स्थंडि
लेपंचभूसंस्कारपूर्वकमग्निस्थापनंकरिष्ये ॥ पंचभूसंस्कारान्कृत्वावरदनामानम
ग्निस्थापयेत ॥ विनायकादुत्तरतोग्रहवेद्यांग्रहावाहनंकुर्यात् ॥ अद्यपू॰ प्रारिप्सित
कर्मणःसांगतासिद्ध्यर्थमादित्यादिग्रहाणांस्थापनंपूजनंचकरिष्ये ॥ तत्रग्रहपीठम
ध्येआदित्याद्यनंतपर्यंतंरजोदर्शनशांतिवद्ग्रहाणांस्थापनंपूजनंचकार्यम् ॥ तदै
शान्यांदध्यक्षतादिभूषितंकलशंविधिनास्थाप्यतत्रवरुणंपूजयेत् ॥ देवदानव॰ भ
वसर्वदा ॥ ततोग्निसमीपमागत्यान्वाधानंकुर्यात् ॥ अद्य॰ अस्मिन्सग्रहमख

विनायकशांत्याख्येकर्मणिदेवतापरिग्रहार्थमन्वाधानंकरिष्ये ॥ पूर्वेणगमनमित्यादिपदार्थानहंकरिष्ये ॥ अथदेवताभिध्यानम् ॥ तत्रप्रजापतिमिंद्रमग्निं सोममाज्येनएकैकयाहुत्यायक्ष्ये ॥ अत्रप्रधानम् ॥ आदित्यादिनवग्रहान् ॥ अर्कादिसमिच्चरुतिलाज्यद्रव्यैः प्रत्येकं प्रतिद्रव्येण चतुश्चतुःसंख्याकाभिराहुतिभिर्यक्ष्ये ॥ विनायकादिपंचदेवताः क्षेत्रपालंवास्तोष्पतिमिंद्रादिलोकपालांश्चतैरेवद्रव्यैः प्रत्येकंप्रतिद्रव्येणद्वाभ्यांद्वाभ्यामाहुतिभ्यांयक्ष्ये ॥ पुनरत्रप्रधानम् ॥ मितम् ॥ समितम् ॥ शालम् ॥ कटंकटम् ॥ कूष्मांडम् ॥ राजपुत्रम् ॥ प्रत्येकमेकैकंयाचर्वाहुत्या ॥ व्योमकेशादीन्प्रत्येकमेकैकयाचर्वाहुत्या यक्ष्ये ॥ शेषेण स्विष्टकृतमित्यादि ॥

१ अष्टाष्टसंख्याकाभिराहुतिभिः तथाचअधिदेवताप्रत्यधिदेवतानांतैरेवद्रव्यैःप्रत्येकंप्रतिद्रव्येण ।

दक्षिणतोऽग्नेर्ब्रह्मासनादिपरिस्तरणांतंपात्रासादनम् ॥ पवित्रच्छेदनादर्भास्त्रयः ॥ प
वित्रेद्वे ॥ प्रोक्षणीपात्रम् ॥ आज्यस्थाली ॥ चरुस्थाली ॥ ग्रहहोमार्थंगृहसिद्धचरु
स्थाली ॥संमार्गकुशाः पंच ॥ उपयमनकुशाःसप्त॥ समिधस्तिस्रः॥ स्रुवः॥आज्यम् ॥
तंडुलाः ॥ पूर्णपात्रम् ॥ पवित्रच्छेदनादिपात्रप्रोक्षणांतंकृत्वा ॥ आज्यस्थाल्यामा
ज्यनिर्वापः ॥ सपवित्रकेचरुपात्रेतंडुलावापःप्रणीतोदकमासिच्य ॥ दक्षिणतआ
ज्याधिश्रयणम् ॥ चरोरधिश्रयणमाज्यस्योत्तरइत्यादिचरुद्वासनांतंकुर्यात् ॥ त
तोगव्याज्यलोलीकृतेनगौरसर्षपकल्केनोद्वर्तितसर्वांगंसर्वौषधीभिः सर्वगंधैश्चलिप्त
शिरसंयजमानमाचार्योमंगलवेदघोषैर्भद्रासनेउपवेशयेत् ॥ ततोयजमानः पूर्ववद्

१ कृतोद्वर्तनादिकस्ययजमानस्यभद्रासनेउपवेशनंकार्यमितिविज्ञानेश्वरमहार्णवबृहत्पाराशराः॥
उपवेशनोत्तरमुद्वर्तनादिकंकार्यमितिमदनरत्नः ॥

तैश्चतुर्भिर्ऋत्विग्भिःस्वस्तिवाचनंकुर्यात् ॥ भोब्राह्मणाःममगृहेअद्यकरिष्यमाणस ग्रहमखविनायकशांत्याख्यस्यकर्मणःबहुपुण्याहंभवंतोब्रुवंतु ॥ अस्तुपुण्याहमि तिद्विजावदेयुः ॥ एवंकल्याणादि० ॥ ततोजीवत्पतिपुत्राभिःसुवासिनीभिर्नीराज नंकार्यम् ॥ ताभ्यश्चयजमानोवस्त्रकंचुक्यादिदद्यादित्याचारः ॥ ततआचार्योयजमा नदक्षिणतउदङ्मुखस्तिष्ठन्पूर्वदेशस्थकलशमादाय ॥ सहस्राक्षंशतधारमृषिभिः पावनंकृतम् ॥ तेनत्वामभिषिंचामिपावमान्यःपुनंतुते ॥ इतिमंत्रेणयजमानमभि षिंचेत् ॥ कुंभमध्येकिंचिज्जलमवशेषणीयम् ॥ दक्षिणंकुंभमादाय ॥ भगंतेवरुणो राजाभगंसूर्योबृहस्पतिः ॥ भगमिंद्रश्चवायुश्चभगंसप्तर्षयोददुः ॥ इतिदक्षिणकुंभे नयजमानमभिषिंचेत् ॥ ततःपश्चिमकुंभमादाय ॥ यत्तेकेशेषुदौर्भाग्यंसीमंतेयच्चमू र्द्धनि ॥ ललाटेकर्णयोरक्ष्णोरापस्तद्घ्नंतुसर्वदा ॥ इतिपश्चिमकुंभेनयजमानमभि

षिंचेत् ॥ ततउत्तरकलशमादाय ॥ सहस्राक्षंशतधारमृषिभिःपावनंकृतम् ॥ तेनत्वा
मभिषिंचामिपावमान्यःपुनंतुते ॥ भगंतेवरुणोराजाभगंसूर्योबृहस्पतिः ॥ भगमिंद्र
श्चवायुश्चभगंसप्तर्षयोददुः ॥ यत्तेकेशेषुदौर्भाग्यंसीमंतेयच्चमूर्धनि ॥ ललाटेकर्ण
योरक्ष्णोरापस्तद्घ्नंतुसर्वदा ॥ इतिमंत्रैरभिषिंचेत् ॥ ततश्चतुर्भिर्मिलितैःकुंभैरभि
षेकः ॥ तत्रमंत्राः ॥ एतद्वैपावनंस्नानंसहस्राक्षमृषिस्मृतम् ॥ तेनत्वांशतधारेणपाव
मान्यःपुनंत्विमाः ॥ शक्रादिदशदिक्पालाब्रह्मेशकेशवादयः ॥ आपस्तेघ्नंतुदौर्भा
ग्यंशांतिंददतुसर्वदा ॥ ॐ सुमित्रियानऽआपऽओषधयःसंतुदुर्मित्रियास्तस्मैसंतुयो

१ अपरार्कमते सहस्राक्षमितित्रिभिर्मंत्रैरेकैककुंभेनाभिषेकः ।
२ चतुःकुंभैःस्नपनमेतद्बृहत्पराशरमते ।

स्मान्द्वेष्टियंचवयंद्विष्मः ॥ समुद्रागिरयोनद्योमुनयश्चपतिव्रताः ॥ दौर्भाग्यंघ्नंतुते सर्वेशांतिंयच्छंतुसर्वदा ॥ पादगुल्फोरुजंघास्यनितंबोदरनाभिषु ॥ स्तनोरुबाहु हस्ताग्रग्रीवास्वंसांगसंधिषु ॥ नासाललाटकर्णेषुकेशांतेषुचयत्स्थितम् ॥ तदापोघ्नं तुदौर्भाग्यंशांतिंयच्छंतुसर्वदा ॥ ततआचार्यःप्राङ्मुखोयजमानस्यपश्चात्तिष्ठन्स व्यपाणिनाकुशान्यजमानस्यशिरसिप्रागग्रान्निधाय ॥ तत्रसार्षपंतैलमौदुंबरस्रुवेणा दाय ॐ मितायस्वाहाइदंमितायनमम ॥ यजमानस्यत्यागः ॥ ॐ संमितायस्वाहाइदं संमि० ॥ ॐ शालायस्वाहाइदंशालाय० ॥ ॐ कटंकटायस्वाहाइदंकटंकटाय० ॥ ॐ कूष्मांडायस्वाहाइदंकूष्मांडाय० ॥ ॐ राजपुत्रायस्वाहाइदंराजपुत्राय ॥ इति

१ अपरार्कमतेशालकटंकटाभ्यामेकैकाकूष्मांडराजपुत्राभ्यामेकैकाइतिचतस्र आहुतयः ।

सं० षडाहुतीर्मस्तके जुहुयात् ॥ ततोग्निसमीपमागत्य ॥ पवित्रेणाज्योत्पवनादिसोमा भा०
॥२३०॥ यस्वाहेत्यंतंकुर्यात् ॥ षड्भिरग्नौश्रपितचरुणाजुहुयात् ॥ :मितायस्वा० इदंमिताय० ॥
ॐ संमितायस्वा० इदंसंमिताय० ॐ शालायस्वा० इदंशालाय० ॥ ॐ कटंकटा
यस्वा० इदंकटंकटाय० ॥ ॐ कूष्मांडायस्वा० इदंकूष्मांडाय०॥ ॐ राजपुत्रायस्वा०
इदंराजपुत्राय० ॥ तेनैवचरुणाव्योमकेशादीनांहोमः ॥ ॐ व्योमकेशायस्वा० इदं
व्योमकेशाय० ॥ यथामंत्रलिंगंत्यागः ॥ ॐ पार्वत्यै० ॥ ॐ भीमजाय० ॥ ॐ वासुदे
वाय ० ॥ ॐ अर्काय० ॥ ॐ सोमाय० ॥ ॐ भौमाय० ॥ ॐ बुधाय० ॥ ॐ बृहस्पत
ये० ॥ ॐ शुक्राय० ॥ ॐ शनये० ॥ ॐराहवे० ॥ ॐकेतवे० ॥ ॐबाहुलेयाय० ॥ ॐ
विष्णवे० ॥ ॐ इंद्राय० ॥ ॐअग्नये० ॥ ॐ यमाय०॥ ॐ निर्ऋतये० ॥ॐ वरुणाय०॥ ॥२३०॥

१ एतानिषड्विनायकनामानीतिविज्ञानेश्वरः ।

ॐ वायवे० ॥ ॐ कुबेराय० ॥ ॐ ईशानाय० ॥ ततोयजमानेनद्रव्यत्यागः कार्यः ॥ इमानिसंपादितानिहवनीयद्रव्याणियायायक्ष्यमाणदेवताभ्यस्ताभ्यःमयापरित्यक्तानिनमम ॥ ततोगणेशायवराहुतिः ॥ ततोग्रहहोमंपूर्ववत्कुर्यात् ॥ ततःस्थापितदेवतानांपंचोपचारपूजा ॥ स्विष्टकृदादिप्राजापत्यांतोहोमः ॥ ततोबलिदानंपूर्ववत् ॥ क्षेत्रपालबलिः ॥ हस्तपादप्रक्षालनम् ॥ ततोहुतशेषचरुणा इंद्रादिलोकपालेभ्योनाममंत्रबैलिंदत्त्वा ॥ शुद्धोदकेनसुस्नातोयजमानःविनायकसमीपेउपविश्य ॥ ॐ तत्पुरुषायवि० तन्नोदंतिः० ॥ १ ॥ ॐ सुभगायैवि० तन्नोगौरी० ॥ २ ॥ द्वाभ्यांमंत्राभ्यांविनायकांबिकाभ्यांनमःध्यायामीत्येवंषोडशोपचारैःसंपू

---

१ अत्रमितादिषड्भ्योमाषभक्तबलिर्देयेतिशांतिमयूखे ।

ज्य ॥ कृताकृततंडुलान् ॥ तिलयुक्तौदनम् ॥ पक्कापक्कमत्स्यान् ॥ पक्कापक्कमांसम् ॥ त्रिविधांसुराम् ॥ पक्कमांसम् ॥ मूलकापूपपूरिकोंडेरजस्त्रग्दध्यन्नपायसगुडमिश्रपिष्टमोदकलड्डुकानिचित्रसुगंधपुष्पकूष्मांडफलानिचैकपात्रेशूर्पेवाकृत्वा ॥ ॐ तत्पुरुषा० तन्नोदंतिः० ॥१॥ ॐ सुभगायै० तन्नोगौरी० विनायकांबिकाभ्यांनमःइममुपहारं निवेदयामि ॥ इतिनिवेद्य ॥ कुंकुमगंधदूर्वासर्षपसहितोदकेनांजलिमापूर्य ॥ ॐ तत्पुरुषाय० ॥ ॐ सुभगायै० ॥ इतिमंत्राभ्यांविनायकांबिकाभ्यामिदमर्घंसमर्पयामि ॥अर्घं



१ कंडिताकंडिततंडुलाः । २ माषमयान् । ३ माषमयम् । ४ पात्रत्रयमध्येलवणयुतं दुग्धम् । ५ माषमयम् ।६ कंदाकारोभक्षविशेषोभूमिकंदः।७ क्षुद्रापूपाइत्यपरार्के महार्णवेतुवर्तुलैश्चतुरस्रैश्चदीर्घैः पिष्टविकारनिर्मिताःस्रजः उंडेरकाउच्यंते अस्नेहपक्वगोधूमविकारापूपाः पूरिकाः प्रसिद्धाः । ८अर्घ्यदानंचोपस्थानं चतुष्पथबल्यनंतरंकार्यमितिमदनरत्ने ।

दत्त्वा ॥ भूमौशिरःकृत्वा ॥ रूपंदेहिजयंदेहिभगवन्देहिमेभगम् ॥ पुत्रान्देहिधनं देहिसर्वान्कामांश्चदेहिमे ॥ इतिविनायकम् ॥ रूपं देहियशोदेहिभगंभगवतिदेहिमे ॥ पुत्रान्देहिधनंदेहिसर्वान्कामांश्चदेहिमे ॥ इत्यंबिकांचोपतिष्ठेत् ॥ सौभाग्यमंबिके देहिरूपंभाग्यंयशोपिच ॥ स्त्रियंपुत्रांश्चकामांश्चतथाशौर्यंचदेहिमे ॥ गणेशमातरंबालेयत्किंचिन्मदभीप्सितम् ॥ एकनाम्नैवतद्देहिदेहिगौरिवरानने ॥ ततःआचार्यः शूर्पेकुशानास्तीर्यकृताकृताद्युपहारंपूर्वोक्तंसर्वंतत्रनिधायचतुष्पथेगत्वा ॥ तत्रभूमिं जलेनाभ्युक्ष्यतत्रकुशानातीर्य ॥ तत्रमंत्रोक्तदेवताःसंपूजयेत् ॥ आदित्यादियंत्रोक्तदेवताभ्योनमःध्यायामीत्येवंषोडशोपचारैःपूजयेत् ॥ तत्रशूर्पंनिधायबलिंदद्यात् ॥

१ इदंप्रार्थनांतरंबृहत्पराशरोक्तम् ।

मंत्रास्तु ॥ बलिंगृह्णंत्विमेदेवाआदित्यावसवस्तथा ॥ मरुतश्चाश्विनौदेवाः 
सुपर्णाःपन्नगाग्रहाः ॥ असुरायातुधानाश्चपिशाचामातरोगणाः ॥ शाकिन्यो
यक्षवेतालायोगिन्यः पूतनाग्रहाः ॥ जृंभकाःसिद्धगंधर्वानागाविद्याधरा नगाः ॥
दिक्पालालोकपालाश्चयेचविघ्नस्यनायकाः ॥ जगतांशांतिकर्तारोब्रह्माद्याश्चमहर्ष
यः ॥ माविघ्नामाचमेपापंमासंतुपरिपंथिनः ॥ सौम्याभवंतुतृप्ताश्चभूतप्रेताः सुखा
वहाः ॥ ततो यजमानोगृहमागत्य हस्तौपादौचप्रक्षाल्याचामेत् ॥ ततआचार्यः
कृतस्यसग्रहमखविनायकशांत्याख्यस्यकर्मणः सांगतासिद्ध्यर्थंवसोर्द्धारासमन्वितं
पूर्णाहुतिहोमंकरिष्ये ॥ उक्तविधिनापूर्णाहुतिंवसोर्द्धारांचहुत्वाभस्मधारणंकुर्यात् ॥
संस्रवप्रा० ॥ कृतस्यसग्रहमखविनायकशांत्याख्यस्यकर्मणः सांगता० ॥ प्रणीताविमोकः ॥ श्रेयोदानम् ॥ यजमानःकृतस्यसग्रहमखविनायकशांत्याख्यस्यकर्मणःसां० 

श्रेयःस्वीकरणंकरिष्ये ॥ आचार्यःकृतस्यस० श्रेयोदानंकरिष्ये ॥ शिवाआपः सं
त्वित्यादि ॥ भवन्नियोगेनमयाअस्मिन्नसग्रहमखविनायकशांत्याख्येकर्मणियत्कृत
माचार्यत्वम्० ॥ ततआचार्यंगंधादिनापूजयेत् ॥ ततोग्रहकलशोदकेनयजमानस्य
सकुटुंबस्याभिषेकः ॥ विनायकांबिकयोः पंचोपचारैःपूजांकृत्वा ॥ यांतुदेवेति वि
सृज्य ॥ इमेविनायकांबिकयोर्मूर्तीआचार्यायतुभ्यमहंसंप्रददे ॥ इदंग्रहपीठंतुभ्य० ॥
अग्निंगंधादिनासंपूज्य ॥ गच्छगच्छेतिविसृज्य ॥ कृतस्यसग्रहमखविनायकशां
त्याख्यस्य कर्मणःसांगतासिद्ध्यर्थं यथाशक्तिब्राह्मणान्नभोजयिष्ये ॥ अनेनकृतेनक
र्मणाश्रीपरमेश्वरःप्रीयताम् ॥ ब्राह्मणेभ्योभूयसींदत्त्वातेभ्यश्चाशिषोगृह्णीयादितिसं
स्कारभास्करेविनायकशांतिप्रयोगः ॥ अथगुर्वर्कबलंज्योतिर्निबंधेगर्गः ॥ स्त्रीणांगुरु
बलंश्रेष्ठंपुरुषाणांरवेर्बलम्। तयोश्चंद्रबलंश्रेष्ठमितिगर्गेणभाषितम्। जन्मत्रिदशमारिस्थः

पूजयाशुभदोगुरुः ॥ विवाहेथचतुर्थाष्टद्वादशस्थोमृतिप्रदः ॥ देवलः ॥ नष्टात्मजाधनवतीविधवाकुशीलापुत्रान्वितास्हतधवासुभगाविपुत्रा ॥ स्वामिप्रियाविगतपुत्रधवाधनाढ्यावंध्याभवेत्सुरगुरौक्रमशोभिजन्म ॥ बृहस्पतिः ॥ झषचापकुलीरस्थोजीवोप्यशुभगोचरः ॥ अतिशोभनतांदद्याद्विवाहोपनयादिषु ॥ राजमार्तंडः ॥ तृतीयषष्ठगश्चैवदशमैकादशस्थितः ॥ रविः शुद्धानिगदितोवरस्यैवकरग्रहे ॥ जन्मस्थेचद्वितीयस्थेपंचमेसप्तमेऽपिवा ॥ नवमेभास्करेपूजांकुर्यात्पाणिग्रहोत्सवे ॥ चतुर्थेवाष्टमेचैव द्वादशेभास्करेस्थिते ॥ वरःपंचत्वमाप्नोति कृतेपाणिग्रहोत्सवे ॥ लल्लः ॥ द्वादशदशमचतुर्थेजन्मनिषष्ठाष्टमेतृतीयेच ॥ प्राप्तेपाणिग्रहणेजीवेवैधव्यमाप्नोतिसाकन्या ॥ मुहूर्तदीपिकायाम् ॥ व्ययत्रिदिग्बंधुमृति १२ । ३ । १० । ४ । ८ ॥ स्थितोऽपिस्त्रियोधनास्तांकसुतायगश्च ॥ विद्वोग्रहैर्देवपुरोहितश्चशुभप्रदश्चेतिवसि

ष्ठ आह ॥ गर्गः ॥ सर्वत्रापिशुभंदद्याद्द्वादशाब्दात्परंगुरुः ॥ पंचषष्ठाब्दयोरेवशु
भगोचरतामता ॥ सप्तमात्पंचवर्षेषुस्वोच्चस्वर्क्षगतोयदि ॥ अशुभोपिशुभंदद्याच्छु
भर्क्षेषुकिंपुनः ॥ रजस्वलायाः कन्यायागुरुशुद्धिंनचिंतयेत् ॥ अष्टमेपिप्रकर्त
व्योविवाहस्त्रिगुणार्चनात् ॥ अर्कगुर्वोर्बलंगौर्यारोहिण्यर्कबलास्मृता ॥ कन्याचंद्र
बलाप्रोक्तावृषलीलग्नतोबला ॥ अष्टवर्षाभवेद्गौरीनववर्षाचरोहिणी ॥ दशवर्षाभवे
त्कन्या अतऊर्ध्वंरजस्वला ॥ ॥ अथबृहस्पतिशांतिः ॥ शौनकः ॥ कन्यको
द्वाहकालेतुआनुकूल्यंनविद्यते ॥ ब्राह्मणस्योपनयनेगुरोर्विधिरुदाहृतः ॥ सुवर्णेनगुरुं
कृत्वापीतवस्त्रेणवेष्टयेत् ॥ ऐशान्यांधवलंकुंभंधान्योपरिनिधायच ॥ मदनंमधु
पुष्पंचपलाशंचैवसर्षपान् ॥ मांसीगुडूच्यपामार्गविडंगीशंखिनीवचा ॥ सहदेवीह
रिक्रातासर्वौषधिशतावरी ॥ बलाचसहदेवीचनिशाद्वितयमेवच ॥ कृत्वाज्यभाग

पयतंस्वशाखोक्तविधानतः ॥ ग्रहोक्तमंडलेऽभ्यर्च्यपीतपुष्पाक्षतादिभिः ॥ देवपूजो
त्तरेकालेततःकुंभानुमंत्रणम् ॥ अश्वत्थसमिधश्चाज्यंपायसंसर्पिषायुतम् ॥ यवव्रीहि
तिलाःसाज्यामंत्रेणैवबृहस्पतेः ॥ अष्टोत्तरशतंसर्वंहोमशेषंसमापयेत् ॥ पुत्रदारस
मेतस्यअभिषेकंसमाचरेत् ॥ कुंभाग्निमंत्रणोक्तैश्चसमुद्रज्येष्ठमंत्रतः ॥ प्रतिमांकुंभ
वस्त्रंचआचार्यायनिवेदयेत् ॥ ब्राह्मणान्भोजयेत्पश्चाच्छुभदः स्यान्नसंशयः ॥ इति
बृहस्पतिशांतिः ॥ ॥ अथाष्टौविवाहभेदाः ॥ तत्रमनुरुद्देशपूर्वकंक्रमेणतल्लक्षणमा
ह ॥ ब्राह्मोदैवस्तथैवार्षः प्राजापत्यस्तथासुरः ॥ गांधर्वोराक्षसश्चैवपैशाचश्चतथाष्ट
मः ॥ आच्छाद्यचार्हयित्वाचश्रुतशीलवतेस्वयम् ॥ आहूयदानंकन्यायाब्राह्मोधर्मः
प्रकीर्तितः ॥ यज्ञेतुविततेसम्यगृत्विजेकर्मकुर्वते ॥ अलंकृतसुतादानंदैवधर्मंप्रचक्ष
ते ॥ एकंगोमिथुनंद्वेवावरादादायधर्मतः ॥ कन्याप्रदानंविधिवदार्षोधर्मःसउच्यते ॥ ॥२३४॥

सहोभौचरतांधर्ममिति यश्चानुभाष्यतु ॥ कन्याप्रदानमभ्यर्च्य प्राजापत्योवि
धिःस्मृतः ॥ अत्रविशेषंपारिजातेभगवान् ॥ अन्येष्वपिविवाहेषुधर्मस्यचरणंसह ॥
यद्यप्युक्तंतथाप्यत्र विशेषोक्तिर्गृहाश्रमात् ॥ आश्रमांतरसंप्राप्तिर्निषेधार्थेति ग
म्यते ॥ नचात्रतस्यांजीवत्यां विवाहस्यपरिग्रहः ॥ आश्रमांतरयोगोवामृतायांभ
वतस्तुताविति ॥ अन्येतुपुत्रादावनग्निसाध्येषुसाहित्यनियमार्थासेति ॥ जातिभ्यो
द्रविणंदत्त्वाकन्यायाश्चस्वशक्तितः ॥ कन्याप्रदानंस्वच्छंदादासुरोधर्मउच्यते ॥ इ
च्छयान्योन्यसंयोगः कन्यायाश्चवरस्यच ॥ गांधर्वःसइतिज्ञेयो मैथुनेकामसंभ
वः ॥ हत्वाच्छित्त्वाचभित्त्वाचक्रोशंतींरुदतींगृहात् ॥ प्रगृह्यकन्याहरणंराक्षसोवि
धिरुच्यते ॥ सुप्तांमत्तांप्रमत्तांवाहोरात्रौयःप्रयच्छति ॥ सपापिष्ठोविवाहानांपैशा
चःप्रथितोष्टमः ॥ आर्षेगोमिथुनादानंचकन्यार्हणम् ॥ नतुतावत्कन्याविक्रयेणनिंद्य

त्वमित्यपिमनुनैवोक्तम् ॥ आर्षेगोमिथुनंशुल्कंकेचिदाहुर्मृषैवतदित्युपक्रम्य ॥ शुल्कं मूल्यम् ॥ अर्हणंतत्कुमारीणामानृशंस्यंहिकेवलमिति ॥ तद्गोमिथुनमानृशंस्यम निंदितम् ॥ किंतुतत्कुमारीणामर्हणंपूजनमित्येवमाचारमदनरत्नेव्याख्यातम् ॥ एषांव्यवस्थामाहमनुः ॥ षडानुपूर्व्याविप्रस्यक्षत्रस्यचतुरोवरान् ॥ विट्शूद्रयोस्तुताने वविद्याद्धर्म्यानराक्षसान् ॥ तत्रब्राह्मादीन्गांधर्वान्तान्ब्राह्मणस्यधर्म्यान्धर्मादनपेतान्विद्यात ॥ क्षत्रस्यआसुरगांधर्वराक्षसपैशाचान् ॥ वैश्यशूद्रयोराक्षसवर्जितानासुरगांधर्वपैशाचानितिव्याख्यातंमदनपारिजाते ॥ एषामपिप्राशस्त्यव्यवस्थामाहमनुः ॥ चत्वारोब्राह्मणस्याद्याःशस्तागांधर्वराक्षसौ ॥ राज्ञस्तथासुरोवैश्येशूद्रेचांत्यस्तुगर्हितइत्यष्टौविवाहभेदाः ॥ कन्याविवाहकालः ॥ सोमोददद्गंधर्वायगंधर्वोददद ग्नयइतिश्रुतिः ॥ तथाचज्योतिर्निबंधे ॥ षडब्दमध्येनोद्वाह्याकन्यावर्षद्वयंयतः ॥

सोमोभुंक्तेततस्तद्वद्गंधर्वश्चतथानलः ॥ यमः ॥ सप्तसंवत्सरादूर्ध्वंसर्ववर्णस्यकन्य
का ॥ विवाहेशस्यतेराजन्नन्यथाधर्मगर्हितइति ॥ यथा ॥ अष्टवर्षाभवेद्गौरीनवव
र्षाचरोहिणी ॥ दशवर्षाभवेत्कन्याअतऊर्ध्वंरजस्वला ॥ १ ॥ गौरींददन्नाकलोके
वैकुंठेरोहिणींददत् ॥ कन्यांददद्ब्रह्मलोकेरौरवेतुरजस्वलाम् ॥ २ ॥ द्वादशेब्देरज
स्वलामित्यन्यपाठः ॥ रत्नमालायांदेवलः ॥ ऊर्ध्वंदशाब्दाद्याकन्यावर्षएकादशेतु
सा ॥ गांधारीस्यात्समुद्वाह्याचिरंजीवितुमिच्छतेति ॥ तत्रसप्तमाष्टमाब्दउत्तमः ॥
नवमदशमोमध्यमः ॥ एकादशाब्दअधमइति ॥ अत्रकन्यावयोब्दोर्ध्वंद्विगुणाब्द
वयस्कवरायकन्यांदद्यात् ॥ अन्यथादानेदोषभागीस्यादिति ॥ ॥ कन्यादाना
धिकारी ॥ माधवीयेनारदः ॥ पितादद्यात्स्वयंकन्यांभ्रातावानुमतेपितुः ॥
मातामहोमातुलश्चसकुल्योजननीतथा ॥ मातात्वभावेसर्वेषांप्रकृतौयदिवर्तते ॥

तस्याममप्रकृतिस्थायांकन्यांदद्युःस्वजातयः ॥ यदातुनैवकश्चित्स्यात्कन्याराजान
माव्रजेदिति ॥ अप्रकृतिस्थाउन्मत्तादिदोषयुतागम्येत्वभावेदातॄणांकन्याकुर्या
त्स्वयंवरमिति ॥ दानप्रशंसा ॥ संवर्तः ॥ अलंकृत्यतुयःकन्यांभूषणाच्छादना
दिभिः ॥ दत्त्वास्वर्गमवाप्नोतिपूज्यतेवासवादिभिरिति ॥ ऋष्यशृंगः ॥ वरगोत्रं
समुच्चार्यप्रपितामहपूर्वकम् ॥ नामसंकीर्तयेद्विद्वान्कन्यायाश्चैवमेवहीति ॥ दानविशेष
स्तु ॥ सर्वत्रप्राङ्मुखोदाताप्रतिग्राहीउदङ्मुखः ॥ एषएवविधिर्यत्रकन्यादानेविपर्ययइ
ति ॥ विवाहेमंडपस्तुप्रागुक्तः ॥ वेदिकाप्रकारः ॥नारदः ॥ हस्तोच्छ्रितांचतुर्हस्तांचतुरस्रां
समंततः ॥ वरस्येतिशेषः ॥ वेदीप्राक्प्रवणाचतुर्वरकराहस्तोच्छ्रिताग्रस्यदोर्जादे
द्वित्रियुगांगुलैरपचितासोक्ताबहिर्वामतः ॥ इतिमुहूर्तमार्तंडेउक्तः ॥ हस्तोच्छ्राया
वेदहस्तैः समंतात्तुल्यावेदीसद्मतोवामभागे ॥ विवाहेकन्याहस्तेनैववेदीनिर्माणमि

तिमुहूर्तचिंतामणौ ॥ कन्याहस्तैःपंचभिःसप्तभिर्वावेदींकुर्यान्मंदिरेवामभागेइतिसं
ग्रहे ॥ अथविवाहदिनात्प्राक्विवाहांगमंगलकार्यकर्तव्यतोच्यते ॥ वराहः ॥ का
र्येविवाहकार्यांगंविवाहोदितभैर्जनैः ॥ विबलंचविधुंहित्वात्रिषष्ठनवमंदिनम् ॥ १ ॥
हेरंबपूजनंतैलहारिद्राचांकुरार्पणम् ॥ पेषणंकंडनाद्यंचवेदिकामंडपादिकम् ॥ यवार
कुंकुमादिश्चलड्डुकाव्यंजनादिनीति ॥ यवारंचिकसा ॥ विवाहेदिनशुद्धिस्तु ॥
उदगयनआपूर्यमाणपक्षेपुण्याहे कुमार्याःपाणिंगृह्णीयात् ॥ तथाच ॥ विवाहशु
द्धिंप्रवदंतिसंतोवात्स्यादयःस्त्रीजनिजन्ममासादिति ॥ अत्रवधूवरयोर्घटितादिविचा
रोगुरुबलादिकंपुण्याहादिविनिर्णयोलग्नशुद्धिश्चेत्यादिज्योतिःशास्त्रेज्ञेयम् ॥ विस्तर
भयान्नात्रलिखितम् ॥ इतिसंस्कारभास्करेविवाहोपयोगीसापिंडयादिसंक्षिप्तनिर्णयः ॥

अथमुख्यब्राह्मविवाहांगभूतोवाग्दानविधिरुच्यते ॥ ज्योतिर्विदादिष्टेविवाहनक्षत्रा
दियुतेशुभकालेप्रशस्तवेषैर्युग्मब्राह्मणैःपुरंध्रीभिर्ज्ञातिबांधवैश्चसहवरपिता गंधाक्षतपु
ष्पयुग्मवस्त्रभूषणतांबूलादिगृहीत्वातूर्यमंगलवाद्यादिभिर्युतः कन्यागृहेआगत्यशुभ
वस्त्रपीठासनेप्रत्यङ्मुखउपविशेत् तद्दत्तासनेकन्यापिताप्राङ्मुखउपविश्यस्वदक्षि
णतःप्राङ्मुखींकन्यामुपवेश्य ॥ स्वपुरतःगणपतिंकलशंचसंस्थाप्य ॥ श्रीगणपत्यादि
स्मरणपूर्वकंदेशकालकीर्तनांते करिष्यमाणकन्याविवाहांग भूतंवाग्दानमहंकरिष्ये
इतिकन्यापितुःसंकल्पेऊहः ॥ करिष्यमाणपुत्रविवाहांगभूतंकन्यानिरीक्षणंपूजनंच
करिष्येइतिवरपितुःसंकल्पः ॥ तदंगंविहितंगणपतिपूजनंवरुणपूजनंच करिष्येइति



१ गणपतिपूजनंकन्यापितुरेवोक्तंरत्नगदाधराभ्यांप्रयोगदर्पणेधर्मसिंधौचउभयोरप्युक्तम् ।

उभौकृत्वा ॥ ततोवरपिताअमुकगोत्रोत्पन्नायअमुकप्रवरान्वितायअमुकशर्मणे
वराय अमुकगोत्रोत्पन्नाममुकप्रवरान्वितामनुकनाम्नींकन्यांभार्यात्वेनवृणीमहे ॥
इतिकन्यापितरं ब्रूयात् ॥ ततोदाता भार्यासुहृद्बंध्वनुमतिंगृहीत्वा यथोक्तमनु
वाद्यवरांवृणीध्वमितिवदेत् ॥ ततोवरपिताकन्यानिरीक्षणपूर्वकंकुंकुमाक्षतपुष्पयुग्म
वस्त्रभूषणतांबूलादिभिः कन्यांस्थानेपूजयेत्संप्रदायागतमंत्रैः ॥ ततोदाताप्रत्य
ङ्मुखोपविष्टवरपितरंगंधतांबूलादिभिःपूजयेत् ॥ सचवरपितादातारंपूजयेत् ॥
ततोदाताहरिद्राखंडयुतपंचपूगीफलानि गृहीत्वापठेत् ॥ अव्यंगेऽपतितेऽक्लीबेदश
दोषविवर्जिते ॥ इमांकन्यांप्रदास्यामिदेवाग्निद्विजसन्निधौ ॥ १ ॥ अमुकसगोत्रो

---

१ गदाधरेणगोत्राद्युच्चारंविनैवकन्यावरणमुक्तम । २ गोत्रोच्चारपूर्वकंवृणीध्वमित्यंतंपुनर्वारद्वयंकार्य
मिति प्रयोगरत्नाशयःउक्तस्यपुनर्भाषणमनुवादः । कन्यापूजनंवाचादत्तेतिस्वीकारांतेगदाधरेणोक्तम् ।

त्पन्नायअमुकप्रवरान्वितायअमुकशर्मणःप्रपौत्रायअमुकशर्मणः पौत्रायअमुकशर्म
णःपुत्रायअमुकशर्मणेवराय ॥ अमुकगोत्रोत्पन्नाममुकप्रवरान्विताममुकशर्मणः
प्रपौत्रीममुकशर्मणःपौत्रीममुकशर्मणःपुत्रीममुकनाम्नीमिमांकन्यां ज्योतिर्विदा
दिष्टेमुहूर्तेदास्येइतिवाचासंप्रददे ॥ यदाबध्नन्नितिमंत्रेणहरिद्राखंडपूगीफलानिवर
पितृवस्त्रप्रांतेवद्ध्वाग्रंथिंचंदनेनार्चयित्वापठेत् ॥ वाचादत्तामयाकन्यापुत्रार्थंस्वीकृ
तात्वया ॥ कन्यावलोकनविधौ निश्चितस्त्वंसुखीभव ॥ १ ॥ ततोवरपितापूर्व
वत्हरिद्राखंडयुतपूगीफलानि गृहीत्वा अमुकगोत्रोत्पन्नाममुकप्रवरान्विताममुक
शर्मणःप्रपौत्रीममुकशर्मणः पौत्रीममुकशर्मणः पुत्रीममुकनाम्नीमिमां कन्याममु
कसगोत्रोत्पन्नाय अमुकप्रवरान्वितायअमुकशर्मणः प्रपौत्रायअमुकशर्मणःपौत्राय
अमुकशर्मणः पुत्रायअमुकशर्मणेवराय भवंतोनिश्चिताभवंत्वितिदातृवस्त्रप्रांतेपूर्वव

न्मंत्रेणबद्धाग्रंथिंचंदनेनार्चयित्वापठेत् ॥ वाचादत्तात्वयाकन्यापुत्रार्थंस्वीकृताम
या ॥ वरावलोकनविधौनिश्चितस्त्वंसुखीभव ॥ १ ॥ ततोदातापात्रस्थसिततंदुल
पुंजोपरिशचीमावाह्यकन्याहस्तेनसंपूज्यप्रार्थयेत् ॥ देवींद्राणिनमस्तुभ्यंदेवेंद्रप्रि
यभामिनि ॥ विवाहंभाग्यमारोग्यंपुत्रलाभंचदेहिमे ॥ १ ॥ पुरंध्रीभिर्नीराजनादि
मांगलिकंकार्यम् ॥ विप्रेभ्योगंधतांबूलदक्षिणादिभिःसंपूज्य ॥ तैराशिषोगृहीत्वा ॥
गणपत्यादिविसर्जयेत् ॥ इतिसंस्कारभास्करेवाग्दानविधिः ॥ ॥ ततोविवाहदि
नात्पूर्वंतृतीयषष्ठनवमरहितान्यशुभदिनेविवाहनक्षत्रादियुते वधूवरयोस्तैलहरिद्रा
रोपणंगोधूमपूजनंचकार्यम् ॥ सिंहासनेरथारोहेदंपत्योःपादक्षालने ॥ अभिषेकेसौ
ख्यकृत्येतिष्ठेत्पत्नीतुवामतः ॥ २ ॥ श्राद्धेसदैववामांगेपत्नी चोदकमाहरेत् ॥
वृद्धिश्राद्धादिमांगल्येदक्षिणांगेसदाभवेत् ॥ २ ॥ लाजहोमंसमिद्धोमंमूर्ध्निहोमंतथै

वच ॥ पूर्णाहुतिंवसोर्द्धारां तिष्ठतैवहिकारयेत ॥ ३ ॥ ततो विवाहदिनात्पूर्वदिने
स्वेस्वेगृहेकन्यापितावरपिताचसपत्नीकः कन्यापुत्राभ्यांसहमङ्गलंस्नात्वाऽहतवास
सीपरिधायधृततिलकोलंकारादिभिरलंकृतोबहिः शालायां शुभासनेउपविश्य ॥
स्वदक्षिणतःपत्नींतद्दक्षिणतः संस्कार्यंचोपवेश्य ॥ आचम्यप्राणानायम्यदेशकालौ
संकीर्त्यअस्यअमुकशर्मणः ममपुत्रस्यदेवपितृऋणापाकरणधर्मप्रजोत्पादनसिद्धि
द्वाराश्रीपरमेश्वरप्रीत्यर्थं श्वःकरिष्यमाणविवाहाख्यसंस्कारकर्माहं करिष्ये इतिवर
पक्षे ॥ अस्या अमुकनाम्न्याःममकन्यकायाःभर्त्रासहधर्मप्रजोत्पादनगृह्यपरिग्र
हधर्माचरणेष्वधिकारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं श्वःकरिष्यमाणविवाहाख्यसं
स्कारकर्माहंकरिष्ये इतिकन्यापक्षे ॥ कन्यायाः यदागर्भाधानादिचौलांताष्टसंस्का
राः स्वस्वकालेन कृताश्चेत्तदातिक्रांतसंस्कारलोपजनितप्रायश्चित्तसंकल्पमनादिष्ट

होमंचयथोक्तंकृत्वा विवाहःकार्यः ॥ तदंगविहितंनिर्विघ्नार्थं गणपतिपूजनंस्वस्तिपु
ण्याहवाचनमविघ्नपूजनंमंडपस्थापनंमातृकापूजनमायुष्यमंत्रजपं वसोर्द्धारानांदी
श्राद्धंचाद्यकरिष्ये ॥ अत्रपुण्याहवाचनांतेप्रजापतिःप्रीयतामितिवदेत् ॥ ग्रहानुकूल
तासिद्ध्यर्थंग्रहमखंकरिष्ये इतिकरणमुभयपक्षेसमानम् ॥ इत्येवंविवाहदिनात्पूर्वंहि
सर्वंकुर्यादिति ॥ ॥ अथविवाहदिनकर्तव्यमुच्यते ॥ ॥ घटीयंत्रनिर्माणस्था
पनपूजनप्रार्थनाप्रकारस्तूपनयनप्रकरणेज्ञेयः ॥ प्रक्षिप्तंघटीअष्टदिशांमध्येयद्दि
ग्गतातत्प्रागादितःक्रमेणफलानि ॥ यथा ॥ प्रार्थितासाघटीतोयेयांदिशंप्रतिगच्छ
ति ॥ पूर्वांशादिफलंवक्ष्येस्थितामध्येशुभप्रदा ॥ सौभाग्यंनिधनंचैवअपमृत्युरुजा
न्विता ॥ भर्तुःप्रियाचवश्याचमान्यासुखधनान्वितेति ॥ यद्यनिष्टदिग्गतापूर्णा
वातदातिथिवारनक्षत्रलग्नदिक्पतीनां विवाहमंगलोत्तरं पूजनमुक्तमंत्रेणायुतजपंतद्द

शांशतिलाज्यैर्होमंगोदानादिकंचकुर्यादिति ॥ ॥ अथगौरीहरपूजनम् ॥ ततःक
न्यामातासुधालिप्तकुड्येआम्रवृक्षंकुंकुमेनचंदनेनवाविलिख्यतदग्रेभूमौ रंगवल्लीवि
रच्यतत्रकोणचतुष्टये स्थापितकलशश्रेणीनांमध्ये सूत्रवेष्टितदृषदंनिधाय तदुपरिअ
ग्रभागेउपलंनिधाय तत्रवस्त्रेवातंदुलपुंजे अन्योन्यालिंगितगौरीहरयोःप्रतिमांसुवर्ण
रौप्यादिनिर्मितांकात्यायनीमहालक्ष्मीशचीभिः सहपूजयेत् ॥ तत्रमंत्रः ॥ सिंहा
सनस्थांदेवेशींसर्वालंकारसंयुताम् ॥ पीतांबरधरंदेवंचंद्रार्धकृतशेखरम् ॥ करेणाथसु
धापूर्णंकलशंदक्षिणेनतु ॥ वरदंचाभयंवामेनाश्लिष्यचतनुप्रियामितिध्यानमंत्रः ॥
गौरीहरमहेशानसर्वमंगलदायक ॥ पूजांगृहाणदेवेशसर्वदामंगलंकुरु ॥ इतिपूजामं
त्रः ॥ कन्यादेहप्रमाणेनसप्तविंशतितंतुभिः ॥ कृतवर्तिकयादीपंप्रज्वाल्यतैलपूरि
तम् ॥ इति ॥सुवासिनींब्राह्मणान्भोजयेत् ॥ ततोवधूर्मंगलसुस्नाताहृषदग्रेपरिहितासने

पीतवस्त्रंपरिधायकुंकुममाल्यादिभिर्भूषिताउपविश्य ॥ कुंकुममाल्याक्षतान्पुनः
पुनःगौरीहरोपरिउभाभ्यांहस्ताभ्यांप्रक्षिपेदिति ॥ अथशिष्टाचारप्राप्तंसीमांतिकार्चन
मपिलिख्यते ॥ तत्रायंक्रमः ॥ पादप्रक्षालनांतेकुरुशुभतिलकंचाक्षतान्भालदेशउ
ष्णीषंपुष्पमालांशिरसिचकुरुतोद्वर्तनंनारिहस्तात् ॥ दद्याद्धस्तप्रपूर्णंशुभफलम
थतत्संमुखंनारिकेलमेवंसीमांतपूजांप्रकुरुतविधिवदागमार्थंवरस्य ॥ ततोदातागं
धाक्षतपुष्पवस्त्रोष्णीषनीराजनफलतांबूलादिगृहीत्वा पुरंध्रीभिर्ब्राह्मणैश्च सहमंगलतू
र्यघोषपुरःसरं वरगृहेवासस्थलेगच्छेत् ॥ वरःप्रशस्तवेषालंकृतो वस्त्राच्छादितपीठे
प्राङ्मुख उपविशेत् ॥ तत्पुरतःदाताप्रत्यङ्मुखउपविश्याचम्य देशकालौस्मृत्वा
कन्याविवाहार्थमागताय स्नातकायवरायसीमांतिकेनार्चयिष्ये ॥ तदंगत्वेननिर्वि
घ्नतार्थंगणपतिवरुणपूजनंकरिष्येइतिकृत्वा ॥ ततोवरपूजनम् ॥ ॐ विराजोदोहो

सिविराजोदोहमसीयमयिपाद्यायैविराजोदोहः ॥ १ ॥ इतिमंत्रेणपादप्रक्षालनम् ॥ ॐ सुचक्षा० इतिमंत्रेणगंधम् ॥ अनाधृष्टाइत्यक्षतावंदनम् ॥ ॐ युवासुवासेतिवस्त्रो ष्णीषम् ॥ ॐ यद्यशोप्सरसामि० इतिमंत्रेणपुष्पम् ॥ ॐ वसाःपवित्रमसीतितै लारापणंकार्यम् ॥ तैलंमस्तकेक्षिपेत् ॥ ॐ ऋतवंस्त्थऽऋतावृधंऽऋतुष्ठास्थंऽऋतावृ धं॰॥ घृतश्च्युतोंमधुश्च्युतोंविराजोनामंकामदुघाऽअक्षीयमाणाः ॥ १ ॥ ॐ ऋतव स्थेयृतवो ह्येतऽऋतावृधऽइति सत्यवृधऽइत्येतदृतुष्ठास्थऽऋतावृधऽइत्यहोरात्राणि वाऽइष्टकाऽऋतुषुवाऽअहोरात्राणितिष्ठंतिघृतश्च्युतोमधुश्च्युतऽइतितदेनाघृतश्च्युत श्चमधुश्च्युतश्चकुरुते ॥ १॥ विराजोनामेत्येतद्वैदेवाऽएताऽइष्टकानामभिरूपाह्वयन्तय थायथैनाऽएतदाचक्षतेताऽएनानभ्युपावर्तताथ लोकंपृणाऽएवपराच्यस्तस्थुरहितना

न्योनिमेमिहत्युस्ताविराजोनामाकुर्वततताऽएनानभ्युपावर्तंत तस्माद्दशदशेष्टकाऽउ
पधायलोकंप्रेणयाभिमंत्रयतेतदेनाविराजःकुरुते दशाक्षराहिविराट्कामदुघाऽअक्षीय
माणाऽइतितदेनाः कामदुघाऽअक्षीयमाणाःकुरुते ॥ २ ॥ इतिमंत्रेणवरहस्तेसम्मुखं
श्रीफलंदेयंसुमुहूर्तमस्त्वितिविप्राःपठेयुः ॥ अनेनवरपूजनेनलक्ष्मीनारायणःप्रीयताम् ॥
नानानामगोत्रेभ्योब्राह्मणेभ्योभूयसींदक्षिणांदत्त्वा ॥ तैराशिषोगृहीत्वा ॥ अन्येभ्य
स्तांबूलादिकंदत्त्वागणपत्यादिविसर्जयेत् ॥ इतिसंस्कारभास्करेसीमांतपूजनम् ॥ ततः
शिष्टाचाराद्वरपिताएवंविधिनावस्त्रकुंकुमपुष्पफलैर्वधूंपूजयेदिति ॥ वरःकृतनित्य
क्रियोविधिवत्कृतस्वस्तिवाचनो ब्राह्मणैःसह सात्त्विकाहारंभुक्त्वावाईषद्धौतंनवंश्वेतंस

१ इदंरत्नगदाधरादिषुनदृश्यतेसिंधुदर्पणाभ्यांलिखितम् ॥

दशंपरेणाधृतंवस्त्रयुगलंपरिधायस्वेष्टदेवतापित्रादीन्नमस्कृत्य तैरनुमोदितोयथाविभ
वमश्वादियानमारुह्यधृतसितच्छत्रः स्ववित्तैर्ज्ञातिबांधवैः स्वस्तिनइंद्रेतिसुमंगलसूक्त
पठनपरैर्ब्राह्मणैः पुरंध्रीभिः पूर्णकलशोदकपात्रंकन्यापुष्पाक्षतदीपमालाध्वजलाजैर्मं
गलतूर्यघोषैश्चसह वधूगृहेगत्वातद्द्वारदेशेप्राङ्मुखस्स्थितनीराजनपूर्णकुंभयुतैः स्त्रीपुरु
षैः प्रत्युद्यातोनीराजितस्तन्मंडपंप्रविशेत् तत्रायंक्रमः ॥ साधृक्किर्विष्टरंपाद्याचमपर
मुदकार्घ्यंमधुप्राशनंत्रीनाचामेद्वाङ्मेलेपःसुमनसमुपवीतानिवस्त्राणिभूषाः ॥ का
लंस्मृत्वाग्निंसंस्थापयति अथवरोवस्त्रमेनांप्रदद्यात्सम्मुख्यंपाणिपीडाजिगमिषतिय
दैषीतिवह्निस्मारित्वा ॥ आघारौभूर्भुवाद्याष्टयजतिचक्रताषाडितिद्वादशैताश्चित्ता
द्याविश्वसंख्याकृतिपरिमितयोभ्यात्तसंज्ञाग्निपंच ॥ वध्वाचोत्थायलाजायजतिदश
मितंस्यात्प्रजानांपतेसोदीचींक्रामेत्पदानिस्थितवतउदकेनोत्तरेणाभिषिंचेत् ॥ सू

यैक्षात्वह्निचास्तेध्रुवमसिहृदयालंभसौभाग्यदानं चर्मण्याथोनिवेश्यंत्विह जपतिवरः स्विष्टमेताद्विसप्तरिति ॥ अथमधुपर्कः ॥ तत्रवरस्यार्घदानंस्मर्यते ॥ तत्प्रसंगेन यावंतोघ्यास्तेकथ्यंते ॥ षडर्घ्याभवंति ॥ आचार्यंऋत्विग्वैवाह्योराजाप्रियःस्नात कइति ॥ अथसर्वसाधारणोर्घविधिरुच्यते ॥ बाहुमात्रंहस्तमात्रंवादीर्घंवामावर्तेनपं चविंशतिकुशैर्घटितंविष्टरद्वयम्॥ आचमनार्थंजलम् ॥ पाद्यंपादप्रक्षालनार्थंजलम् ॥ अर्घार्थंशंखपात्रस्थंजलम् ॥ चंदनाक्षतपुष्पाणि ॥ मधुपर्कार्थंदधिमधुघृतंकांस्यपा

---

१ विष्टरलक्षणंविष्टरस्त्रिवृद्दरतिमात्रंकौशेयरज्जुविशेषइतिभर्तृयज्ञः ॥ प्रादेशमात्रंत्रिवृतंकौशमथ वाकाशनिर्मितमितिरेणुः ॥ पंचविंशतिदर्भतरुणमयंकूर्चमितिहरिहरः ॥ पाणिभ्यांविष्टरंगृह्णीयादिति हरिहरः ॥ एकेनपाणिनेतिगदाधरः ॥ आर्द्राभ्यांपाणिभ्यामितिहरिहरः ॥ शुष्केणेतिगदाधरः ॥
२ दध्यलाभेपयोजलंवामध्वलाभेगुडः सर्पिर्वाप्रतिनिधिः ।

त्रेएकीकृतंकांस्यपात्रेणापिहितम् ॥ यज्ञोपवीतवस्त्रालंकरणानि ॥ एवमासाद्य ॥
ततोवरंशुभवस्त्राच्छादितपीठेप्राङ्मुखउपवेश्य ॥ दाताउदङ्मुखःप्रत्यङ्मुखोवा
उपविश्याचम्यप्राणानायम्यदेशकालौस्मृत्वा ॥ कन्याविवाहांगत्वेनआगतंस्नातकं
वरंमधुपर्केणार्चयिष्ये ॥ तत्रांनिर्विघ्नार्थंगणपतिंस्मृत्वा ॥ ॥ ततोदातावरस्याग्रेकृतां
जलिपुटस्तिष्ठन्पठेत् ॥ ॐ साधुभवानास्तामर्चयिष्यामोभवंतम् ॥ ॐ अर्चय ॥
इतिवरोब्रूयात् ॥ विष्टरादीनिअन्यःसंबोधयति ॥ तद्यथा ॥ अर्चकादपरोवि
प्रोविष्टरादीनिमधुपर्कांतानित्रिःसंबोधयति ॥ विष्टरोविष्टरोविष्टरःप्रतिगृह्यताम् ॥
ततोर्घ्योर्घयितुःसकाशाद्विष्टरंप्रतिगृह्णाति ॥ ॐ वर्ष्मोस्मिसमानानामुद्यतामिव

१ विष्टरस्तुपंचविंशतिमयैर्दर्भैरधोमुखाग्रैर्वामावर्तैनयथावेणीभवतितथाग्रेगुंफितैःग्रंथियुतैर्विष्टरंसं
पाद्येतिरत्नमालायाम् । ॥२४३॥

सूर्यः ॥ इमंतममितिष्ठामियोमाकश्चाभिदासति ॥ १ ॥ इतिमंत्रेणविष्टरमुदगग्र
मासनेनिधायउपविशति ॥ पादार्थमुदकंपादार्थमुदकंपादार्थमुदकंप्रतिगृह्यताम् ॥
प्रतिगृह्णामि ॥ सव्यंपादंप्रक्षाल्यदक्षिणंप्रक्षालयतिब्राह्मणश्चेद्दक्षिणंप्रथमम् ॥ ॐ
विराजोदोहोसिविराजोदोहमसीयमयिपाद्यायैविराजोदोहः ॥ १ ॥ इत्यनेनमंत्रेणद
क्षिणंपादंप्रक्षाल्य ॥ ततोवाममनेनैवमंत्रेणेनमंत्रावृत्तिः ॥ पूर्ववद्द्वितीयोविष्टरः ॥ इयां
स्तुविशेषोविष्टरमुदगग्रंभूमौकृत्वातस्योपरिपादौकरोति ॥ ॐ वर्ष्मोस्मीत्यनेनमं
त्रेण ॥ ततोर्घयितुरर्घदानम् ॥ अर्घोऽर्घोऽर्घःप्रतिगृह्यताम् ॥ ॐ आपःस्थयुष्माभिःस

---

१ पादप्रक्षालनार्थंसुखोष्णोदकंताम्रादिपात्रस्थमितिसर्वे ॥ २ अर्घ्यंजलंगंधपुष्पाक्षतबदरीमिश्रंशं
खपात्रस्थमितिभर्तृयज्ञः ॥ गंधपुष्पाक्षततिलशुभ्रसर्षपदूर्वादध्यन्वितंसुवर्णपात्रस्थमितिहारिहरः ।

र्वान्कामानवाप्नवानीतिमंत्रेणोभाभ्यांप्रतिगृह्णाति ॥ ततोर्घ्यंशिरसाभिवंद्यप्रागुदग्वा
निनयन्नभिमंत्रयते ॥ ॐ समुद्रंवःप्रहिणोमिस्वांयोनिमभिगच्छत ॥ अरिष्टास्माकं
वीरामापरासेचिमत्पयः ॥ १ ॥ इत्यनेनमंत्रेणार्घंनिनयेत् ॥ आचमनीयमुदकमा
चमनीयमुदकमाचमनीयमुदकंप्रतिगृह्यताम् ॥ अर्घ्यआचामति ॥ ॐ आमागन्यश
सासर्ठंसृजवर्चसा ॥ तंमाकुरुप्रियम्प्रजानामधिपतिम्पशूनामरिष्टितनूनाम् ॥ १ ॥
इत्यनेनमंत्रेण ॥ ततोद्विराचमनम् ॥ मधुपर्कोमधुपर्कोमधुपर्कःप्रतिगृह्यताम् ॥ ततो
र्घयितुर्हस्तेस्थितंमधुपर्कमर्घ्यईक्षते ॥ ॐ मित्रस्यत्वाचक्षुषाप्रतीक्षतेइत्यनेनमंत्रेण ॥
देवस्यत्वेतिप्रतिगृह्णाति ॥ ततोमधुपर्कंप्रतिगृह्यसव्येपाणौकृत्वापिधानंनिष्काश्य

१ अर्घ्यंशिरसाभिवंद्य भूमौप्रवाह्या भिमंत्रयेदितिहरिहरगदाधरौ अत्रतुवासुदेवाशयोगृहीतः ।
२ आचमनार्थंकमंडलुसंभृतंजलम् ॥ स्मार्ताचमनंकेशवाद्यैस्त्रिभिःपीत्वेत्यादि ।

दक्षिणस्यानामिकयात्रिःप्रयौति मधुपर्कंत्रिःप्रदक्षिणमालोडयति ॥ ॐ नमःश्यावा
स्यायान्नशनेयतऽआविद्धंतत्तेनिष्कृन्तामि ॥ १ ॥ इत्यनेनमंत्रेणानामिकांगुष्ठेन
चत्रिर्निरुक्षयति ॥ तस्यत्रिःप्राश्नाति ॥ ॐ यन्मधुनोमधव्यम्परमꣳरूपमन्नाद्यम् ॥
तेनाहंमधुनोमधव्येनपरमेणरूपेणान्नाद्येनपरमोमधव्योन्नादोसानि ॥ इत्यनेनमं
त्रेणाश्नाति ॥ पुनरप्यनेनैवमंत्रेणवारद्वयमुच्छिष्टमेवप्राश्नाति ॥ तांबूलेक्षुफलेचैव
भुक्तेस्नेहानुलेपने ॥ मधुपर्केचसोमेचनोच्छिष्टं मनुरब्रवीदितिवचनात् ॥ मधुमती
भिर्वाप्रत्यृचंपुत्रायांतेवासिनेवोत्तरतऽआसीनायोच्छिष्टंदद्यात्सर्वं वाप्राश्नीयात्प्राग्वा
ऽसंचरेनिनयेत् ॥ आचम्य ॥ प्राणान्संमृशति ॥ ॐ वाङ्मऽआस्येस्तु ॥ इ

१ प्राणायतनस्पर्शःसजलपाणिनाकार्यइतिहरिहराशयः ॥ जलरहितेनपाणिनेतिगदाधरः ॥
प्राणायतनस्पर्शान्तमेवमधुपर्ककर्मकलौभवतीतिसंप्रदायभाष्ये ॥

तिमुखंकराग्रेणस्पृशेत ॥ ॐ नसोर्मेप्राणोस्तु ॥ इतितर्जन्यंगुष्ठाभ्यांनासारंध्रद्वयं स्पृशेत ॥ ॐ अक्ष्णोर्मेचक्षुरस्तु ॥ इतिअनामिकांगुष्ठाभ्यांचक्षुर्द्वयंयुगपत् ॥ ॐ कर्णयोर्मेश्रोत्रमस्तु ॥ इतिमध्यमांगुष्ठाभ्यांदक्षिणकर्णम् ॥ अनेनैववामकर्णम् ॥ ॐबाह्वोर्मेबलमस्तु ॥ इतिकराग्रेणदक्षिणबाहुम् ॥ एवंवामबाहुम् ॥ ॐ ऊर्वोर्मऽ ओजोस्तु ॥ इतियुगपद्धस्तेनोरू ॥ ॐ अरिष्टानिमेङ्गानितनूस्तन्वामेसहसंतु ॥ ॥ इति शिरःप्रभृतिपादांतानि सर्वांगानिउभाभ्यां हस्ताभ्यामालभते ॥ ॥ अथगवा

१ सर्वांगालंभउभाभ्यांकार्यइतिहरिहरः एकेनपाणिनेतिगदाधरः ॥ २ यज्ञविवाहयोरमांसोर्घोन भवतियज्ञमधिकृत्यविवाहंचाधिकृत्यकुरुतेत्येवंप्रयोगः ॥ गोरालंभश्चकलिवर्जितेकालेभवति ॥ उत्सर्गस्यचविवाहयज्ञयोरप्राप्तत्वात् ॥ गौरित्याद्युच्चारणंविवाहयज्ञयोःकलौनप्रवृत्तिरितिगदाधरः ॥ गोर्निषेधात्तत्स्थानेअजालंभःपायसंवेतिजयरामः ॥ किंचिद्द्रव्यंदेयमितिसंस्कारकौस्तुभे ॥

लंभनम् ॥ ॥ यद्यपिसूत्रकारेणगवालंभोनियमेनउक्तस्तथापिमधुपर्केयशोवर्धनइ
तिस्मृत्यंतरबलात्त्याज्यएव ॥ अतःकलियुगेउत्सर्गएव ॥ अथवातन्निष्क्रयद्रव्यो
त्सर्गः ॥ तत्प्रयोगस्तु ॥ वरस्यसमीपेभूमौउदगग्रदर्भानास्तीर्य ॥ दातावरहस्ते
निष्क्रयद्रव्यंदत्त्वागौर्गौर्गौरितिपठेत ॥ वरोद्रव्यंगृहीत्वामंत्रंपठेत ॥ ॐ मातारु
द्राणान्दुहितावसूनां ॐ स्वसादित्यानाममृतस्यनाभिः ॥ प्रनुवोचंचिकितुषेजनाय
मागामनागामदितिंवधिष्ट ॥ ममचामुकशर्मणोयजमानस्यपाप्माहतः ॥ ॐ उ
त्सृजततृणान्यत्त्वितिब्रूयात ॥ १ ॥ इत्यनेनवरः कुशोपरिद्रव्यमुत्सृजेत् ॥ ॐ का
रउपांशूत्सृजतेत्याशुच्चैः ॥ अत्रशिष्टाचारप्राप्ताः केचनपदार्थाः लिख्यंते ॥ गंधाद्यलं
कारान्तेषुवरस्यैवमंत्रपाठः ॥ ॐ सुचक्षा० इतिगंधम् ॥ ॐ अनाधृष्टेत्यक्षताः ॥ ॐ
परिधास्यैइत्यनेनपरिधानवस्त्रम् ॥ ॐ यज्ञोपवीतम्० इतियज्ञोपवीतम् ॥ आचम्य ॥ॐ

यशसामेत्युत्तरीयम् ॥ ॐ याऽआहाराज्य० इतिपुष्पमालाग्रहणम् ॥ अथाववध्नीते ॥
ॐ यद्यशोप्सर० इतिमंत्रेण ॥ अथालंकारान् ॥ ॐ अलंकरण० इतिप्रथमंदक्षिणक
र्णे ॥ ततोनेनैववामे ॥ ब्राह्मणेभ्योभूयसींदत्त्वा ॥ तैराशिषोगृहीत्वा दाताअने
नमधुपर्कार्चनेनश्रीलक्ष्मीनारायणः प्रीयतामितिजलमुत्सृजेत् ॥ इतिसंस्कारभा
स्करेमधुपर्कप्रयोगः ॥ ॥ ततोवरोविवाहवेद्यांगत्वाशुभासनेउपविश्य आचम्य
प्राणानायम्यदेशकालौस्मृत्वा ॥ एवंगुण० तिथौ धर्मार्थकामप्रजासिद्ध्यर्थंदारप
रिग्रहणनिमित्तमग्निस्थापनंकरिष्ये ॥ हरिद्राचूर्णनिर्मितेअरत्निमात्रस्थंडिलेपं
चभूसंस्कारान्कृत्वायोजकनामाग्नेःस्थापनम् ॥ पश्चादग्नेस्तेजन्यावधूपादनिवेश
नार्थंस्थापनम् ॥ तेजनीतृणपूलिका ॥ अत्रदेशाचारतोव्यवस्था ॥ दाक्षिणात्या
नामाचारादिदमपिकर्तव्यम् ॥ पतिपुत्रान्वितसुमंगलीस्त्रियावामहस्तेपयःपूरितपा

त्रंधृत्वादक्षिणेन शर्करांसंगृह्यसुमुहूर्तें ओंप्रतिष्ठेतिशब्दसमयेपयःपात्रे गृहीतशर्करा प्रक्षिप्या ॥ तथैवान्यसुभगास्त्रियामंगलपद्यसावधानसमयेवधूवरमस्तकेमंगलाक्षता समर्प्याइतिशिष्टाचारः ॥ अग्निस्थापनोत्तरंगृहमध्येगत्वाप्राङ्मुखींकन्यामवस्थाप्य प्रत्यङ्मुखोवरस्तिष्ठेत् ॥ वधूवरांतरालेअविधुरसुहृदसद्वृत्तयः पुरुषाउदग्दशमंतःप टंधारयेयुः ॥ तत्रदैवज्ञामंगलस्मृतीनांपठनंकुर्युः ॥ विंशोपकाउच्चारणीयाः ॥ सुमुहू र्ते ॐ प्रतिष्ठइत्युच्चैःशब्दंकुर्युः ॥ अत्रावसरेवधूवरकरालंभेवधूःकरधृतपुष्पग्रथितव रणमालांवरकंठेसमर्पयेत ॥ उदक्संस्थंधृतांतःपटनिःसरणंकार्यम् ॥ ततोवरःप्राङ्मु खउपविश्यकन्यांप्रत्यङ्मुखीमुपवेशयेत ॥ ततआचार्यादिद्विजगणाःप्रतिष्ठामंत्र ब्राह्मणंपठेयुः ॥ ॐ मनोजूतिर्जुषतामा० ॥ १ ॥ ब्राह्मणम् ॥ ॐ मनोजूतिर्जुष० ॥

॥ १ ॥ एषवैप्रभूर्नाम॰ ॥ १ ॥ एषवैविभूर्नाम॰ ॥ २ ॥ एषवैव्यष्टिर्नाम॰ ॥ ३ ॥ एषवैविधृतिर्ना॰ ॥ ४ ॥ एषवैव्यावृत्तिर्नाम॰ ॥ ५ ॥ एषवाऽऊर्ज्जस्वान्ना॰ ॥ ६ ॥ एषवैपयस्वान्ना॰ ॥ ७ ॥ एषवैब्रह्मवर्च्चसी॰ ॥ ८ ॥ एषवाऽअतिव्याधी॰ ॥ ९ ॥ एषवैदीर्घोनाम॰ ॥ १० ॥ एषवैक्लृप्तिर्नाम॰ ॥ ११ ॥ एषवैप्रतिष्ठानाम॰ ॥ १२ ॥ ॐ प्रतिष्ठासुप्रतिष्ठितमस्तु ॥ दंपत्योरविच्छिन्नाप्रीतिरस्तु ॥ ततोवरोवध्वैपरिधानार्थं वासोदद्यात् ॥ कुमार्यावासःपरिधानम् ॥ ॐ जराङ्गच्छपरिधत्स्ववासोमवाकृष्टीना मभिशस्तिपावा ॥ शतंचजीवशरदःसुवर्च्चारयिंचपुत्राननुसंव्ययस्वायुष्मतीदंपरिध

१ वस्त्रचतुष्टयमध्येवरःकन्यायाःवस्त्रद्वयंमंत्रेणदत्त्वाद्वयंमंत्रेणधत्तेइतिहरिहरः॥हरिहरगदाधरयोर्मते वरकर्तृकंपरिधानं भर्तृयज्ञमतेआचार्यकर्तृकम् ।

त्स्ववासः ॥ १ ॥ इतिमंत्रपाठोवरस्य ॥ अथोत्तरीयंवासोवरःकन्यायैसमर्पयतिमं
त्रमुक्त्वातांपरिधापयति ॥ ॐ याऽअकृन्तन्नवयंयाऽअतन्वत ॥ याश्चदेवीस्तन्तून
भितोततन्थ ॥ तास्त्वादेवीर्जरसेसंव्ययस्वायुष्मतीदम्परिधत्स्ववासः ॥ १ ॥ ततः
कन्यापितावधूवरयोःपरस्परंसमंजेथामितिप्रैषंदद्यात् ॥ समंजनंसम्मुखीकरणम् ॥ ॐ
समञ्जन्तुविश्वेदेवाःसमापोहृदयानिनौ ॥ सम्मातरिश्वासन्धातासमुदेष्ट्रीदधातु
नौ ॥ १ ॥ सम्मुखीभूतोवरोमंत्रंपठति ॥ ततआचारप्राप्तंमांगल्यतंतुबंधनंकण्ठे
तत्रमंत्रः ॥ मांगल्यतंतुनानेनममजीवनहेतुना ॥ कंठेबध्नामिसुभगेत्वंजीवशरदांश
तम् ॥ १ ॥ ॐ यदाबध्नन्दाक्षायणाहिरण्यꣳशतानीकायसुमनस्यमानाः ॥ तन्मऽआबध्ना

---

१ वरस्यैवमंत्रपाठइतिहरिहरगदाधरौ ॥ उभयोर्मंत्रपाठइतिभर्तृयज्ञः ॥ २ समंजनंसंमुखीकरणमिति
हरिहरगदाधरौ ॥ परस्परंगात्रविश्लेषइतिभर्तृयज्ञः ॥ परस्परानुलेपनमितिकेचित् ।

सं० मिशुतशांरदायायुष्माञ्जरदंष्टिर्यथासम् ॥ इतिमंत्रंवरःपठति ॥ अथसूत्रवेष्टनप्रकारः ॥ भा०
यत्सूत्रंद्विगुणीकृतंशरमितंकंठेवधूंवेष्टयेत्सप्ताख्यंवरवेष्टितंचकटितस्तंतुश्चतुर्विंशाति ॥
॥२४८॥ ईशान्यामपिऊर्ध्वंनिष्कविधिवत्संपूज्य ऊर्णायुतंबध्नीयात्खलुकंकणंद्विजकरेउच्चा
र्यघोषान्वितैः ॥ सूत्रेणपंचवारंचसप्तेनद्विगुणेनच ॥ परित्वेतिचसूक्तेनवेष्टयेत॥विस्तीर्णं
हस्तचत्वारिचतुर्विंशतितंतुभिः ॥ ब्राह्मसूत्रमिदंप्रोक्तंब्रह्मणानिर्मितंपुरेतिअश्वत्थदी
पिकायाम् ॥ ततोद्विजाःपरित्वागिर्वणोगिरइत्यनुवाकेनजुषाणोऽअप्तुराज्यस्यवेतु
स्वाहेत्यंतेनवधूवराविच्छिन्नचतुर्विंशतितंतुभिर्द्विगुणीकृतसूत्रेणयथाचारंवेष्टयेयुः ॥
तच्चवधूदक्षिणस्कंधमारभ्यउभयोः स्कंधेपंचवारंकटिप्रदेशेसप्तवारंवेष्टयेदिति ॥ त ॥२४८॥
त्रमंत्राः ॥ ॐपरित्वागिर्वणोगिरऽइमाभवंतुविश्वतः ॥ वृद्धायुमनुवृद्धयोजुष्टाभवंतु

ज़ुष्टंय: ॥ १ ॥ इन्द्रंस्युस्यूरसीन्द्रंस्यध्रुवोसि ॥ ऐन्द्रमंसिवैश्वदेवमंसि ॥ २ ॥ व्विभू
रंसिप्रवाहंणोवह्निंरसिहव्व्युवाहंन: ॥ श्वात्रोसिप्रचैतास्तुथोसिव्विश्ववेंदाऽउशिग
सि ॥ ३ ॥ उशिगंसिकविरङ्घांरिरसिबम्भांरिरवस्यूरंसि दुवंस्वाञ्छुन्ध्यूरसिमार्ज्जा
लीयं÷सुम्म्राडंसिकृशानु÷परिषद्योसिपवंमानोनभोसिप्प्रतक्कांमृष्टोसि हव्व्यसूदंन
ऽऋतधांमासिस्वर्ज्योतिं:समुद्रोसि ॥ ४ ॥ समुद्रोसिव्विश्वव्व्यंचाऽअजोस्येकंपाद
हिंरसिबुध्न्योव्वागंस्यैन्द्रमंसिसदोस्यृतंस्यद्वारौ मामासंताप्तमध्ध्वंनामध्ध्वंपतेप्प्र
मांतिरस्वस्तिमेस्मिन्पथिदेवयानें भूयान्मित्रस्यंमा ॥ ५ ॥ मित्रस्यंमाचक्षुंषक्षत्ध्व

मन्नयत्सगरात्सगंरास्थसगंरेणनाम्नारौद्रेणानीकेनपातमाग्नयः पिवतमाग्नयोगोपा
यतंमानमोवोस्तुमामाहिंसिष्ट ॥ ६ ॥ ज्योतिरसिविश्वरूपम्विश्वेषान्देवानांसं
मित ॥ त्वंसोमतनूकृद्भ्योद्वेषोभ्योन्यकृतेभ्यऽउरुयंतासिवरूथंस्वाहांजुषाणोअ
प्तुराज्यंस्यवेतुस्वाहा ॥ ७ ॥ ॥ अथकन्यादानसंकल्पः ॥ ॥ ततोदातास्वदक्षिणे
पत्न्यासहदक्षिणवरपार्श्वभागेशुभासने उदङ्मुखउपविश्याचम्यप्राणानायम्यदेश
कालौस्मृत्वा ॥ एवंगुणविशेषणविशिष्टायांशुभपुण्यतिथौअस्मिन्पुण्याहेअस्याःक
न्यायाःअनेनवरेणधर्मप्रजयाउभयोःवंशयोःवंशवृद्ध्यर्थं तथाचममसमस्तपितॄणां
निरतिशयसानंदब्रह्मलोकावाप्त्यादिकन्यादानकल्पोक्तफलावाप्तये अनेनवरेणअ
स्यांकन्यायामुत्पादयिष्यमाणसंतत्या दशपूर्वान्दशपरान्मांच एकविंशतिपुरुषानु

द्भर्तुंब्राह्मविवाहविधिनाश्रीलक्ष्मीनारायणप्रीतयेकन्यादानमहंकरिष्ये ॥ ततोवर हस्तेसुप्रोक्षितादिकरणम् ॥ शिवाआपःसंत्वित्यादिवचनप्रतिवचने ॥ शिवाआपःसं तु ॥ संतुशिवाआपः ॥ सौमनस्यमस्तु ॥ अस्तुसौमनस्यम् ॥ अक्षतंचारिष्टंचास्तु॥ अस्त्वक्षतमरिष्टंच ॥ अत्राःपांतु ॥ सुप्रोक्षितमस्तु ॥ गंधाःपांतु ॥ सुमंगल्यंचास्तु ॥ अक्षताःपांतु ॥ आयुष्यमस्तु ॥ पुष्पंपातु ॥ सौश्रियमस्तु ॥ यत्पापंरोगमशुभमक ल्याणंतद्दूरेप्रतिहतमस्तु ॥ ततोवरस्यगोत्रोच्चारः ॥ अमुकसगोत्रस्यअमुकप्रवर स्यअमुकशर्मणःप्रपौत्राय ॥ अमुकसगोत्रस्यअमुकप्रवरस्यअमुकशर्मणःपौत्राय ॥ अमुकसगोत्रस्यअमुकप्रवरस्य अमुकशर्मणः पुत्रायअमुकशर्मणेश्रीधररूपिणेव राय ॥ ततःकन्यायाश्चगोत्रोच्चारः ॥ अमुकसगोत्रस्यअमुकप्रवरस्यअमुकशर्म

१ योग्यंवरमाहूयालंकृत्यकन्यादानविधिनातस्मैकन्यादानंब्राह्मोविवाहः ॥

णःप्रपौत्रीम् ॥ अमुकसगोत्रस्यअमुकप्रवरस्यअमुकशर्मणःपौत्रीम् ॥ अमुकसगोत्र
स्यअमुकप्रवरस्यअमुकशर्मणःपुत्रीम् ॥ अमुकीनाम्नीं श्रीरूपिणीमिमांकन्याम् ॥ इ
त्येकःपर्यायः ॥ एवमेवपुनःपर्यायद्वयमुक्त्वा ॥ पुनःअमुकसगोत्रोत्पन्नायअमुकप्रव
रान्विताय शुक्लयजुर्वेदांतर्गतमाध्यंदिनीयशाखाध्यायिने अमुकशर्मणे श्रीधररूपि
णेवराय ॥ अमुकगोत्रोत्पन्नाममुकप्रवरान्विताममुकीनाम्नीं श्रीरूपिणीमिमांकन्यां
यथाशक्त्यलंकृतामुपकल्पितोपस्कारसहितां प्रजापतिदैवत्यांपुराणोक्तशतगुणीकृत
ज्योतिष्टोमातिरात्रफलप्राप्तिकामः प्रजोत्पादनार्थंभार्यात्वेनतुभ्यमहंसंप्रददे ॥ इ
त्युक्त्वासकुशजलंकन्यादक्षिणहस्तंवरदक्षिणहस्तेदद्यात्॥वरःप्रतिगृह्णातितांकन्याम् ॥
ॐ द्यौस्त्वाददातुपृथिवीत्वाप्रतिगृह्णातु ॥ इत्यनेनमंत्रेण ॥ कृतैतत्कन्यादानप्रति



१ सकृदितिगंगाधरः ॥

ष्ठासिद्ध्यर्थमिमांयथाशक्तिस्वर्णमयींदक्षिणांतुभ्यमहंसंप्रददेनमम ॥ स्वस्तीति व
रोब्रूयात् ॥ ततोदाताभाजनगोभूदासीमहिषीगजाश्ववाहनगृहशय्यावस्त्रालंकारा
दियथाविभवंसंकल्पपूर्वकंदद्यात् ॥ तत्रगोदानमंत्रः ॥ यज्ञसाधनभूतायाविश्वस्या
घौघनाशिनी ॥ विश्वरूपधरोदेवःप्रीयतामनयागवा ॥ १ ॥ हिरण्यगर्भसंभूतं
सौवर्णंचांगुलीयकम् ॥ सर्वप्रदंप्रयच्छामिप्रीणातुकमलापतिः ॥ इत्यंगुलीयकस्य ॥
क्षीरोदमथनेपूर्वमृद्धृतंकुंडलद्वयम् ॥ श्रियासहसमुद्भूतंददेश्रीःप्रीयतामिति कुण्ड
लयोः ॥ कांचनंहस्तवलयंरूपकांतिसुखप्रदम् ॥ विभूषणंप्रदास्यामिविभूषयतुतेस
देतिवलययोः ॥ परापवादपैशुन्यादभक्ष्यस्यचभक्षणात् ॥ उत्पन्नपापंदानेनताम्रपा
त्रस्यनश्यतु ॥ इतिताम्रजलपात्रस्य ॥ यानिपापानिकाम्यानिकामोत्थानिकृतानि
च ॥ कांस्यपात्रप्रदानेनतानिनश्यंतुमेसदा ॥ इतिभोजनार्थकांस्यपात्रस्य ॥ अग

म्यागमनंचैवपरदाराभिमर्शनम् ॥ रौप्यपात्रप्रदानेनतानिनश्यंतुमेसदेतिजलार्थस्य भोजनार्थस्यचरौप्यपात्रस्य ॥ पूरितंपूगपूगेननागवल्लीदलान्वितम् ॥ पूर्णेनचूर्णपात्रेणकर्पूरपिष्टकेनच ॥ सपूगखंडनंदिव्यंगंधर्वाप्सरसांप्रियम् ॥ ददेदेवनिरातंकंत्वत्प्रसादात्कुरुष्वमामिति तांबूलस्य ॥ दीपस्तमोनाशयतिदीपःकांतिप्रयच्छति ॥ तस्माद्दीपप्रदानेनममवंशप्रवर्धनम् ॥ इतिदीपस्य ॥ एवंदासीमहिषीगजाश्वभूमिस्वर्णपात्रपुस्तकशय्यागृहरजतवृषभानांदानमंत्राःकौस्तुभेद्रष्टव्याः ॥ ॥ ततः कन्यापितापठति ॥ ॥ धर्मार्थकामभिर्नामैर्योनरैःसाध्यतेपरः ॥ धर्मस्त्वयानयासार्धमाचर्तव्यःसवैचिरम् ॥ १ ॥ धर्मेचार्थेचकामेचत्वयेयमतिचारतः ॥ नत्याज्याऽऽज्याहुतिरिवभूतौसंसारभूतिदाम् ॥ २ ॥ यस्त्वयाधर्मश्चरितव्यः सोनयासह ॥ धर्मेचार्थेचकामेचत्वयेयंनातिचरितव्या ॥ वरः ॥ अहंनातिचरामीहयदुक्तंभवताततः ॥ ध

र्मार्थकामकैः कार्यदेहाच्छायेवसर्वदा ॥ १ ॥ नातिचरामीतिवरोवदेत ॥ कोदा
दितिकामस्तुतिंपठेत ॥ ॐकोदात्कस्माऽअदात्कामोदात्कामायादात ॥ कामो
दाताकामः प्रतिगृहीताकामैतत्ते ॥ १ ॥ ॐ अथयदन्यद्ददातिकामेनैवतद्ददाती
दम्मेप्यपुत्रासदितितत्प्रत्येतिकोदात्कस्माऽअदात्कामोदात्कामायादात ॥ कामोदा
ताकामःप्रतिग्रहीताकामैतत्ते ॥१॥ एवंयस्त्वयेत्यादिकामस्तुतिश्चपुनर्द्विर्वक्तव्या ॥ अ
त्रवैदिकाःसयःकामयेतब्राह्मणंपठित्वादंपतिभ्यांसुवर्णाभिषेकंकुर्युः ॥ अत्रब्रह्मणे
अग्नयेस्वाहेत्यादिहवनपरपदंनिर्दिष्टंपरंसंस्त्रवमवनयतीतिसुवर्णरेताअग्निःस्वर्णष्ठीवीति
तन्मथनसुवर्णसंस्त्रवतीतिसिद्धम् ॥ सयःकामयेदितिब्राह्मणंदिवैवपठित्वानतुरात्रौ

१ कामस्तुतिंपठेदितिशाखादेवहरिहरौ ॥

कितुबृहदारण्यंगतत्वेनारण्येनूच्यमानत्वात् ॥ गृहेमंगलमध्येरात्र्यादौअशुचिभिः पठननिषेधात् ॥ श्रुतिवाक्यादिप्रमाणैरवियुक्तत्वात्प्रयोगपशुभावविघाताच्चान्यदविरुद्धंपुरुषसूक्तमृचंवाचमध्यायंवादेवस्यत्वेत्यादिअभिषेकमंत्रान्पठेत् ॥ इतिखंड्डभट्टायाचितपद्धतौ ॥ ॥ ॐ सयइंकामयेतमहत्प्राप्नुयामित्युदगयनऽआपूर्यमाणपक्षेपुण्याहेद्वादशाहमुपसद्व्रती भूत्वौदुंबरेकंठंसेचमसेवा सर्वौषधम्फलानीति सम्भृत्यपरिसमुह्य परिलिप्याग्निमुपसमाधायावृतयाज्यठंसंस्कृत्य पुठंसानक्षत्रेणमन्थठंसन्नीय जुहोति ॥ १ ॥ यावन्तोदेवास्त्वयिजातवेदः॥तिर्यंञ्चोघ्नन्तिपुरुषस्यकामान् ॥ तेभ्योहंभागधेयञ्जुहोमितेमातृप्ताःकामैस्तर्पयंतुस्वाहा ॥ २ ॥ यातिरश्चीनिपद्यसेऽहंविधरणीऽइति ॥ तान्त्वाघृतस्यधारयायजेसठंराधनीमहठंस्वाहा ॥ प्रजापतेनत्व

देवतान्युन्यऽइतितृतीयाञ्जुहोति ॥ ३ ॥ ज्येष्ठायस्वाहा श्रेष्ठायस्वाहेति ॥ अग्नौहु
त्वामुन्थेसर्ठ॑स्रवमुवनयतिप्राणायस्वाहा वसिष्ठायैस्वाहेत्यग्नौहुत्वामुन्थेसर्ठ॑स्रवमुव
नयतिवाचेस्वाहाप्रतिष्ठायैस्वाहेत्यग्नौहुत्वामुन्थेसर्ठ॑स्रवमुवनयतिचक्षुषे स्वाहासम्प
देस्वाहेत्यग्नौहुत्वामुन्थेसर्ठ॑स्रवमुवनयतिश्रोत्रायस्वाहायुतनायस्वाहेत्यग्नौ हुत्वामु
न्थेसर्ठ॑स्रवमुवनयतिमनसेस्वाहाप्रजात्यैस्वाहेत्यग्नौहुत्वा मुन्थेसर्ठ॑स्रवमुवनयतिरेत
सेस्वाहेत्यग्नौहुत्वामुन्थेसर्ठ॑स्रवमुवनयति ॥ ४ ॥ भूतायस्वाहेति ॥ अग्नौहुत्वामु
न्थेसर्ठ॑स्रवमुवनयतिभविष्यतेस्वाहेत्यग्नौहुत्वामुन्थेसर्ठ॑स्रवमुवनयति विश्वायस्वाहे
त्यग्नौहुत्वामुन्थेसर्ठ॑स्रवमुवनयतिसर्वायस्वाहेत्यग्नौहुत्वामुन्थेसर्ठ॑स्रवमुवनयति॥ ५ ॥

॥ पृथिव्यैस्वाहेति ॥ अग्नौहुत्वामन्थेसर्ठंस्रवमवनयत्यन्तरिक्षायस्वाहेत्यग्नौ
हुत्वामन्थेसर्ठंस्रवमवनयतिदिवेस्वाहेत्यग्नौहुत्वामन्थेसर्ठंस्रवमवनयति दिग्भ्यःस्वा
हेत्यग्नौहुत्वामन्थेसर्ठंस्रवमवनयतिब्रह्मणेस्वाहेत्यग्नौहुत्वामन्थे सर्ठंस्रवमवनयतिक्ष
त्रायस्वाहेत्यग्नौहुत्वामन्थेसर्ठंस्रवमवनयति ॥ ६ ॥ भूःस्वाहेत्यग्नौहुत्वाम
न्थेसर्ठंस्रवमवनयतिभुवःस्वाहेत्यग्नौहुत्वामन्थे सर्ठंस्रवमवनयति स्वःस्वाहेत्यग्नौहु
त्वामन्थेसर्ठंस्रवमवनयतिभूर्भुवःस्वःस्वाहेत्यग्नौहुत्वामन्थेसर्ठंस्रवमवनयति ॥ ७ ॥
अग्नयेस्वाहेति ॥ अग्नौहुत्वामन्थेसर्ठंस्रवमवनयतिसोमायस्वाहेत्यग्नौहुत्वामन्थेस
र्ठंस्रवमवनयतितेजसेस्वाहेत्यग्नौहुत्वामन्थेसर्ठंस्रवमवनयतिश्रियैस्वाहेत्यग्नौ हुत्वा

मुन्थेसर्ठंस्रवमुवनयतिलक्ष्म्यैस्वाहेत्यग्नौहुत्वामुन्थेसर्ठंस्रवमुवनयतिसवित्रे स्वाहेत्य
ग्नौहुत्वामुन्थेसर्ठंस्रवमुवनयति सरस्वत्यैस्वाहेत्यग्नौहुत्वामुन्थेसर्ठंस्रवमुवनयतिवि
श्वेभ्योदेवेभ्यःस्वाहेत्यग्नौहुत्वामुन्थेसर्ठंस्रवमुवनयतिप्रजापतये स्वाहेत्यग्नौहुत्वामु
न्थेसर्ठंस्रवमुवनयति ॥ ८ ॥ अथैनमभिमृशति ॥ भ्रमसिज्वलदसिपूर्ण
मसिप्रस्तब्धमस्यैकसभमसिहिङ्कृतमसिहिङ्क्रियमाणमस्युद्गीथमस्युद्गीयमानमसिश्रावि
तमसि प्रत्याश्रावितमस्यार्द्रेसन्दीप्तमसिविभूरसिप्रभूरसिज्योतिरस्युन्नमसिनिध
नमसिसँवर्गोसीति ॥ ९ ॥ अथैनमुद्यच्छति ॥ अमोस्यामर्ठंहितेमयि ॥ सहिरा
जेशानोधिपतिः समाराजेशानोधिपतिङ्करोत्विति ॥ १० ॥ अथैनमाचामति ॥

सं० तत्सवितुर्वरेण्यंमधुवाताऽऋतायतेमधुक्षरंतिसिंधवः ॥ माध्वीर्नःसन्त्वोषधीः ॥ भूः भा०
॥२५४॥ स्वाहा ॥ ११ ॥ भर्गोदेवस्यधीमहि ॥ मधुनक्तमुतोषसोमधुमत्पार्थिवꣳरजः ॥ मधुद्यौ
रस्तुनःपिताभुवःस्वाहा ॥ १२ ॥ धियोयोनः प्रचोदयात् ॥ मधुमान्नोवनस्पतिर्म
धुमाँ २ ऽअस्तुसूर्यः ॥ माध्वीर्गावोभवन्तुनः ॥ स्वःस्वाहेतिसर्वांश्चसावित्रीम
न्वाहसर्वाश्चमधुमतीःसर्वाश्चव्याहृतीरहमेवेदꣳसर्वम्भूयासम्भूर्भुवःस्वः स्वाहेत्यंत
तऽआचम्यप्रक्षाल्यपाणीजघनेनाग्निम्प्राक्शिराःसंविशति ॥ १३ ॥ प्रातरादि
त्यमुपतिष्ठते ॥ दिशामेकपुण्डरीकमस्यहम्मनुष्याणामेकपुण्डरीकंभूयासमितिसथे ॥२५४॥
तमेत्यजघनेनाग्निमासीनोवꣳशञ्जपति ॥ १४ ॥ तꣳहैतमुद्दालकऽआरुणिर्वासज

नेयाययाज्ञवल्क्यायांतेवासिनऽउक्थो वाचापियएनंठंशुष्केस्थाणौनिषिंचेज्जायेर

ञ्च्छाखाःप्ररोहेयुःपलाशानीति ॥ १५ ॥ एतमुहैववाजसनेयोयाज्ञवल्क्यो

मधुकाय पैङ्ग्यायान्तेवासिनऽउक्थोवाचापियएनंठंशुष्केस्थाणौ निषिञ्चेज्जायेर

ञ्च्छाखाःप्ररोहेयुःपलाशानीति ॥ १६ ॥ एतमुहैवमधुकःपैंग्यश्चूडायभागवित्त

येन्तेवासिनऽउक्थोवाचापियएनंठंशुष्केस्थाणौ निषिञ्चेज्जायेरञ्च्छाखाःप्ररोहेयुःप

लाशानीति ॥ १७ ॥ एतमुहैवचूडोभागावित्तिर्जानकयऽआयस्थूलायान्ते

वासिनऽउक्थोवाचादियएनंठंशुष्केस्थाणौ निषिञ्चेज्जायेरञ्च्छाखाःप्ररोहेयुःपलाशा

नीति ॥ १८ ॥ एतमुहैवजानकिरायस्थूणः सत्यकामायजाबालायान्ते

सं० वासिनऽउक्थोवाचापिस्रएनंठ्ठंशुष्केस्थाणौ निषिञ्चेज्जायेरञ्छाखाःप्ररोहेयुःपलाशा भा०

॥२५५॥ नीति ॥१९॥ एतमुहैवसत्यकामोजाबालोन्तेवासिभ्यउक्थोवाचापिस्रएनंठ्ठंशुष्केस्था

णौनिषिंचेज्जायेरञ्छाखाः प्ररोहेयुःपलाशानीतितमेतन्नापुत्रायवानंतेवासिनेवाब्रू

यात् ॥ २० ॥ चतुरौदुंबरोभवत्यौदुंबरश्चमसऽऔदुंबरःस्रुवऽऔदुंबरऽइध्मऔदुंबर्याऽ

उपमन्थिन्यौ॥२१॥ दशग्राम्याणिधान्यानिभवंति॥ व्रीहियवास्तिलमाषाऽअणुप्रियं

गवोगोधूमाश्च मसूराश्चखल्वाश्चखलकुलाश्चतान्त्साधम्पिष्ट्वादध्नामधुनाघृतेनोपसिं

चत्याज्यस्यजुहोति ॥ २२ ॥ सर्वेषाँवाऽएषवे०॥१॥ कांड१४प्र०७ब्रा०५सुवर्णाभिषेकोऽ ॥२५५॥

स्तु ॥ ततोदातावरंप्रार्थयेत् ॥ कन्येममाग्रतोभूयाःकन्येमेदेविपार्श्वयोः ॥ कन्येमेपृष्ठ

तोभूयास्त्वद्दानान्मोक्षमाप्नुयाम् ॥ १ ॥ कन्यांलक्षणसंपन्नांकनकाभरणैर्युताम् ॥ दा
स्यामिब्रह्मणेतुभ्यंब्रह्मलोकजिगीषया ॥ २ ॥ पृथिव्यादिमहद्भूताःसाक्षिणः सर्वदे
वताः ॥ इमांकन्यांप्रदास्यामिपितॄणांतारणायच ॥ ३ ॥ ममवंशकुलेजातापोषिता
वत्सराष्टकम् ॥ तवविप्रमयादत्तापुत्रपौत्रप्रवर्द्धिनी ॥ ४ ॥ इमांकन्यांशुभांविप्रय
थाशक्तिविभूषिताम् ॥ गोत्रायशर्मणेतुभ्यंदत्तांविप्रसमाश्रय ॥ ५ ॥ इतिप्रार्थ्य ॥ अ
त्रचतुर्थश्लोकस्यद्वितीयपादेयथाकन्यावयोब्दास्तथैवोच्चारणीयम् ॥ पोषितानववर्ष
कंदशवर्षकमिति ॥ ब्राह्मणेभ्योगंधतांबूलंभूयसींदक्षिणांचदत्त्वा ॥ तैराशिषोगृही
त्वा यथाशक्तिब्राह्मणभोजनसंकल्पः ॥ अनेनकन्यादानाख्येनकर्मणाश्रीलक्ष्मी

नारायणःप्रीयताम् ॥ इतिकन्यादानविधिः ॥ ॥ अथाचारप्राप्तंगणपतिपूजनंकंक
णबंधनमक्षतारोपणमाम्रसिंचनमपिकार्यम् ॥ ॥ ततोवरःदेशकालसंकीर्तनांतेम
मचवध्वाःबह्वायुष्यप्राप्त्यर्थं गणपतिपूजनंकंकणबंधनमक्षतारोपणमाम्रसिंचनं च क
रिष्ये ॥ गणानांत्वेतिमंत्रेणगणपतिंसंपूज्य ॥ कंकणप्रकारः ॥ वधूवरयोःपरि
त्वेत्यनुवाकेनवेष्टितान्कंठदेशस्थान्सूत्रतंतूनधोनिष्कास्य त्रिवलीकृत्यकुंकुमाक्ता
न्कृत्वातेषु ऊर्णायुतवृद्धिहरिद्राखंडंबद्धातत्कंकणं वधूवामहस्तेयदाबध्नन्नितिमंत्रे
णवरोबध्नीयात् ॥ कटिप्रदेशस्थांस्तंतूनूर्ध्वंनिष्कास्यतादृशकंकणंकृत्वा तेनैवमंत्रे
णवरदक्षिणहस्तेवधूर्बध्नीयात् ॥ अक्षन्नमीतिमंत्रेणवधूवरयोःपरस्परमक्षतारोपणम् ॥

१ पूजनंचगणेशस्यप्रणम्यचपरस्परम् ॥ परस्परंमुखोच्छिष्टंकर्तव्यंप्रीतिहेतवे ॥ आम्रवृक्षस्यसेको थगौरीपूजनपूर्वकम् ॥ कुंकुमद्रव्यपंकेनस्त्रीणांगीतपुरःसरम् ॥ इतिसंस्कारमुक्तावल्याम् ।

वध्वावसोःपवित्रेत्याम्रसिंचनम् ॥ पित्रा[1]प्रत्तामादायगृहीत्वानिष्क्रामति ॥ ततोवरः पित्राजनकेनप्रत्तांसंकल्प्यदत्तांवधूमादाय प्रतिग्रहविधिनाप्रतिगृहीत्वा पश्चात्तांगृहीत्वाहस्तेधृत्वानिष्क्रामतिगृहमध्यान्मंडपेअग्निसमीपंगच्छेदित्यर्थः ॥ यदैषिमनसादूरंदिशोनुपवमानोवा ॥ हिरण्यपर्णोवैकर्णः सत्वामन्मनसांकरोतुअमुकीतिवधूनामग्रहणंमंत्रपाठोवरस्य ॥ निष्क्रमणप्रभृतिएकःपुरुषउदकुम्भंस्कंधेकृत्वादक्षिणतोग्नेर्वाग्यतःस्थितोभवतिउत्तरतोवाअभिषेकपर्यंतम् ॥ अथैनौसमीक्षयति कन्यापितापरस्परंसमीक्षेथामितिप्रैषेण ॥ ॐ अघोरचक्षुरपतिघ्न्येधिशिवापशुभ्यः सुमनाःसुवर्चाः ॥ वीरसूर्देवकामास्योनाशन्नोभवद्विपदेशंचतुष्पदे ॥ सोमःप्रथमोविविदेगंधर्वोविविदउत्तरः ॥ तृतीयोग्निष्टेपतिस्तुरीयोहंमनुष्यजः ॥ सोमोददद्गं

---

१ आदायप्रतिग्रहविधिनाप्रतिगृह्य ॥ गृहीत्वाहस्तेधृत्वेतिहारिहरः ॥ वस्त्रप्रांतेधृत्वेतिगदाधरः ।

धर्वायगंधर्वोददददग्नये ॥ रयिंचपुत्रांश्चादादग्निर्मह्यमथोऽइमाम् ॥ सानःपूषाशिवत
मामेरयःसानऽऊरूऽउशतीविहर ॥ यस्यामुशंतः प्रहरामशेफंयस्यामुकामाबहवो
निविष्टयै ॥ १ ॥ इत्यंतंवरस्यमंत्रपाठः ॥ इत्येतस्यमंत्रस्यांतेवेदीसन्निधौपरस्पर
मुभयोर्निरीक्षणम् ॥ ततोवधूवरौप्रदक्षिणमग्निंपर्याणीयैकेपश्चादग्नेस्तेजनींकटंवादक्षि
णपादेनप्रवृत्योपविशतः ॥ देशकालौ० प्रतिगृहीतायामस्यांवध्वांभार्यात्वसिद्धयेवि
वाहहोमंकरिष्ये ॥ ततोदक्षिणतोब्रह्मासनादिपात्रासादनंकृत्वानात्रचरुः ॥ पात्रा
सादनानंतरमुपकल्पनीयानि ॥ शमीपलाशमिश्रालाजाः ॥ अश्मा ॥ लोहितमानडु
हंचर्म ॥ तदभावेबर्हिषः ॥ कुमार्याभ्राता ॥ शूर्पम् ॥ दृढपुरुषः ॥ उदकुंभः ॥ आचा

१ तृणपूलकस्यदक्षिणपादेनोल्लंघनंवध्वासहकृत्वोपरिउपविशेत् ॥ इतिहरिहरभर्तृयज्ञयोराशयः ॥
उल्लंघनंविनैवोपविशेदितिप्रयोगरत्नाशयः ।

र्यायवरद्द्रव्यमिति ॥ पवित्रच्छेदनादिपर्युक्षणांतेआंघारावाज्यभागौचजुहुयात ॥ तद्यथा ॥ मनसा ॥ ॐ प्रजापतयेस्वाहा ॥ इदंप्रजा० ॥ ॐ इन्द्रायस्वाहाइदमिंद्रा० ॥ ॐ अग्नयेस्वा० इदम० ॥ ॐ सोमायस्वा० ॥ इदंसो० ॥ अथभूराद्याः प्रायश्चित्ताष्टाहुतयः ॥ ॐ भूःस्वाहाइदम० ॥ ॐ भुवःस्वाहाइदंवा० ॥ ॐ स्वःस्वाहा इदंसूर्या० ॥ ॐ त्वन्नोअग्ने० ॥ इदमग्नीव० ॥ ॐ सत्वन्नोअग्ने० ॥ इदमग्नीव० ॥ ॐ अयाश्चाग्ने० इदमग्नयेअयसे० ॥ ॐ येतेशतं०इदंव० सवि० मरु०स्वर्केभ्य० ॥ ॐ उदुत्तमं० ॥ इदंवरुणायादित्यायादि० ॥ इदंसर्वप्रायश्चित्ताख्यम् ॥ ॥ अथराष्ट्रभृ

---

१ पूर्वाघारस्तूणींस्वाहांविनाहोतव्यः ॥ नस्वाहेतिचनानिरुक्तोहिनोनिरुक्तंहोतातूष्णीमितिमंत्रलिंगादितिगदाधराशयः ॥ प्रजापतयइतिमंत्रेणहोतव्यइतिहरिहराशयः ।

सं० ह्वोमः ॥ ॥ ॐ ऋतुाषाडृतधांमाग्निर्गन्धर्वः सनंऽइदंब्रह्मंक्षुत्रम्पांतुतस्मैस्वाहावाट् ॥ भा०
॥२५८॥ इदमृतसाहेऋतधाम्नेअग्नयेगंधर्वायनमम ॥ १ ॥ ॐ ऋतुाषाडृतधांमाग्निर्गन्धर्वस्त
स्यौषंधयोप्सुरसोमुदोनामताभ्युः स्वाहा ॥ इदमोषधीभ्योप्सरोभ्योमुद्भ्योनमम ॥
॥ २ ॥ ॐ सुठंहितोविश्वसांमासूर्योगन्धर्वः सनंइदम्ब्रह्मंक्षत्रंपांतुतस्मैस्वाहावाट् ॥इदं
सठंहितायविश्वसाम्नेसूर्यायगन्धर्वायन० ॥ ३ ॥ ॐ सुठंहितोविश्वसांमासूर्योगन्धर्व
स्तस्युमरींचयोप्सुरसंऽआयुवोनामंताभ्युः स्वाहा ॥ इदंमरीचिभ्योप्सरोभ्यआयुभ्यो
नम० ॥ ४ ॥ ॐ सुषुम्णः सूर्यरश्मिश्चुन्द्रमांगन्धर्वः सनंइदम्ब्रह्मंक्षत्रंपांतुतस्मैस्वाहावा

१ ऋताषाडित्यादिद्वादशमंत्राः राष्ट्रभृत्संज्ञाः ॥ स्वाहाकुर्यान्नवाडंतेनचैवजुहुयाद्धविः ॥ स्वाहा ॥२५८॥
कारेणहुत्वाग्नौपश्चान्मन्त्रंसमापयेत् ॥ एतेषुमंत्रेषुस्त्रीपुंस्त्वादिहेतुर्महीधरभाष्ये ।

ट्॥इदंसुषुम्णायसूर्यरश्मयेचन्द्रमसेगन्धर्वायन० ॥ ५॥ॐसुषुम्णःसूर्यरश्मिश्चन्द्रमागं
न्धर्वस्तस्यनक्षत्राण्यप्सरसोभेकुरयोनामताभ्यःस्वाहा ॥ इदंनक्षत्रेभ्योप्सरोभ्योभेकु
रीभ्योन० ॥ ६ ॥ ॐ इषिरोविश्वव्यचावातोगन्धर्वःसनऽइदंब्रह्मक्षत्रंपातुतस्मैस्वाहा
वाट् ॥ इदमिषिरायविश्वव्यचसेवातायगन्धर्वायन० ॥७॥ ॐ इषिरोविश्वव्यचावातो
गन्धर्वस्तस्यापोप्सरसऽऊर्ज्जोनामताभ्यःस्वाहा ॥ इदमद्भ्योप्सरोभ्यऽऊर्ग्भ्योनम
म ॥ ८ ॥ ॐ भुज्युःसुपर्णोयज्ञोगन्धर्वःसनइदम्ब्रह्मक्षत्रंपातुतस्मैस्वाहावाट् ॥ इदं
भुज्यवेसुपर्णाययज्ञायगन्धर्वायन० ॥ ९ ॥ ॐ भुज्युःसुपर्णोयज्ञोगन्धर्वस्तस्यदक्षि
णाऽअप्सरसस्तावानामताभ्यःस्वाहा ॥ इदंदक्षिणाभ्योप्सरोभ्यस्तावाभ्योन० ॥

सं॰ ॥ १० ॥ ॐ प्रजापतिर्विश्वकर्म्मामनोगन्धर्वःसनइदम्ब्रह्मक्षत्रंपातुतस्मैस्वाहावाट् ॥ भा॰
॥२५९॥ इदंप्रजापतयेविश्वकर्मणेमनसेगन्धर्वायनमम ॥ ११ ॥ ॐ प्रजापतिर्विश्वकर्म्मामनोगन्धर्वस्तस्यऽऋक्सामान्यप्सरसऽएष्टयोनामताभ्यःस्वाहा ॥ इदमृक्सामेभ्योप्सरोभ्यऽएष्टिभ्योनमम ॥ १२ ॥ अथजयाहोमः ॥ ॥ ॐ चित्तंचस्वाहा इदंचित्तायन॰ ॥ १ ॥ ॐ चित्तिश्चस्वा॰ ॥ इदंचित्त्यैन॰ ॥ २ ॥ ॐ आकूतंचस्वा॰ ॥इदमाकूताय॰ ॥३॥ ॐ आकूतिश्चस्वाहा ॥ इदमाकूत्यैन॰ ॥ ४ ॥ ॐ विज्ञातंचस्वा॰इदंविज्ञातायन॰ ॥ ५ ॥ ॐ विज्ञातिश्चस्वा॰ इदंविज्ञात्यैन॰ ॥ ६ ॥ ॐ मनश्चस्वा

१ चित्तंचेत्यादिजयामंत्राणांचित्तायस्वाहेतिचतुर्थ्यंतेनहोमइति भर्तृयज्ञः ॥ नेतिकर्कादयः ॥ ॥२५९॥
नचेमानिदेवतानामानिकिंतर्हिमंत्राश्चैतेच यथाम्नातंप्रयोक्तव्याइतिगदाधरादयः ।

हा ॥ इदंमनसे० ॥ ७ ॥ ॐ शक्कर्यश्वस्वा० इदंशक्करीभ्योन० ॥ ८ ॥ ॐ दर्श
श्चस्वा०इदंदर्शाय० ॥ ९ ॥ ॐ पौर्णमासंचस्वा० इदंपौर्णमासायन० ॥ १० ॥ ॐ
बृहच्चस्वा०इदंबृहतेन० ॥ ११ ॥ ॐ रथंतरंचस्वा० इदंरथंतरा० ॥ १२ ॥ ॐ प्र
जापतिर्जयानिंद्रायवृष्णेप्रयच्छदुग्रः पृतनाजयेषु ॥ तस्मैविशः समनमंतः सर्वाः स
उग्रः सऽइहव्योबभूवस्वाहा ॥ इदंप्रजापतयेजयानिन्द्रायनम० ॥ १३ ॥ ॥ अ
थाभ्यातानहोमः ॥ ॥ ॐ अग्निर्भूतानामधिपतिःसमावत्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रे
स्यामाशिष्यस्याम्पुरोधायामस्मिन्कर्मण्यस्यांदेवहूत्या७स्वाहा ॥ इदमग्नयेभूता
नामधिपतयेनमम ॥ १ ॥ एवमभ्यातानहोमेप्रत्याहुतौसमावत्वस्मिन्नित्यारभ्य

१ अग्निर्भूतानामित्यादयः पितरः पितामहाइत्यंता अष्टादशमंत्रा अभ्यातानसंज्ञाइतिहरिहरगदाधरौ ।
अग्निर्भूतानामित्यादिसुगन्नः पंथामित्यंताद्वाविंशतिरभ्यातानसंज्ञाइतिकर्ककारिकाकारौ ।

सं० सर्वत्रसमानम् ॥ ॐ इन्द्रोज्येष्ठानामधिपतिःसमावत्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रेस्यामा भा०
॥२६०॥ शिष्यस्याम्पुरोधायामस्मिन्कर्मण्यस्यांदेवहूत्यार्ठस्वाहा ॥ इदमिन्द्रायज्येष्ठानाम
धिपतयेनमम ॥ २ ॥ ॐ यमःपृथिव्याअधिपतिःसमावत्वस्मिन्ब्रह्मण्य० स्वाहा ॥
इदंयमायपृथिव्याअधिपतयेन० ॥ ३ ॥ दक्षिणस्यामन्यपात्रंनिधायतन्मध्येत्या
गः ॥ ॥ प्रणीतोदकोपस्पर्शः ॥ ॐ वायुरंतरिक्षस्याधिपतिः स० स्वाहा ॥
इदंवायवेन्तरिक्षस्याधिपतयेन० ॥ ४ ॥ ॐसूर्योदिवोधिपतिःस० स्वाहा ॥
इदंसूर्यायदिवोधिपतयेन० ॥ ५ ॥ ॐ चन्द्रमानक्षत्राणामधिपतिः समा० स्वाहा ॥

१ पूर्वेत्यागःपरंमृत्योयमत्यागंतुदक्षिणे ॥ पश्चिमेपितृत्यागंचरुद्रत्यागंतथोत्तरे ॥ एषउदकस्पर्शः
इतिकारिकाकारः ॥ एकेप्राशनांतेएकेआचार्याःसंस्रवप्राशनांतेएतामाहुतिमिच्छंति॥ तत्पक्षेपरंमृत्यो ॥२६०॥
रितिहोमांतेपुनरेतस्यसंस्रवप्राशनमितिगदाधरः ॥

इदंचंद्रमसेनक्षत्राणामधिपतयेन० ॥ ६ ॥ ॐ बृहस्पतिर्ब्रह्मणोधिपतिःसमा० स्वाहा ॥
इदंबृहस्पतयेब्रह्मणोधिपतयेन० ॥ ७ ॥ ॐ मित्रःसत्यानामधिपतिःसमा० स्वाहा ॥
इदंमित्रायसत्यानामधिपतयेन० ॥ ८ ॥ ॐ वरुणोपामधिपतिःसमा० स्वाहा ॥
इदंवरुणायापामधिपतयेन० ॥ ९ ॥ ॐ समुद्रःस्रोत्यानामधिपतिःसमा० स्वाहा ॥
इदंसमुद्रायस्रोत्यानामधिपतयेन० ॥ १० ॥ ॐ अन्नꣳसाम्राज्यानामधिपतिस्तन्मा०
स्वाहा ॥ इदमन्नायसाम्राज्यानामधिपतयेन० ॥ ११ ॥ ॐ सोमऽऔषधीनाम
धिपतिःसमा० स्वाहा ॥ इदंसोमायौषधीनामधिपतयेन० ॥ १२ ॥ ॐ सविताप्र
सवानामधिपतिःस० स्वाहा ॥ इदंसवित्रेप्रसवानामधिपतयेन० ॥ १३ ॥ ॐ रुद्रः
पशूनामधिपतिःसमा० स्वाहा ॥ इदंरुद्रायपशूनामधिपतयेन० ॥ १४ ॥ ऐशान्या
मन्यपात्रंनिधायतन्मध्येत्यागः ॥ उदकोपस्पर्शः ॥ ॐ त्वष्टारूपाणामधिपतिःस

मा० स्वाहा ॥ इदंत्वष्ट्रेरूपाणामधिपतयेनम० ॥ १५ ॥ ॐ विष्णुःपर्वतानामधिप
तिःसमा० स्वाहा ॥ इदंविष्णवेपर्वतानामधिपतयेन० ॥ १६ ॥ ॐ मरुतोगणाना
मधिपतयस्तेमा० स्वाहा ॥ इदंमरुद्भ्योगणानामधिपतिभ्योन० ॥ १७॥ ॐ पितरः
पितामहाःपरेवरेततास्ततामहाः ॥ इहमावन्त्वस्मिन्ब्रह्म० स्वाहा ॥ इदंपितृभ्यःपि
तामहेभ्यःपरेभ्योवरेभ्यस्ततेभ्यस्ततामहेभ्यश्चनमम ॥ १८ ॥ दक्षिणाग्न्योर्मध्येअन्य
पात्रंनिधायतन्मध्येत्यागः ॥ उदकोपस्पर्शः ॥ एतेष्टादशमंत्राअभ्यातानसंज्ञकाः ॥
अथाग्निरित्यादिपंचकम् ॥ ॥ ॐ अग्निरैतुप्रथमोदेवतानाᳪंसोस्यैप्रजांमुंचतुमृत्यु
पाशात ॥ तदयᳪंराजावरुणोनुमन्यतांयथेयᳪंस्त्रीपौत्रमघंनरोदात्स्वाहा ॥ इदम
ग्नये० ॥ १ ॥ ॐ इमामग्निस्त्रायतांगार्हपत्यःप्रजामस्यैनयतुदीर्घमायुः ॥ अशून्योप ॥२६१॥
स्थाजीवतामस्तुमातापौत्रमानंदमभिप्रबुध्यतामियᳪंस्वाहा ॥ इदमग्नयेन० ॥ २ ॥

ॐ स्वस्तिनोऽअग्नेदिवापृथिव्याविश्वानिधेह्ययथायजत्र ॥ यदस्यांमयिदिवि
जातंप्रशस्तंतदस्मासुद्रविणंधेहिचित्रꣳस्वाहा ॥ इदमग्नये० ॥ ३ ॥ ॐ सुग
न्नुपंथांप्रदिशन्नऽएहिज्योतिष्मद्धेह्यजरन्नऽआयुः ॥ अपैतुमृत्युरमृतंमऽआगाद्वैवस्व
तोनोऽअभयंकृणोतुस्वाहा ॥ इदंवैवस्वतायन० ॥ ४ ॥ दक्षिणस्यामन्यपात्रेत्या
गः ॥ वध्वक्ष्णोर्वस्त्रपटंप्रक्षिप्यतूष्णीम् ॥ ॐ परंमृत्योऽअनुपरेहिपंथांयस्तेऽअन्यइत
रोदेवयानात् ॥ चक्षुष्मतेशृण्वतेतेब्रवीमिमानःप्रजाꣳरीरिषोमोन्तवीरान्स्वाहा ॥
इदंमृत्यवेनममेतिअग्नौत्यागः ॥ ५ ॥ परंमृत्यवितिचैकेप्राशनांते ॥ परंमृत्यवि
त्येतामेवाहुतिमेकेआचार्याःसंस्रवप्राशनांतेइच्छंतीत्यर्थः ॥ उदकोपस्पर्शः ॥ अथ

१ तिष्ठतीतिष्ठतापत्यागृहीतांजलिरेवसः ॥अंजलिस्थांस्त्रिधासर्वांप्राङ्मुखीप्रतिमंत्रतः॥प्राजापत्येनती
र्थेनदैवेनैवेतिबह्वृचः॥इतिकारिकायाम्॥ द्रव्यत्यागेतुवरस्यकर्तृत्वंस्वामिफलयोगादितिगदाधराशयः।

लाजाहोमः ॥ कुमार्याभ्राताआसादितशूर्पस्थशमीपलाशमिश्राल्लाँजानंजलि
नांजलावावपति ॥ तान्संहतेनतिष्ठत्यग्नौजुहोतिवधूः ॥ ॐ अर्यमणंदेवंकन्या ऽअ
ग्निमयक्षत ॥ सनोऽअर्यमादेवःप्रेतोमुंचतुमापतयेस्वाहा ॥ इदमर्यम्णेनमम ॥ अ
नेनमंत्रेणांजलिस्थाल्लाँजांस्तृतीयांशंजुहोति ॥ ॐइयन्नार्युपब्रूतेलाजानावपंतिका ॥
आयुष्मानस्तुमेपतिरेधन्तांज्ञातयोममस्वाहा ॥ इदमग्नयेनमम ॥ अनेनमंत्रेणांज
लिस्थाल्लाँजानर्धंजुहोति ॥ ॐ इमाल्लाँजानावपाम्यग्नौसमृद्धिकरणंतव ॥ ममतु
भ्यंचसंवननंतदग्निरनुमन्यतामियर्ठस्वाहा ॥ इदमग्नयेनम० इत्यनेनमंत्रेणांजलि
स्थान्सर्वांल्लाजाञ्जुहोति ॥ मंत्रत्रयंकन्यायावाचयतिवरः ॥ अथास्यैदक्षिणर्ठहस्तं
वरोगृह्णातिसांगुष्ठम् ॥ ॐ गृभ्णामितेसौभगत्वायहस्तंमयापत्याजरदष्टिर्यथासः ॥
भगोऽअर्यमासवितापुरंधिर्मह्यंत्वादुर्गार्हपत्यायदेवाः ॥ अमोहमस्मिसात्वर्ठसात्वम

स्यमोऽअहम् ॥ सामाहमस्मिऽऋक्त्वंद्यौरहंपृथिवीत्वम् ॥ तावेववि वहावहैसहरेतादधा वहै ॥ प्रजांप्रजनयावहैपुत्रान्विद्यावहैबहून् ॥ तेसंतुजरदष्टयःसंप्रियौरोचिष्णूसु मनस्यमानौ ॥ पश्येमशरदःशतञ्जीवेमशरदःशतꣳशृणुयामशरदःशतम् ॥ १ ॥ इ तिहस्तग्रहणेवरस्यमंत्रपाठः ॥ अथैनामश्मानंवरोवामहस्तेनवधूदक्षिणपादमारो हयत्युत्तरतोऽग्नेः ॥ ॐ आरोहेममश्मानमश्मेवत्वꣳस्थिराभव ॥ अभितिष्ठपृतन्यतो वबाधस्वपृतनायतः ॥ १ ॥ इत्यश्मारोहणेवरस्यमंत्रपाठः ॥ अथगाथांगायति ॥ ॐस रस्वतिप्रेदमवसुभगेवाजिनीवति ॥ यान्त्वाविश्वस्यभूतस्यप्रजायामस्याग्रतः ॥ १ ॥ यस्यांभूतꣳसमभवद्यस्याम्विश्वमिदंजगत् ॥ तामद्यगाथांगास्यामियास्त्रीणामुत्तमं

१ दक्षिणपाणिनेतिरेणुदीक्षिताः ।

यशः ॥ १ ॥ इत्यंतंवरोगाथांगायति ॥ अथवधूपुरःसरौप्रदक्षिणमग्निंपरिक्राम
तोवधूवरौ ॥ ॐ तुभ्यमग्नेपर्यवहन्त्सूर्यांवहतुनासह ॥ पुनःपतिभ्योजायांदाग्नेप्रज
यासह ॥ १ ॥ इतिपरिक्रमणेवरस्यमंत्रपाठः ॥ एवंकुमार्याभ्राताशमीपलाशमि
श्राँल्लाजानंजलिनांजलावावपति ॥ इत्यारभ्यपरिक्रमणांतंपुनर्वारद्वयंकुर्यात ॥ तत
स्तृतीयपरिक्रमणानंतरंकुमार्याभ्राताशूर्पकोणप्रदेशेन सर्वाँल्लाँजान्कुमार्याअंजला
वावपति ॥ तिष्ठतीकुमारीसर्वाँल्लाँजाञ्जुहोति ॥ ॐ भगायस्वाहाइदंभगायनमम ॥
इतिमंत्रंकन्ययावाचयतिवरः ॥ ततःसमाचारात्तूष्णींचतुर्थंपरिक्रमणम् ॥ नेतरथाद्व

---

१ वधूवरावग्निंप्रदक्षिणीकुर्वंतौअंतरागत्वातन्मध्यएवगच्छतामितिगदाधरः ॥ दंपतीगच्छतस्तत्रब्र
ह्माग्नीअंतरागतिरितिरेणुदीक्षिताः ।

त्तिःपुनःपश्चादग्नेःप्राग्वदुपविश्यवरोब्रह्मान्वारब्धःप्राजापत्यहोमंकुर्यात् ॥ ॐ प्रजापतयेस्वाहाइदंप्रजापतयेनममेतिप्रोक्षण्यांत्यागः ॥ अग्नेरुत्तरतःअथैनांवधूमुदीचींठे सप्तपदानिप्रक्रामयतिवरोवक्ष्यमाणमंत्रैः ॥ शिष्टाचाराद्वेद्युत्तरतोवेदीमारभ्यउत्तरोत्तरंहस्तांतरालेधान्यसप्ताचलान्कृत्वावरःप्रतिपदसीत्यनेनमंत्रेणसंपूज्य ॥ तेषुवधूप्रतिज्ञापाठनपुरःसरं मंत्रंपठित्वावध्वादक्षिणपादंस्पर्शयतियाम्यमारभ्यउदक्संस्थमुत्तरतउत्तरम् ॥ वरःदेशकालकीर्तनांतेप्रतिगृहीतस्वदारसिद्ध्यर्थंसप्ताचलपूजनंकरिष्ये ॥ ॐप्रतिपदंसिप्रतिपदेत्वानुपदस्यनुपदंत्वासंपदेसिसंपदेत्वातेजोसितेजसेत्वा ॥१॥

१ अग्नेरुत्तरतःएनांवधूंदक्षिणपादेनसप्तवारंपरिक्रमणंकारयतीतिहरिहरगदाधरादयः॥कुमार्यादक्षिणंपादंगृहीत्वास्थापयतीत्यन्ये ॥ विष्णुस्त्वानयत्विति षण्मंत्रेष्वनुषज्यतेनसप्तमेइतिकर्कः ॥ प्रक्रमेंबुवामपादस्यनाक्रमणमितिरेणुदीक्षितः ॥ अन्येषांभाष्यकाराणांचमतेविष्णुपदस्यानुषंगः ।

इतिमंत्रेणसंपूज्यवधूपदंक्रामयीत ॥ ॐ एकमिषेविष्णुस्त्वानयतु ॥ इतिवरेणोक्ते
नमंत्रेणवधूर्दक्षिणैकपदंदद्याद्वुदक् ॥ तदनंतरंवामपादंव्यर्थम् ॥ पुनर्दक्षिणपददानेमंत्रमु
क्ता ॥ एवंसर्वत्र॥ ॐद्वेऽऊर्ज्जेविष्णुस्त्वानयतुइतिद्वितीयम्॥ॐत्रीणिरायस्पोषायविष्णु
स्त्वानयतु ॥ इतितृतीयम् ॥ ॐचत्वारिमायोभवायविष्णुस्त्वानयतुइतिचतुर्थम् ॥ ॐ
पंचपशुभ्योविष्णुस्त्वानयतु ॥ इतिपंचमम् ॥ ॐषड्रायस्पोषायविष्णुस्त्वानयतुइ
तिषष्ठम् ॥ ॐसखेसप्तपदाभवसामामनुव्रताभवविष्णुस्त्वानयतु॥इतिसप्तमम्॥परिक्र
मणेनस्वस्थानोपवेशनम् ॥ केचित्प्रतिपदेकन्ययैकैकप्रतिज्ञामंत्रः पठनीयस्तेचयथा
सुखदुःखानिसर्वाणित्वयासहविभज्यते ॥ यत्रत्वंतदहंतत्रप्रथमेसाब्रवीदिदम् ॥ १ ॥
कुटुम्बंरक्षयिष्यामिआवृद्धबालकादिकम् ॥ अस्तिनास्तीतिपश्यामिद्वितीये० ॥ २ ॥
भर्तृभक्तिरतानित्यंसदैवप्रियभाषिणी ॥ भविष्यामिपदेचैवतृतीये० ॥ ३ ॥ आर्तआ

तांभविष्यामिसुखदुःखविभागिनी ॥ तवाज्ञांपालयिष्यामिकन्यातूर्यपदेब्रवीत ॥
॥ ४ ॥ ऋतुकालेशुचिस्नाताक्रीडिष्यामित्वयासह ॥ नाहंपरतरंगच्छेःकन्यापंच
पदेब्रवीत् ॥ ५ ॥ इहाथसाक्षिणोविष्णुस्त्वयाहंनैववंचिता ॥ उभयोः प्रीतिसंभूता
कन्याषष्ठपदेब्रवीत् ॥ ६ ॥ होमयज्ञादिकार्येषुभवामिचसहायिनी ॥ धर्मार्थकाम
कार्येषुकन्यासप्तपदेब्रवीत् ॥ ७ ॥ इतिकन्यामंत्राः ॥ इतिसप्तपदीक्रमणम् ॥ अथव
रःगृहान्निष्क्रमणसमये एकपुरुषस्कंधे कृतादुदकुंभादुदकंदक्षिणहस्तेनादायमंत्रंपठ
न्वधूमूर्धन्यभिषिंचति ॥ ॐ आपःशिवाःशिव० ॥ १ ॥ इत्यनेनमंत्रेण ॥ पुनस्त
स्मादेवकुंभादुदकमादायापोहिष्ठेतिऋक्त्रयमुक्त्वामूर्धन्यभिषिंचति ॥ अथदिवा

विवाहश्चेत्तदावधूर्वरेणसूर्यमुदीक्षस्वेतिप्रेषितासतीसूर्यमुदीक्षते ॥ तच्चक्षुरित्यनेनमं त्रेणशृणुयामशरदःशतादित्यंतेन ॥ वध्वाएवमंत्रपाठः ॥ अथवरो वध्वादक्षिणाऽं सस्योपरिहस्तंनीत्वातस्याहृदयमालभते ॥ ॐ ममव्रतेतेहृदयंदधामिममचित्तमनु चित्तंतेअस्तु ॥ ममवाचमेकमनाजुषस्वप्रजापतिष्ट्वानियुनक्तुमह्यम् ॥ इत्यनेनमंत्रेण स्वपठितेन ॥ ततोवरोऽनामिकाग्रवधूशिरसिधृत्वातामभिमंत्रयते ॥ ॐ सुमंगली

१ सूर्यावलोकनंदिवाविवाहेभवतीतिरेणुकारिकाहारिहरौ ॥ सूर्यवेक्षणस्यान्यथानुपपत्त्यास्तमिते ध्रुवंदर्शयतीत्यत्रास्तमितग्रहणाच्चएतद्गृह्यानुसारिणांदिवैवविवाहोनरात्राविति गदाधरः । २ वध्वाः सीमंतेवरःसिंदूरंददातीतिप्रयोगरत्ने ॥ अनामिकाग्रेणवधूशिरसिअभिमंत्रणमित्यन्ये ॥ अत्राचारा च्चतस्रःस्त्रियोमंगलंकुर्वीरन् पतिपुत्रान्विताभव्याश्चतस्रःसुभगाअपि ॥ सौभाग्यमस्यैदद्युस्तामंगला चारपूर्वकमितिरेणुदीक्षिताः ।

रियंवधूरिमार्ठसमेतपश्यत ॥ सौभाग्यमस्यैदत्त्वायाथास्त्वंविपरेतना ॥ इत्यनेन
मंत्रेणस्वपठितेन ॥ अत्रसमाचाराद्वधूंवरस्यवामभागेउपवेशयंति ॥ अत्रावसरेव
ध्वाःसीमंतेवरःसिंदूरंददाति ॥ ॐ वाममद्यसवितर्वाममुश्वोदिवेदिवेवाममस्मभ्यंठ
सावीः ॥ वामस्यहिक्षयंस्यदेवभूरैरयाधियावांमभाजंःस्याम ॥ १ ॥ दक्षिणतऽउहै
कऽउपदधातितदेताःपुण्यालक्ष्मीर्दक्षिणतोदध्मइति तस्माद्यस्यदक्षिणतोलक्ष्मभव
तितं पुण्यलक्ष्मीकऽइत्याचक्षतऽउत्तरतःस्त्रियाऽउत्तरतऽआयतनाहि स्त्रीतत्तत्कृतमेव
पुरस्तात्त्वे वैनाऽउपदध्याद्यत्राहैवशिरस्तदेवहनूतज्जिह्वाथैताः पुण्यालक्ष्मीर्मुखतोध
त्तेतस्माद्यस्य मुखेलक्ष्मभवतितंपुण्यलक्ष्मीकऽइत्याचक्षते ॥ इतिमंत्रपाठोवर
स्य ॥ अथाग्नेः प्रागुदग्वानुग्रहमागारंपूर्वपरिकल्पितंभवति ॥ तस्मिन्नानडुहं

रोहितचर्मप्राग्ग्रीवमुपरिलोमास्तीर्णंभवति ॥ कलौतदभावेप्रागग्रानुदगग्रान्वा
कुशानास्तरेत् ॥ तदुपरितांवधूंप्रत्यङ्मुखींदृढपुरुषउन्मथ्योत्क्षिप्योपवेशयति ॥
ॐ इहगावोनिषीदंत्विहाश्वाइहपूरुषाः ॥ इहोसहस्रदक्षिणोयज्ञऽइहपूषानिषीदतु ॥
॥ १ ॥ इत्यनेनदृढपुरुषपठितेनमंत्रेण ॥ केचित्तुजामातरंदृढमाचक्षते ॥ अस्मि
न्पक्षेजामातैवोत्क्षिप्यमंत्रमुक्त्वाआस्तृतकुशेषूपवेशयतिवधूम् ॥ ततआगत्यपूर्ववद्य
थास्थानंवरोदक्षिणतउपविश्यपश्चात्स्विष्टकृद्धोमंकुर्यात् ॥ ॐ अग्नयेस्विष्टकृते
स्वाहा ॥ इदमग्नयेस्विष्टकृतेनमम ॥ ततःसंस्रवप्राशनादिप्रणीताविमोकांतंहोमशे
षंसमाप्य ॥ अथस्वकीयाचार्यायगोदानंकरोतिब्राह्मणश्चेज्जामात्रेवाक्षात्रियआ

१ दृढपुरुषःकश्चिद्बलवान्पुरुषइतिहरिहरः ॥ दृढपुरुषोजितेंद्रियइतिभर्तृयज्ञः ॥ जामातैवदृढपुरु
षइतिरेणुकाशीदीक्षितगङ्गाधराः ।

चार्यायग्रामंददाति ॥ वैश्यआचार्यायअश्वंददाति ॥ कृतस्यविवाहहोमाख्यस्यक
र्मणःसांगतासिद्ध्यर्थंयथाशक्तिब्राह्मणान्भोजयिष्ये ॥ अथरात्रौविवाहस्तदाएतद्व
रदानानंतरंवरोवधूंध्रुवमीक्षस्वेतिप्रैषंदत्त्वाध्रुवमीक्षयते ॥ ध्रुवमसिध्रुवंत्वापश्यामिध्रु
वैधिपोष्येमयिमह्यंत्वादात् ॥ बृहस्पतिर्मयापत्याप्रजावतीसंजीवशरदःशतम् ॥
इतिवरेणमंत्रेपठितेवधूर्ध्रुवमीक्षते ॥ सायद्यपिनपश्येत्तदापश्यामीत्येवब्रूयात् ॥
॥ अथाशीर्वादः ॥ ॐ यद्वेवैतद्वाजप्रसवीयंजुहोति ॥ एताहदेवताःसुताऽएतेनसवेन
यैनैतत्सोष्यमाणोभवति ताऽएवैतत्प्रीणातिताऽअस्माऽइष्टाः प्रीताऽएतꣳसवमनुम
न्यंतेताभिरनुमतः सूयतेयस्मैवैराजानोराज्यमनुमन्यंतेस राजाभवति ॥ १ ॥

१ ध्रुवमीक्षस्वेत्यध्येषणानभवतीतिकर्कः ॥ ध्रुवमीक्षस्वेतिप्रैषइतिहारिहरगंगाधरौ ।

सं० कांड ९ प्रपाठक ३ ब्राह्मण २ मंत्र ५ ॥ अथातोर. भृतोजुहोति ॥ राजानोवैरा भा०
॥२६७॥ ष्ट्रभृतस्तेहिराष्ट्राणिबिभ्रत्येताहदेवताः सुताऽएतेनसवेनयेनैतत्सोष्यमाणोभवति ताऽ
एवैतत्प्रीणाति ताऽअस्माऽइष्टाः प्रीताएतꣳसवमनुमन्यंतेताभिरनुमतःसूयतेयस्मैवै
राजानोराज्यमनुमन्यंतेसराजाभवति ॥ २॥ कांड ९ प्र० ३ ब्रा० ३ मं० १॥ अ
थरथशीर्षेजुहोति ॥ एषवैससवऽएतद्धैतत्सूयतेयस्मैतमेतादेवताःसवमनुमन्यंतेयां
भिरनुमतःसूयतेयस्मैवैराजानोराज्यमनुमन्यंतेसराजाभवति ॥ ३ ॥ कां० ९ प्र०
३ ब्रा० ३ मं० १३ ॥ तत्वैदेवस्वामेवएतानिहवीꣳषिनिर्वपेदेताहदेवताःसुताएते ॥२६७॥
नसवेनयेनैतत्सोष्यमाणोभवति ताऽएवैतत्प्रीणातिताऽअस्माऽइष्टाः प्रीताऽएतꣳस

वमनुमन्यंतेताभिरनुमतःसूयते यस्मैवैराजानोराज्यमनुमन्यंते सराजाभवति ॥
॥ ४ ॥ कां० ९ प्र० ३ ब्रा० ५ मं० १२ ॥ अथराजानमभिषुत्याग्नौजुहोति ॥ ए
षवैसुसवऽएतद्वैतत्सयतेयमस्मैतमेतादेवताःसवमनुमन्यंते याभिरनुमतःसूयते यस्मै
वैराजानोराज्यमनुमन्यंतेसराजाभवति ॥ ५ ॥ कां० ९ प्र० ४ ब्रा० १ मं० ८ ॥
शतमानंभवति ॥ शतायुर्वैपुरुषःशतेंद्रियऽआयुरेवेन्द्रियम्वीर्यमात्मन्धत्ते ॥ ६ ॥
दंपत्योरविच्छिन्नाप्रीतिरस्तु ॥ वंशाभिवृद्धिरस्तु ॥ इत्याशीर्वादः ॥ यथाशक्तिब्रा
ह्मणभोजनसंकल्पः ॥ विवाहाग्निमहानसेप्रक्षिप्य ॥ कर्मेश्वरार्पणंकुर्यात् ॥ कारि
कायाम्॥लाजहोमत्रयेमंत्रानश्मनोरोहणेतथा ॥ भगायचैकमंत्रंचकन्यापठतिपंच
कम् ॥ ध्रुवदर्शनकालेचषष्ठश्चैवउदाहृतइति ॥ कन्यावस्त्रपरिधानेतथैवचोत्तरीयके ॥

तथासमीक्षकालेतुपितुर्निष्क्रमणेगृहात् ॥ अश्मनोरोहणेचैवहस्तग्राहेतथैवच ॥ त
थासप्तपदेचैववधूमूर्ध्न्यभिषेचने ॥ हृदयालंभनेचैवतथैवअभिमंत्रणे ॥ दृढपुरुषेक्र
मेणैवएतन्मंत्रान्वरःपठेत् ॥ इति ॥ ॥ अथविवाहेमंत्राधिकारिणः ॥ वधूवरस्य
पितरौवधूवरौतथैवच ॥ विवाहेमंत्रपाठीचअपरोन्येकबोधकइति ॥ १ ॥ रौद्रीपै
त्रीतथामृत्युर्यमाहुत्याकृतेतथा ॥ अंतर्धानंविनायस्तुअल्पायुर्दंपतीतदा ॥ २ ॥
रौद्रीपैत्रीमृत्युयमाहुतीर्हुत्वाह्यपःस्पृशेत् ॥ अपांस्पर्शनकालेतुस्पृशेत्प्रणीतकंज
लम् ॥ यमायदक्षिणेत्यागमीशान्यांरुद्रमेवच ॥ दक्षिणाग्नेययोर्मध्येपितृत्यागोविधी
यते ॥ ३ ॥ एतत्त्यागंस्वयंपात्रेअन्यंदेयात्तुप्रोक्षणीम् ॥ ४ ॥ भृष्टव्रीहिर्भवेल्लाजाश
मीदलविमिश्रिता ॥ कन्याहोमंप्रकुर्वीतभर्तुर्भ्रातुश्चसंगमे ॥ ५ ॥ वरेणवामहस्तेन
वधूपादंचदक्षिणम् ॥ शिलामारोहयेत्प्राज्ञोमंगलानियथाक्रमम् ॥ ६ ॥ शक्तिरूपेण

याशैल्याशिवरूपशिलापतिः ॥ उभावंगुष्ठसंस्पर्शात्साकन्याविधवाभवेत् ॥ ७ ॥
कामस्त्वघोषबाणैःस्वैःप्रहरेदतिदारुणैः ॥ तस्मादग्रेभवेत्कन्यातस्यबाणस्यशांत
ये ॥ ८ ॥ कन्यकाग्रेवरंकृत्वाब्राह्मणोज्ञानदुर्बलः ॥ विधवाजायतेनारीनिषिद्धस्त
त्रकारणात् ॥ ९ ॥ अग्रेतुशुभदापत्नीमांगल्येसर्वकर्मणि ॥ पदेपदेश्वमेधंचधनायुः
पुत्रवर्धनम् ॥१०॥लाजानाज्यंस्त्रुवंकुंभंब्रह्माणमृत्विजंगुरुम् ॥ एतेषांबाह्यतःकृत्वाशेषा
णांतुप्रदक्षिणा ॥११॥ वध्वादक्षिणपादानिसप्तानिप्रक्रमेत्तुसा ॥ याम्यादुदग्दिक्संस्था
प्यप्रक्रमेदुत्तरोत्तरम् ॥ गणयेद्दक्षिणपदान्पदवामान्निरर्थकान् ॥ १२ ॥ पति
पुत्रान्विताभव्याश्चतस्रःसुभागाःस्त्रियः ॥ सौभाग्यमस्यैदद्युस्तामंगलाचारपूर्वक
मिति ॥ १३ ॥ पतिपुत्रवतीनारीसुरूपगुणशालिनी ॥ अविच्छिन्नप्रजासाध्वीसद
यासासुमंगली ॥ १४ ॥ इतिकारिकावचनानि ॥ ॥ अथकश्चिद्यदिअभ्रातृकांक

न्यामुद्वहेत्तदास्याःपित्रोःरथाधिकंगवांशतंदत्त्वोद्वहेत् ॥ एतेनपुत्रिकादोषान्मुच्य
ते ॥ ग्रामवचनंचात्रविवाहेकुर्यात् ॥ श्मशानेच ॥ विवाहश्मशानयोर्ग्रामःप्रमाण
मितिश्रुतेः ॥ ग्रामशब्देनस्वकुलवृद्धाःस्त्रियोभिधीयंते ॥ ताश्चपूर्वपुरुषैरनुष्ठीयमानं
सदाचारंस्मरंति ॥ विवाहादारभ्यत्रिरात्रमक्षारालवणाशिनौस्यातान् ॥ जाया
पतीअधःशयीयातांत्रिरात्रमेव ॥ अधःशब्दःखट्वाव्युदासार्थोनतुआस्तरणव्युदासा
र्थः ॥ संवत्सरंनमिथुनमुपेयातांद्वादशरात्रंवाषड्रात्रंवात्रिरात्रंवेति ॥ मिथुनकरणेश
क्त्यपेक्षयाएतेविकल्पाः ॥ संवत्सरादिपक्षाशक्तौत्रिरात्रपक्षेप्याश्रियमाणेचतुर्थ्युत्त
रकालपचम्यांरात्रावभिगमनंकर्तव्यम् ॥ कुत एतत् ॥ चतुर्थीकर्मण्यकृतेभार्यात्वमे
वनाद्यापिसंवृत्तंतस्यविवाहैकदेशत्वाच्चतुर्थीकर्मणः ॥ इतिसंस्कारभास्करेविवाह
दिनकृत्यप्रयोगः॥ ॥ अथऐरणीप्रदानम् ॥ ॥ तच्चआचारप्राप्तंविवाहाच्चतुर्थदिने

पररात्रिकायम्॥तत्स्वरूपम् ॥ वंशपात्रमिहैकंचशूर्पैःषोडशभिर्युतम् ॥ करकैरुद्रसंख्या
कैःसुवर्णपरिपूरितैः ॥ शतच्छिद्रांशुभामेकांगोधूमेनप्रपूरिताम् ॥ व्यजनैकंतथैवचेति
वापाठभेदः ॥ सवस्त्रंचसदीपंचसौभाग्यद्रव्यसंयुतम् ॥ नानापक्वान्नसंयुक्तंफलतांबूल
संयुतम् ॥ एतावदैरिणीरूपंकर्तव्यंप्रीतिवर्धनम् ॥ उमाशंकरयोःप्रीत्यैऐरिणीदानमुत्त
मम् ॥ वरमात्रेप्रदास्यामिकन्यादानस्यसिद्धये ॥ ॥ अथऐरिणीपूजा ॥ ततःकन्या
पितासपत्नीकःमंडपमध्येप्राङ्मुखः शुभासनेउपविश्य ॥ स्वाग्रेवंशपात्रंनिधायत
त्पुरतः वस्त्राच्छादितपीठेवधूवरौप्रत्यङ्मुखावुपवेशयेत् ॥ वरमातरंभर्तृसहितांपी
ठउदङ्मुखीमुपवेशयेत ॥ आचम्यप्राणानायम्यदेशकालौसंकीर्त्य ॥ एवंगुणवि
शेष० तिथौमयाचतुर्भिरहोभिःनिष्पादितविवाहाख्यस्यकर्मणःसांगतासिद्ध्यर्थंश्रु
तिस्मृतिपुराणोक्तफलप्राप्त्यर्थं कन्यदानसंपूर्णफलावाप्तये वधूवरयोःबह्वायुष्यप्रा

त्प्रयेवंशाभिवृद्ध्यर्थंश्रीउमामहेश्वरप्रीतयेचवरमात्रेऐरिणीप्रदानमहंकरिष्ये ॥ त
त्रनिर्विघ्नतासिद्ध्यर्थंमहागणपतिपूजनम् ॥ मनोजूतिरितिप्रतिष्ठा ॥ ततःश्रीश्चतेति
मंत्रेणषोडशोपचारैःऐरिणींपूजयत् ॥ प्रार्थना ॥ ऐरिणित्वमुमादेवीमहेशोगिरिजा
पतिः ॥ अतस्त्वांपूजयिष्यामिऐरिणींसर्वकामदाम् ॥ ऐरिणित्वमुमादेवीवंशपात्रस्व
रूपिणी ॥ कन्यादानस्यसंपूर्णफलंदेहिशिवप्रिये ॥ यावच्चंद्रश्चसूर्यश्चयावत्तिष्ठति
मेदिनी ॥ तावद्विवंशवृद्धित्वंदेहिमेशंकरप्रिये ॥ अनयापूजयाऐरिणीस्वरूपिणावु
मामहेश्वरौप्रीयेताम् ॥ वरमातृहस्तेशिवाआपःसंतु ॥ संतुशिवाआपः ॥ सौमनस्य
मस्तु ॥ अस्तुसौमानस्यम् ॥ अक्षतंचारिष्टंचास्तु ॥ अस्त्वक्षतम० ॥ गंधाःपांतु ॥ सौ
मंगल्यंचास्तु ॥ अक्षताःपांतु ॥ आयुष्यमस्तु ॥ पुष्पाणिपांतुसौश्रियमस्तु ॥ यत्पा
पंरोगमशुभमकल्याणंतद्दूरेप्रतिहतमस्तु ॥ दानमंत्रः ॥ वंशोवंशकरःश्रेष्ठोवंशोवं

शसमुद्भवः ॥ वंशपात्रमिदंदानंवंशवृद्धिकरंपरम् ॥ वंशपात्रमिदंपुण्यंवंशजातसमुद्भ
वम् ॥ वंशानामुत्तमंदानंकन्यादानफलप्रदम् ॥ वंशपात्राणिसर्वाणिमयासंपादितानि
नि वै ॥ उमाकांतायदास्यामिममवंशाभिवृद्धये ॥ वंशवृद्धिकरंदानंसौभाग्यादिस
मन्वितम् ॥ नानापक्वान्नसंयुक्तंदंपत्योर्वंशवर्द्धनम् । वस्त्रेणाच्छादितंपूगफलहेमसमन्वि
तम् ॥ ददामिवरमातस्तेपार्वतीशंकरौतथा ॥ दातामहेश्वरोदेवोगृहीतापिमहेश्वरः ॥
दानेनानेनमेदेवप्रसीदपरमेश्वर ॥ इदंमैरिणीवंशपात्रंसदक्षिणाकंवरमात्रेतुभ्यमहं
संप्रददेनमम ॥ ततोवरगोत्रजादीन्गंधवस्त्रादिभिःसंपूज्यप्रार्थयेत् ॥ यच्छ
त्त्याविहितंस्वगृह्यकथितैर्मंत्रैश्चपौराणिकैर्दानं वस्त्रजलान्नचंदनदलाद्यैर्वाचतुर्भिर्दि
नैः ॥ दंपत्योर्ममवंशवृद्धिमनघांदद्यादुमाशंकरौन्यूनंतत्कृपयाखिलंसफलतांयातु
द्विजानांनतिः ॥ १ ॥ ततोवधूगोत्रजाःतदैरिणीवंशपात्रंगृहीत्वावरगोत्रजादीनांशि

रसिधारयेयुः ॥ ॐ घृतवंतीभुवनानामभिश्रियोर्वीपृथ्वीमधुदुघेसुपेशसा ॥ द्यावापृ
थिवीवरुणस्यधर्मणाविष्कंभितेऽअजरेभूरिरेतसा ॥ १ ॥ इतिमंत्रेण ॥ ततःकन्यां
निवेदयेत् ॥ अष्टवर्षात्वियंकन्यापुत्रवत्पालितामया ॥ इदानींतवपुत्रायदत्तास्नेहे
नपाल्यताम् ॥ १ ॥ अनेनवरपितुरुत्संगेदद्यात् ॥ पुनरुत्थाप्य ॥ अस्मदादिसुहृद्बं
धूंस्त्यक्त्वायातिभवद्गृहम् ॥ अतिस्नेहेनवैमातःकन्यांमेपरिपालय ॥ २ ॥ अनेनवर
मातुरुत्संगेदद्यात् ॥ अत्रावसरेवध्वावसिष्ठारुंधतीपूजनम् । रुक्मपीठेसुविस्तीर्णेमणि
विद्रुमशोभिते ॥ तिष्ठत्वत्रासनेदेवीयावत्पूजांकरोम्यहम् ॥ इतिआवाह्य ॥ श्रीश्चतेइति
मंत्रेणवसिष्ठारुंधतीभ्यांनमःपंचोपचारैःसंपूज्य ॥ पूजांतेगंधपुष्पफलहिरण्योपेत
मर्घंदद्यात ॥ तत्रमंत्रः ॥ अरुंधतिमहाभागेवसिष्ठप्रियवादिनि ॥ सौभाग्यंसंततिं

देहिगृहाणार्घंनमोस्तुते ॥ ९ ॥ इत्यर्घंदत्त्वाप्रार्थयेत् ॥ अरुंधतिमहाभागेवसिष्ठप्रि
यवल्लभे ॥ सौभाग्यंदेहिसततंपुत्रपौत्रांश्चदेहिमे ॥ पतिव्रतेनमस्तुभ्यंसौभाग्याभर
णेशुभे ॥ धनंदेहिसुतंदेहिअरुंधतिनमोस्तुतेइतिप्रार्थ्य ॥ ततोअखंडसौभाग्यादिका
मनयावसिष्ठारुंधतीप्रीतयेषोडशाष्टौवावायनानिब्राह्मणेभ्योदद्यात् ॥ अथवावाय
ननिष्क्रयीभूतयथाशक्तिरजतद्रव्यमखंडसौभाग्यप्राप्तिकामनया वसिष्ठारुंधतीप्री
तयेअमुकशर्मणेब्राह्मणायतुभ्यमहंसंप्रददेइति ॥ ततोवरहस्तेकन्यांनिवेदयेत् ॥ इ
यंकन्यामयादत्तातवविप्रसहायिनी ॥ स्वदेशेपरदेशेवापरिपाहिकुलोचितम् ॥ १ ॥
इतिमंत्रेणनिवेदयेत् ॥ ब्राह्मणेभ्योदक्षिणांदत्त्वातैराशिषोगृह्णीयादित्यैरिणीप्रदानम् ॥
एतदकरणेदोषोयथा ॥ वंशदानंविनायस्तुमंडपोद्वासनंयदि ॥ अज्ञानात्कुरुतेमू
ढोदंपत्योःक्षयमायुषाम् ॥ दंपत्योर्वाससीदत्त्वापूजयेदैरिणींततः ॥ वंशपात्रंतथाकन्यां

वरमात्रेनिवेदयेत् ॥ वंशदानंचतुर्थेह्निकन्यादानांगमिष्यते ॥ रात्रौकुर्यात्तृतीयं
शेकुयोगेपिनदुष्यति ॥ पातोवावैधृतिर्वास्याच्चचतुर्थेहनिचेद्यदि ॥ तत्रैवापररात्रेस्या
दैरिणीपूजनादिकमिति ॥ एतत्कुयोगेपिचतुर्थेह्निकार्यंनान्यत्रेतितात्पर्यार्थः ॥ वस्तु
तस्तुनवीनग्रंथेषुएतस्यादर्शनान्नादरणीयम् ॥ इतिशाकलकारिकायाम् ॥ अथव
धूप्रवेशः ॥ ॥ वधूप्रवेशःप्रथमेतथैवशुभप्रदःपंचमकेथवाह्नि ॥ द्वितीयकेवाथचतुर्थ
केवाषष्ठेवियोगामयदुःखदःस्यात् ॥ १ ॥ तथाचसंग्रहे ॥ विवाहमारभ्यवधूप्रवेशो
युग्मेतिथौषोडशवासरांतात् ॥ ऊर्ध्वंततोब्देऽयुजिपंचमांतादतःपरस्तान्नियमोन
चास्ति ॥ २ ॥ अयुग्मेतृतीयंत्यक्त्वायुग्मेषष्ठंविवर्जयेत् ॥ प्राप्तेकालेव्यतीपातवैधृ
तीसंक्रमंतथा ॥ उपरागश्राद्धदिनेवर्जयित्वाशुभेप्सुभिः ॥ ३ ॥ ज्योतिःशास्त्रोक्तदि ॥२७२॥
वसेशुभकालेतथैवच ॥ रात्रौवधूप्रवेशःस्याद्दिवानैवकदाचनेति ॥ ४ ॥ तत्रज्योतिः

शास्त्रोक्तशुभकाले वरः पित्रादत्तांवधूंगृहीत्वा यानेउपविश्यमंगलवाद्यघोषपुरःसरंमं गलगीतपठनपरैः पुरंध्रीजनैराचार्यादिविप्रैःआनोभद्राःस्वस्तिनइन्द्रइतिसुमंगलसू क्तपठनपरैश्चसहस्वगृहमागत्यगृहमध्येशुभासनेप्राङ्मुखउपविश्य स्वदक्षिणतः वधूं निवेश्य ॥ देशकालौस्मृत्वाअस्याःममनवोढाभार्यायाः प्रथमगृहप्रवेशंकरिष्ये ॥ त दंगविहितंगणपतिपूजनंस्वस्तिपुण्याहवाचनंच करिष्ये इतिकृत्वा ॥ ततआचारप्राप्तं कांस्यपात्रे तंदुलान्प्रसार्यतदुपरिसुवर्णशलाकया श्रीकुलदेवताप्रयुक्तमादौ अमुकीइ तिनामविलिख्यमनोजूतिरितिप्रतिष्ठाप्य श्रीश्चतेइतिमंत्रेण षोडशोपचारैः संपूज्य ॥ अन्यद्यथाकुलाचारं कुर्यात् ॥ ततोवरेणनामवाचनपुरःसरंवध्वानामप्रतिष्ठितंकुर्या त् ॥ श्रीकुलदेवताप्रयुक्तमादौअमुकनामप्रतिष्ठितमितित्रिर्वाचयित्वा ॥ ब्राह्मणाम नोजूतिरितिमंत्रंपठित्वावधूशिरसिमंत्राक्षतान्दद्युः ॥ ब्राह्मणेभ्योगंधतांबूलदक्षिणा

दिदत्त्वातैराशिषोगृह्णीयात् ॥ इतिवधूप्रवेशः ॥ ॥ अथप्रथमाब्देवधूनिवासः ॥ ॥ ज्योतिर्निबंधे ॥ उद्वाहात्प्रथमेशुचौयदिवसेद्भर्तुर्गृहेकन्यकाहन्यात्तज्जननींक्षयेनिज तनुंज्येष्ठेपतिज्येष्ठकम् ॥ पौषेचश्वशुरंपतिंचमलिनेचैत्रेस्वपित्रालयेतिष्ठंतीपितरंनिहं तिनभयंतेषामभावेभवेत् ॥ इतिप्रथमाब्देवधूनिवासः ॥ ॥ अथचतुर्थीकर्मोच्य ते ॥ तच्चविवाहाच्चतुर्थेदिनेऽपररात्रेऐरिणीप्रदानोत्तरंकार्यम् ॥ गृहमध्येग्निस्थापनं तत्रैवचतुर्थीकर्मोक्तंहारिहरादिभिस्तथापितच्छिष्टाः बहिःशालायांवेद्यांकुर्वंतीति ॥ तत्रायंक्रमः ॥ कृत्येचातुर्थिकेवैवधुवरउभयोर्मंगलस्नानकार्यंस्थाप्योवैवाहिकाग्नि स्तदनुचउदकुंभंचरुंवैपचेयुः ॥ हुत्वाघाराज्यभागानथघृतहवनमग्निवायुश्चसूर्यश्च

१ चतुर्थ्यामपररात्रेभ्यंतरतोग्निमुपसमाधायेतिसूत्रात्गृहमध्यएवाग्निस्थापनंतत्रैवचतुर्थीकर्मोक्तंह रिहरादिभिस्तथापीदानींतनशिष्टावेद्यांकुर्वंति ॥

द्रोगंधर्वपंचप्रजापतिचरुणाषट्स्रवंचोदपात्रे ॥ १ ॥ शेषैः स्विष्टंनवाज्याहुतिमनुहवनं
प्रोक्षणीसंस्रवंतत्प्राश्यंशेषंसमाप्यमथवरवधूमूर्धन्यर्षिंचोदपात्रात ॥ प्राणैस्तेस्था
लिपार्कंहुनितमपिवधूंप्राशयित्वावरेणकर्मादौ मंगलासारचितक्रमणिकासर्वसंस्का
रमाला ॥ २ ॥ इति ॥ ॥ ततोवरोवध्वासहवधूपितृगृहेमंगलंस्नात्वाऽहतपट्टकूला
दिवाससीपरिधायधृतकुंकुमतिलकोवेद्यां शुभासनेउपविश्य दक्षिणतःपत्नींचोपवे
श्य ॥ आचम्यप्राणानायम्यदेशकालकीर्तनांतेममास्याभार्यायाः सोमगंधर्वाग्न्युप
भुक्तदोषपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थं विवाहैकदेशत्वाच्चतुर्थीकर्माहंकरिष्ये ॥
तत्रनिर्विघ्नतार्थंगणपतिपूजनंवास्मरणंकुर्यात ॥ तत्रगृहाभ्यंतरतोग्निमुपसमाधाय
स्थंडिलेपंचभूसंस्कारपूर्वकं विवाहाग्निंप्रतिष्ठाप्य ॥ ततोदक्षिणतो ब्रह्मासनादिप्र
णीतास्थापनानंतरंप्रणीतोत्तरतउदपात्रंप्रतिष्ठाप्य ॥ आज्यम् ॥ स्थालीपाक

चरुः ॥ पवित्रीकरणादिआघाराज्यभागांतमाधानवत् : ॥ आज्यभागानंतरमा
ज्येनपंचाहुतयो वक्ष्यमाणमंत्रैः ॥ ॐ अग्नेप्रायश्चित्तेत्वंदेवानां प्रायश्चित्तिरसि
ब्राह्मणस्त्वानाथकामऽउपधावामियास्यैपतिघ्नीतनूस्तामस्यै नाशयस्वाहा ॥ इद
मग्नयेनमम ॥ ॥ ॐ वायोप्रायश्चित्तेत्वंदेवानांप्रायश्चित्तिरसिब्राह्मणस्त्वानाथका
मऽउपधावामियास्यैप्रजाघ्नीतनूस्तामस्यैनाशयस्वाहा ॥ इदंवायवेनमम ॥ ॐ
सूर्य्यप्रायश्चित्तेत्वंदेवानाम्प्रायश्चित्तिरसि ब्राह्मणस्त्वानाथकामऽउपधावामियास्यै
पशुघ्नीतनूस्तामस्यैनाशयस्वाहा ॥ इदं सूर्यायनम॰ ॥ ॐ चन्द्रप्रायश्चित्तेत्वंदे
वानांप्रायश्चित्तिरसिब्राह्मणस्त्वानाथकामऽउपधावामि यास्यैगृहघ्नीतनूस्तामस्यैना
शयस्वाहा ॥ इदंचंद्रमसेन॰ ॥ ॐ गन्धर्वप्रायश्चित्तेत्वंदेवानांप्रायश्चित्तिरसिब्र
ह्मणस्त्वानाथकामऽउपधावामियास्यैयशोघ्नीतनूस्तामस्यैनाशयस्वाहा ॥ इदंगंध

र्यायनम० ॥ ततःस्थालीपाकेनप्रजापतयइतिएकाहुतिः ॥ ॐ प्रजापतयेस्वाहा ॥
इदंप्र० ॥ आसांषडाहुतीनांप्रणीतापात्रस्योत्तरतउदपात्रेसंस्रवप्राशनम् ॥ स्विष्टकृ
तोपिकेचिदिच्छंति ॥ अन्यासामाहुतीनांप्रोक्षणीपात्रेसंस्रवप्राशनम् ॥ ततःस्थाली
पाकेनस्विष्टकृतम् ॥ ॐ अग्नयेस्विष्टकृतेस्वाहाइदमग्नयेस्विष्टकृतेनमम ॥ ततआ
ज्येनमहाव्याहृत्यादिप्राजापत्यंतानवाहुतयः ॥ ततः प्रोक्षणीपात्रेयेसंस्रवास्ते
षांप्राशनम् ॥ पवित्राभ्यांमार्जनादिप्रणीताविमोकांतंहोमशेषंसमाप्य ॥ ततःप्रणी
तोत्तरस्थादुदपात्रादुदकंपल्लवेनादायवधूमूर्धन्यभिषिंचतिवरः ॥ ॐ यातेपतिघ्नीप्रजा
घ्नीपशुघ्नीगृहघ्नीयशोघ्नीनिंदितातनूर्जारघ्नींततऽएनांकरोमिसाजीर्यत्वंमयासहासौ ॥
असौस्थानेनामादेशः ॥ अमुकीइत्यनेन ॥ अथैनांवधूंस्थालीपाकंप्राशयतिवरः
॥ ॐ प्राणैस्तेप्राणान्त्सन्दधाम्यस्थिभिरस्थीनिमाꣳसैर्माꣳसानि त्वचात्वचम् ॥

॥२७५॥ ॥ १ ॥ इतिमंत्रेणवरपठितेनतांचाचम्यअत्रावसरेवधूवरौबंधनक्रमेणपरस्परंकंक
णेविमुंचेताम् ॥ यथाशक्तिब्राह्मणभोजनसंकल्पः ॥ ब्राह्मणेभ्योभूयसींदत्त्वातैराशिषो
गृह्णीयाद्वरः ॥ इतिसंस्कारभास्करेचतुर्थीकर्मप्रयोगः ॥ ॥ अथदेवकोत्थापनम् ॥
तत्रकालः ॥ समेचदिवसेकुर्याद्देवकोत्थापनंबुधः ॥ षष्ठंचविषमंनेष्टंमुक्त्वापंचमस
प्तमौ ॥ १ ॥ मंडपोद्वासनंकार्यंसमंवाविषमेदिने ॥ समेषष्ठंदिनंवर्ज्यंविषमेत्रिनवं
त्यजेदिति ॥ २ ॥ अत्रस्थापनदिनात्परिगणना ॥ तत्रविषमेत्रिनवंसमेषष्ठदिनंव
र्ज्यम् ॥ चतुर्थंपंचमसप्तमातिरिक्तंनात्रेष्टमित्यर्थः ॥ ज्योतिर्ग्रंथेतु ॥ प्रतिष्ठादिनमार
भ्ययावत्षोडशवासराः ॥ देवकोत्थापनंकार्यमुद्वाहेचव्रतेदशेति मुहूर्तमार्तण्डटी
कायाम् ॥ विवाहदिनमारभ्यनवत्रिषष्ठदिवसेषूद्वासनमपिनकार्यमित्युक्तंतन्मंडप ॥२७५॥
स्यनतुदेवकादेरितिद्रष्टव्यम् ॥ विवाहोत्तरंयुग्मेसमेद्वितीयचतुर्थादिकेघस्रेदिनेषष्ठ

दिवसहीनेतथाविषमेतु पंचमेसप्तमेचाहनिदिवसेमंडपोद्वासनंदेवकोत्थापनंसच्छुभ
फलदातृस्यात् इतिमुहूर्तचिंतामणौपीयूषधारायाम् ॥ उक्तदिनेवरवधूसहितःस्वस्वगृ
हेवरपितावधूपिताचस्वदक्षिणतः पत्न्यासहशुभासनेप्राङ्मुखउपविश्य ॥ आचम्य
प्राणानायम्यदेशकालौसंकीर्त्य ममगृहेषट्सुषट्सुमासेषुशोभनप्राप्त्यर्थं विवाहांग
भूतंदेवकोत्थापनमंडपोद्वासनाख्यंकर्मकरिष्ये ॥ तदंगविहितंगणपतिपूजनंस्वस्ति
पुण्याहवाचनंचकरिष्येइतिकृत्वा ॥ स्वस्तिवाचनेभोब्राह्मणाःमयाक्रियमाणयोर्दे
वकोत्थापनमंडपोद्वासनाख्यकर्मणोःपुण्याहंभवंतोब्रुवंतु ॥ ॐ पुण्याहम् ॥ एवंकल्या
णमृद्धिस्वस्तिश्रियमिति ॥ ततःस्थापितदेवतानांपंचोपचारैरुत्तरपूजनंकार्यम् ॥ उ
त्तिष्ठब्रह्मणस्पतेयांतुमातृगणाइतिमंत्रेणस्थापितदेवताःविसृज्य ॥ ॐ उत्तिष्ठब्रह्मण
स्पतेदेवयन्तंस्त्वेमहे ॥ उपप्रयन्तुमरुतं÷सुदानवऽइन्द्रंप्राशूर्भवासचा ॥ १ ॥ यांतु

मातृगणाःसर्वेस्वशक्त्यापूजितामया ॥ इष्टकामप्रसिद्ध्यर्थंपुनरागमनायच ॥ १ ॥ आ
वाहितदेवताःस्वस्थानेगच्छतेत्युत्थापयेत् ॥ ततआचार्योनंदिन्यादिमंडपमातॄणां
सूत्रमुन्मुच्यतेनद्वेपूगीफलेवेष्टयित्वा ॥ नंदिन्यादिमातॄणांपर्णानिशूर्पेनिदध्यात् ॥ त
तोयजमानःपत्न्यासहवरोवधूश्चतच्छूर्पेहस्तौगृहीत्वाशूर्पेआचार्यःजलंसिंचति सोपि
शूर्पेणगृहाभ्यंतरमारभ्यमंडपांतंत्रिवारंगत्वाजलधारांपातयेत् ॥ वसोःपवित्रमसि ॥
द्यौःशांतिरितिमंत्रेण ॥ धारापातनोत्तरंतेनैवमंत्रेणतन्मातृपल्लवैःसपत्नीकंयजमानम
भिषिच्यशूर्पस्थमातृपल्लवानिमंडपोपरिनिक्षिप्य ॥ ईशानकोणप्रदेशेमंडपवितानं
विमुच्य ॥ ततःसूत्रवेष्टितेद्वेपूगीफलेआचार्योगृहीत्वायजमानायश्रेयोदानंकुर्यात् ॥
तद्यथा ॥ सपत्नीकयजमानस्यांजलौ ॥ शिवाआपःसंतु ॥ संतुशिवाआपः ॥ सौमन
स्यमस्तु ॥ अस्तुसौमनस्यम् ॥ अक्षतंचारिष्टंचास्तु ॥ अस्त्वक्षतमरिष्टंच ॥ इतिवच

नप्रतिवचने ॥ अत्राःपांतु ॥ सुप्रोक्षितमस्तु ॥ गंधाःपांतु ॥ सौमंगल्यंचास्तु ॥ अक्षताःपांतु ॥ आयुष्यमस्तु ॥ पुष्पंपातु ॥ सौश्रियमस्तु ॥ यत्पापंरोगमशुभमकल्याणंतद्दूरेप्रतिहतमस्तु ॥ इत्यंजल्युपरिउदकंभ्रामयित्वोदीच्यांनिषिंचेत् ॥ ततो यजमानः ॥ भोब्राह्मणाःममगृहेषट्सुषट्सुमासेषुशोभनानिभवंतोब्रुवंतु ॥ संतुशोभनानीत्याचार्यः ॥ इतित्रिरुक्ता ॥ कृतमेतद्विवाहकर्मणिआचार्यत्वंतदुत्पन्नंश्रेयस्तुभ्यमहंसंप्रददेइतियजमानहस्तेसाक्षतजलपूगीफलद्वयं प्रक्षिप्य प्रतिगृह्यतामिति वदेत् ॥ यजमानोदेवस्यत्वेति प्रतिगृह्णाति ॥ ततोवस्त्रालंकारादिभिर्यथाविभवमाचार्यपूजनं कृत्वा तस्मै महादक्षिणां दत्त्वाऽन्येभ्योब्राह्मणेभ्योभूयसींदक्षिणांदत्त्वातैराशिषोगृहीत्वा ॥ यस्यस्मृत्येतिकर्मसंपूर्णतां वाचयित्वा ॥ ब्राह्मणान्भोजयित्वा ॥ सुहृद्भिःसहयजमानोभुंजीतेतिदेवकोत्थापनम् ॥ इति संस्कारभास्करेविवाहसं

स्कारप्रयोगः ॥ ॥ अथद्विरागमः ॥ तत्रमाघफाल्गुनवैशाखाः शुक्लपक्षश्चशु
भाः ॥ अश्विनीरोहिणीपुनर्वसुपुष्योत्तरात्रयानुराधाज्येष्ठाहस्तस्वातीचित्राश्रवण
शततारकानक्षत्रेषु चंद्रबुधशुक्रवासरेषु गुरुशुक्रास्तादिरहितेस्थिरलग्नादिशुभकाले
द्वितीयवधूप्रवेशः शुभः ॥ द्विरागमेऽधिमासविष्णुशयनमासौ समवत्सराः प्रति
शुक्रादिदोषाश्चवर्ज्याःद्विरागमोपियदिविवाहमारभ्यषोडशदिनमध्येक्रियते तदाप्र
तिशुक्रादिदोषोस्तादिदोषश्चनास्ति ॥ यथा ॥ द्विरागमः षोडशवासरांतमेका
दशाहेसमवासरेषु ॥ नचात्रऋक्षंनतिथिर्नयोगोनवारशुद्ध्यादिविचारणीयम् ॥
केवलांगिरसकेवलभृगुभरद्वाजवसिष्ठकश्यपात्रिवत्सगोत्राणां प्रतिशुक्रदोषो न ॥
रेवत्यश्विनीभरणीकृत्तिकाद्यचरणेषु चंद्रेसति शुक्रस्यांधत्वात्प्रतिशुक्रदोषो न ॥
दुर्भिक्षेदेशविप्लवेविवाहे तीर्थगमने एकनगरग्रामयोश्चप्रतिशुक्रदोषो न ॥ इतिद्वि

रागमः ॥ ॥ विवाहेभार्ययासहभोजनमाहांगिराः ॥ ब्राह्मण्यासहयोश्नी
याद्वुच्छिष्टंवाकदाचन ॥ तत्र दोषं नमन्यंते सर्वएवमनीषिणः ॥ १ ॥ एकपात्रे
समश्नीयाद्विवाहेषुवधूवरौ ॥ तत्रदोषंनमन्यंतेआचारभ्रंशमेवचेति ॥ संग्रहे ॥
एकासनंचैकशय्यामेकपात्रेचभोजनम् ॥ एकत्रमंगलस्नानमेकवाहनरोहणम् ॥ कुर्व
न्विवाहेएतानिभवेद्विप्रोनदोषभागिति ॥ अथाभ्युदयिकश्राद्धोत्तरंदेवकोत्थापनप-
र्यंतंनिषिद्धकर्माणि ॥ गार्ग्यः ॥ नांदीश्राद्धेकृतेपश्चाद्यावन्मातृविसर्जनम् ॥ दर्शश्रा
द्धंक्षयश्राद्धंस्नानंशीतोदकेनच ॥ अपसव्यंस्वधाकारंनित्यश्राद्धंतथैवच ॥ ब्रह्मय
ज्ञंचाध्ययनंनदीसीमांतलंघनम् ॥ उपवासव्रतंचैवश्राद्धभोजनमेवच ॥ नैवकुर्युः स
पिंडाश्चमंडपोद्वासनावधि ॥ १ ॥ त्रिपुरुषसापिंडयपर्यंतम ॥ अत्रनित्यश्राद्धनिषेधे
नतत्कार्यविहितपितृयज्ञनिषेधसिद्धिः ॥ स्वधाकारग्रहणंतत्सहितवैश्वदेवनिषेधार्थम् ॥

तथान्यच्च ॥ अभ्यंगेमृतकेरात्रौविवाहेपुत्रजन्मनि ॥ मांगल्येषुचसर्वेषुनधार्यंगो
पिचंदनम् ॥ १ ॥ इति ॥ ॥ अथमातृविसर्जनानंतरमब्दपर्यंतंनिषेधमाह ॥ व
सिष्ठः ॥ स्नानंसचैलंतिलमिश्रकर्मप्रेतानुयानंकलशप्रदानम् ॥ अपूर्वतीर्थामरदर्शनं
च विवर्जयेन्मंगलतोब्दमेकम् ॥ १ ॥ पितॄणामुद्देशेनकलशदानमित्यर्थः ॥ ॥ अ
त्रापवादः ॥ तीर्थेसंवत्सरे प्रेतेपितृयज्ञेमहालये ॥ कृतोद्वाहोपिकुर्वीतपिंडनिर्वपणं
सदेति ॥ ॥ मासषट्कविवाहादौव्रतप्रारंभणेपिच ॥ जीर्णभांडादिनत्याज्यंगृहसं
मार्जनीतथेति ॥ ॥ श्मश्रुकरणे ॥ ऊर्ध्वंविवाहात्पुत्रस्य तथाचव्रतबंधनात् ॥
आत्मनोमुंडनं चैव वर्षंवर्षार्धमेवच ॥ त्रिमासं वात्रिपक्षं वानकुर्वीतकदाचनेति ॥
कन्यागृहेभोजननिषेधः ॥ भविष्ये ॥ अप्रजायांतुकन्यायांनभुंजीतकदाचन ॥
दौहित्रस्य मुखं दृष्ट्वाकिमर्थमनुशोचति ॥ नभुंजीतेत्यत्रकन्यागृहे इतिशेषः ॥ अप

राकेंआदित्यपुराणेच ॥ अप्रजायांतुकन्यायांनाश्नीयात्कन्यकागृहे ॥ ब्राह्मादिवि
धिनाकन्यांदत्त्वाश्नीयात्कदाचन॥ अथभुंजीतमोहाच्चेत्सयातिनरकंध्रुवमिति ॥ ब्राह्म
विवाहविधिनादातुंयोग्यांकन्यांदत्त्वाकदापितस्यागृहेनैवाश्नीयादित्यर्थः ॥ शांकल
कारिकास्वपि ॥ दुहित्रन्नंनभुंजीयाद्यावत्तस्याभवेत्सुतः ॥ अन्यथायस्तुभुंजीतदा
नंतस्यवृथा भवेत् ॥ कन्यायास्त्वप्रसूतायायस्त्वन्नंभुंजतेयदि ॥ अघंसकेवलंभु
क्तेप्राजापत्येनशुध्यतीति ॥ अथवरस्यमृतभार्यत्वपरिहारोपायः ॥ तदुक्तंबृहद्या
ज्ञवल्क्येन ॥ परिवेत्तृत्वपापेनमृतभार्यत्वंजायते ॥ तद्दोषपरिहारार्थंप्राजाप
त्यत्रयंतथा ॥ चांद्रायणत्रयंचैकेअनेकेद्विगुणंचरेत् ॥ एकेएकभार्यामरणेइदंप्राय
श्चित्तम् ॥ अनेकेअनेकभार्यामरणेतुएतत्प्रायश्चित्तंद्विगुणंचरेदित्यर्थः ॥ गणेशंपूजयेदा
दौपुण्याहंवाचयेद्द्विजैः ॥ दुर्गाग्निविष्णुप्रतिमाः स्थापयेत्पूजयेत्ततः ॥ त्रिभिस्तुदेव

ताप्रीत्यैहुनेदष्टाधिकायुतम् ॥ आहुतिंचरुणाज्येनप्रतिद्रव्योक्तसंख्यया ॥ दुर्गाग्निवि
ष्णुमंत्रैश्चपुनःपुनरितीरितइति ॥ अथप्रयोगः ॥ सुदिनेसुस्नातोयजमानआसनेउपवि
श्याचम्य प्राणानायम्यदेशकालकीर्तनांतेममभृतभार्यत्वदोषनिरासद्वारा श्रीपरमे
श्वरप्रीत्यर्थं वक्ष्यमाणप्रकारेणअष्टाधिकायुतसंख्ययाचर्वाज्यहवनं करिष्ये ॥ तत्रादौ
निर्विघ्नतार्थं गणपतिपूजनंस्वस्तिपुण्याहवाचनमाचार्यादिवरणंदिग्रक्षणंपंचगव्यक
रणंभूमिपूजनमग्निस्थापनं कलशानांस्थापनं दुर्गाग्निविष्णुदेवतानांस्थापनं च करिष्ये
इतिक्रमेणकृत्वा॥ देवतामंत्रास्तु॥ अम्बेअम्बिकेतिदुर्गाम्॥त्वन्नोअग्नेतवदेवेतिअग्निम्॥
इदंविष्णुरितिविष्णुम् ॥ ततोदक्षिणतोब्रह्मासनादिपवित्रयोःप्रणीतासुनिधानांतंकृत्वा
न्वादध्यात् ॥ तद्यथा ॥ अत्रप्रधानम्॥ तत्रप्रजापतिमिंद्रमग्निंसोममेताःआघाराज्यभा
गदेवताः एकैकयाहुत्याआज्येन अत्रप्रधानं दुर्गामग्निंविष्णुं चस्वस्वमंत्रेणअष्टषष्टित

माधिकषोडशशतसंख्ययाचरुहोमंतथा च पुनरत्रप्रधानदेवतानांस्वस्वमंत्रेणपूर्वोक्त संख्ययाआज्यहोमंशेषेणस्विष्टकृतमग्निंवायुंसूर्यमग्नीवरुणावग्नीवरुणौ पुनरग्निंवरु णंसवितारंविष्णुंविश्वान्देवान्मरुतःस्वर्कान् वरुणमादित्यमदितिं प्रजापतिमेतादेव ताआज्येनैकैकयाहुत्याअस्मिन्कर्मण्यहंयक्ष्ये ॥ इत्यन्वाधानम् ॥ प्रतिदैवतंतूष्णीं निरूप्यप्रोक्ष्यच ॥ त्यागकालेअष्टोत्तरायुतसंख्याहुतिपर्याप्तंचर्वाज्यद्रव्यंयथामंत्र लिंगंदुर्गायैअग्नयेविष्णवेचनममेतित्यागंकुर्यात् ॥ प्रथमंगणेशायवराहुतिंदत्त्वाअ न्वाधानोक्तरीत्याहवनंकार्यम् ॥ पूजास्विष्टेतिक्रमेणहोमशेषंसमाप्यदशविप्रान्भो जयेदिति ॥ हवनाहुतिक्रमोयथा ॥ आज्यभागांतेपूर्वमम्बेअम्बिकेतिमंत्रेणदुर्गा यै चर्वाहुतयः १६६८ ॥ त्वन्नोऽअग्नेतिअग्नयेचर्वाहुतयः १६६८ ॥ इदंविष्णु रितिविष्णवेचर्वाहुतयः १६६८ ॥ अनंतरमम्बे०दुर्गायैआज्याहुतयः १६६८ ॥

त्वन्नो० अग्नयेआज्याहुतयः १६६८ ॥ इदं० विष्णवेआज्याहुतयः ॥ १६६८ ॥
एवमेवप्रकारेणसर्वाहुतयः ॥ १०००८ ॥ अष्टोत्तरायुताभवंति ॥ अथवाकस्यचि
द्ब्राह्मणस्यविवाहंकुर्यात् ॥ ॥ इतिमृतभार्यत्वपरिहारोपायः ॥ ॥ ६ ॥ अथभार्या
विद्यमानत्वेसतिद्वितीयविवाहेऽधिवेदिनीयकारणमाहयाज्ञवल्क्यः ॥ सुरापीव्या
धिताधूर्तावंध्यार्थघ्न्यप्रियंवदा ॥ स्त्रीप्रसूश्चाधिवेत्तव्यापुरुषद्वेषिणीतथेति ॥ ॥ अ
धिवेदनेकालप्रतीक्षामाहमनुः ॥ वंध्याष्टमेऽधिवेत्तव्यादशमेतुमृतप्रजा ॥ एकाद
शेस्त्रीजननीसद्यस्त्वप्रियवादिनीति ॥ ॥ विवाहांतरेविशेषः ॥ एकामुत्क्रम्यका
मार्थमन्यांलब्धुंय इच्छति ॥ समर्थस्तोषयित्वार्थैःपूर्वोढामपरांवहेत् ॥ याज्ञव
ल्क्यः ॥ आज्ञासंपादिनींदक्षांवीरसूंप्रियवादिनीम् ॥ त्यजन्दापयतृतीयांशमद्रव्योभ
रणंस्त्रियः ॥ सधनोधनतृतीयांशमधनोशनाच्छादनात्मकभरणंचदद्यादित्यर्थः ॥

अथस्त्रीनिधनेद्वितीयपरिणयनकालमाह ॥ सिंधौ ॥ प्रमदामृतिवासरादितःपुनरु
द्वाहविधिर्वरस्यच ॥ विषमेपरिवत्सरेशुभोयुगुलेचापिमृतिप्रदोभवेदिति ॥ ॥ अथ
कन्याविषयोगेसमुत्पन्नाचेद्वैधव्ययोगहरकुंभविवाहः ॥ सचविषयोगस्त्रिविधः ॥ सू
र्यभौमार्किवारेषुतिथिभद्राशताभिधम् ॥ आश्लेषाकृत्तिकानागेतत्रजाताविषांग
ना ॥ १ ॥ जनुर्लग्नेरिपुक्षेत्रेसंस्थितःपापखेचरः ॥ द्विसौम्यमपियोगेस्मिन्संजा
ताविषकन्यका ॥ २ ॥ लग्नेशनैश्चरोयस्याःसुतेर्किर्नवमेकुजः ॥ विषाख्यासापि
नोद्वाह्यात्रिविधाविषकन्यका ॥ ३ ॥ तद्दोषपरिहारोपायः ॥ सावित्र्यादिव्रतंकृ
त्वावैधव्यविनिवृत्तये ॥ अश्वत्थादिभिरुद्वाह्यादद्यात्तांचिरजीविने इति ॥ ॥ अन्य
च्च ॥ बालवैधव्ययोगेतुकुंभद्रुप्रतिमादिभिः ॥ कृत्वालग्नंततःपश्चात्कन्योद्वाह्येतिचाप
रे ॥ ॥ कुंभःप्रसिद्धः ॥ द्रुप्रतिमेतिस्वर्णमयाश्वत्थद्रुमप्रतिमा ॥ तैःसहअनूढाक

न्योद्वाह्या ॥ पुनर्भूदोषाभावस्तुविधानखंडे ॥ स्वर्णद्रुपिप्पलानांचप्रतिमाविष्णुरूपिणी ॥ तयासहविवाहेतुपुनर्भूत्वं न जायते ॥ सूर्यारुणसंवादे ॥ विवाहात्पूर्वकाले तुचंद्रताराबलान्विते ॥ कुंभंसंस्थाप्यविधिवत्तत्रद्रुप्रतिमांयजेत् ॥ मधुपर्कादिकंदत्त्वा तदग्रेकन्यकांनयेत् ॥ विवाहोक्तेनमंत्रेणकुंभेनसहचोद्वहेत् ॥ सूत्रेणवेष्टयेत्पश्चाद्दशतंतुविधानतः ॥ कुंकुमालंकृतंदेहंतयोरेकांतमंदिरे ॥ ततःकुंभंचनिःसार्यप्रभज्यसलिलाशये ॥ततोभिषेचनंकुर्यात्पंचपल्लववारिभिः ॥ ततोलंकारवस्त्राढ्यांवरायप्रतिपादयेदिति ॥ अथप्रयोगः ॥ तत्रपूर्वोक्तदिनेकन्यापिताकन्ययासहएकांतेविष्णुमंदिरेगत्वा आसनेप्राङ्मुखउपविश्यस्वदक्षिणतःकन्यामुपवेश्य ॥ देशकालकीर्तनानंतरंकन्यायाः नक्षत्रादियोगेन ग्रहयोगेन पुनर्भूदोषाभावेनचविषाख्ययोगसंभववैधव्यारिष्टपरिहारार्थंश्रीपरमेश्वरप्रीतयेकुंभविवाहं करिष्ये ॥ तत्रादौनिर्विघ्नतार्थंगणपतिपूज

नस्वस्तिपुण्याहवाचनादिनांदीश्राद्धांतंकृत्वाचार्यंवृत्वा ॥ ततस्तंदुलादष्टदलेमहीद्यौ
रित्यादिक्रमेणकलशंप्रतिष्ठाप्ययपूर्णपात्रंनिधायवस्त्रयुग्मेनसंवेष्टयतत्रवरुणंसंपूज्य ॥
तत्राग्न्युत्तारणप्रतिष्ठापूर्वकंस्वर्णमयविष्णुरूपाश्वत्थद्रुमप्रतिमां प्रतिष्ठाप्य षोडशोप
चारैःसंपूज्यप्रार्थयेत् ॥ ॥ तत्रमंत्रः ॥ ॥ वरुणांगस्वरूपायजीवनानांसमाश्र
य ॥ पतिंजीवयकन्यायाश्चिरंपुत्रसुखंकुरु ॥ देहिविष्णोवरंदेहिकन्यांपालयदुः
खतइति ॥ ततोमधुपर्कवस्त्रालंकारार्पणम् ॥ अंतःपटं कन्यांकुभांतरालेधृत्वामंगलप
द्याष्टकंपठित्वा ॥ ॐप्रतिष्ठेत्यनंतरंपटंनिःसार्य ॥ कन्यायैवस्त्रोपवस्त्रमंगलतंतुबं
धनसमीक्षणांतंमंत्रपठनेनदत्त्वा ॥ दशवारमधस्ताद्रुपरिचकुम्भंकन्यांचपरित्वेत्य
नुवाकेनसूत्रंसंवेष्टय ॥ कुंभस्यविष्णवेकन्यांसमर्पयेत् ॥ मंत्रस्तु ॥ गौरींकन्यामिमां
श्लक्ष्णांयथाशक्तिविभूषिताम् ॥ ददामिविष्णवेतुभ्यंसौभाग्यंदेहिसर्वदा ॥ १ ॥ वि

ष्णुरूपिणेश्वत्थकुंभायेमांकन्यांश्रीरूपिणींसंप्रददेइतिसमर्पयेत् ॥ ततोवेष्टितसूत्रा
त्कुंभंनिःसार्यजलेप्रभज्य ॥ ततआचार्यःशुद्धजलेनऐंद्रवारुणपावमानीयमंत्रैः पल्ल
वेनकन्यामभिषिच्यशुद्धवाससीपरिधाप्य ॥ वैवाह्यवस्त्रादिकंसर्वमाचार्यायदद्या
त् ॥ अनघाद्यास्मीतित्रिवारंकन्यावदेत् ॥ एवमस्त्वितिद्विजोब्रूयात् ॥ आचार्या
यवरंदत्त्वातस्मादाशिषोगृहीत्वाकर्मेश्वरायार्पयेत् ॥ इतिकुंभविवाहः ॥ ॥ अथ
बालवैधव्यहरविष्णुमूर्तिदानम् ॥ तत्प्रकारोनारदेनोक्तः ॥ ब्राह्मणंसाधुमामंत्र्यसं
पूज्यविविधार्हणैः ॥ तस्मैदद्याद्विधानेनविष्णोर्मूर्तिंचतुर्भुजाम् ॥ शुद्धवर्णसुवर्णेनप
लस्यैकसुलक्षणाम् ॥ तदर्धेनतदर्धेनवित्तशक्त्यनुसारतः ॥ निर्मितांरुचिरांशंखगदा
चक्राब्जसंयुताम् ॥ दधानांवाससीपीतेकुमुदोत्पलमालिकाम् ॥ सदक्षिणांचतांदद्या
न्मंत्रमेतमुदीरयेदिति ॥ प्रयोगस्तु ॥ देशकालकीर्तनांतेममावैधव्यारिष्टनिरसना

र्थमखंडसौभाग्यप्राप्तयेचविष्णुप्रतिमादानं करिष्ये ॥ ताम्रपात्रेतंदुलैरापूर्यतदुपरि
स्वर्णमयींकृताग्न्युत्तारणप्राणप्रतिष्ठांविष्णुप्रतिमांचतुर्भुजायुधान्वितां प्रतिष्ठाप्य षो
डशोपचारैःपूजयेत ॥ पूजाकालेपीतांबरादिवस्त्राणिकुंडलाद्यलंकारान्कुंकुमादिपुष्प
मालाश्चार्पयित्वाप्रणमेत् ॥ भगवन्कमलाकांतसर्वमंगलदायक ॥ हत्वासर्वाण्यरि
ष्टानिसौभाग्यंचाभिवर्धय ॥ १ ॥ इतिसंप्रार्थ्य ॥ प्रतिग्रहीतारंब्राह्मणंसंपूज्या
र्चितप्रतिमांसोपस्करांदद्यात् ॥ दानमंत्रस्तु ॥ यन्मयाप्राच्यजनुषिघ्नंत्यापतिस
मागमम् ॥ विषोपविषशस्त्राद्यैर्हतोवातिसुरक्तया ॥ प्राप्यमाणंमहाघोरंयशःसौख्य
धनापहम् ॥ वैधव्याद्यतिदुःखौघान्नाशयसुखलब्धये ॥ बहुसौभाग्यदात्रींचमहावि
ष्णोरिमांतनुम् ॥ सौवर्णींप्रतिमांशक्त्यातुभ्यंसंप्रददेद्विज ॥ १ ॥ इमांमयार्चितांवि
ष्णुप्रतिमांसोपस्करांवैधव्यारिष्टनिरासार्थमखंडसौभाग्यप्राप्तये च अमुकशर्मणे

ब्राह्मणायतुभ्यमहंसंप्रददेइतिदत्त्वा ॥ यथाशक्तिसुवर्णदक्षिणांदत्त्वा तस्मादाशिषो
गृहीत्वा ॥ कन्याअनघाद्याहमस्मीतित्रिर्वदेत् ॥ एवमस्त्वितिविप्रोक्तिं गृहीत्वा ॥
ब्राह्मणान्नभोजयेत् ॥ ततोवैवाहिकं कुर्यात् ॥ इतिवैधव्ययोगहरविष्णुप्रतिमादानम् ॥
॥ ६ ॥ ॥ अथतृतीयमानुषीविवाहस्यनिषिद्धत्वात्तस्मिन्कर्तव्येसत्यर्कीविवाहवि
धिरुच्यते ॥ ॥ तत्रतृतीयमानुषीविवाहनिषेधमाह ॥ कश्यपः ॥ तृतीयांमानुषीं
नैवचतुर्थीं यःसमुद्वहेत् ॥ पुत्रपौत्रादिसंपन्नःकुटुंबीसाग्निकोवरः ॥ उद्वहेदिति
सिद्ध्यर्थंतृतीयानकदाचन ॥ मोहादज्ञानतोवापिगच्छेत्त्रींयदिमानुषीम् ॥ म्रियतेन
चसंदेहोगर्गस्यवचनंयथा ॥ ॥ वसिष्ठः ॥ चतुर्थ्यांश्चविवाहार्थंतृतीयार्कींसमुद्वहे
त् ॥ आदित्यदिवसेवापिहस्तर्क्षेवाशनैश्चरे ॥ शुभेदिनेवापूर्वाह्णेकुर्यादर्कीविवाह
कर्म ॥ ब्राह्मे ॥ ग्रामात्प्राच्यामुदीच्यांवासुपुष्पफलसंयुताम् ॥ निरीक्ष्ययत्नतोधस्तात्स्थं

डिलंरचयेद्बुधः ॥ व्यासः ॥ स्नात्वालंकृतवासांसिरत्नगंधविभूषितः ॥ सुपुष्पफलशाखं
चअर्कीगुल्मंसमाश्रयेत् ॥ सलक्षणेनकुंभस्थामर्कींसंस्थाप्ययत्नतः ॥ अर्ककन्याप्र
दानार्थमाचार्यंकल्पयेत्पुरा ॥ उभौगोत्रविभिन्नंतंशांतंदांतंदयान्वितम् ॥ आ
चार्येणस्वयंभाव्यंदत्तांसूर्यणकन्यकाम् ॥ अर्कींसन्निधिमागत्यतत्रस्वस्त्यादि
वाचयेत् ॥ नांदीश्राद्धंहिरण्येनअष्टवर्गान्प्रपूजयेत् ॥ ॥ पूजयेन्मधुपर्केण
आचार्योरत्नतोवरम् ॥ यज्ञोपवीतंवस्त्रंचहस्तकर्णादिभूषितम् ॥ उष्णीषंगंधमाल्यादि
वरायचप्रदापयेत् ॥ ब्रह्मपुराणे ॥ यथाविधीतिरुच्येतइत्यस्यानंतरंक्रमः ॥ कृत्वा
र्कंपुरतस्तिष्ठन्प्रार्थयेत्तुद्विजोत्तमान् ॥ त्रिलोकवासिन्सप्ताश्वछाययासहितोरवे ॥
तृतीयोद्वाहजंदोषंनिवारयसुखंकुरु ॥ १ ॥ तत्राध्यारोप्यदेवेशंछाययासहितंरविम् ॥
वस्त्रैर्माल्यैस्तथागंधैस्तन्मंत्रेणप्रपूजयेत् ॥ तन्मंत्रआकृष्णेनेति ॥ अन्यच्च ॥ श्वे

तवस्त्रेणसंवेष्ट्यतथाकार्पासतंतुभिः॥ गंधपुष्पैःसमभ्यर्च्यतल्लिंगैरभिषिच्यतम् ॥ गुडौ
दनंतुनैवेद्यंतांबूलंचसमर्पयेत ॥ व्यासः ॥ अर्कींप्रदक्षिणंकुर्वञ्जपेन्मंत्रमिमंबुधः ॥
ममप्रीतिकरायेयंत्वयासृष्टापुरातनी ॥ अर्कजाब्रह्मणासृष्टा अस्माकं परिरक्षतु ॥
॥ १ ॥ पुनःप्रदक्षिणंकृत्वामंत्रेणानेनमंत्रवित ॥ ॥ नमस्तेमंगलेदेविनमःसवितु
रात्मजे ॥ त्राहिमांकृपयादेविपत्नीत्वंमेइहागता ॥ अर्कित्वंब्रह्मणासृष्टासर्वप्राणिहि
तायच ॥ वृक्षाणामादिभूतात्वंदेवानांप्रीतिवर्धिनी ॥ तृतीयोद्वाहजंपापंमृत्युंचाशु
निवारय ॥ ततश्चकन्यावरणात्त्रिपुरुषकुलमुच्चरेत् ॥ आदित्यःसविताचार्कःपुत्री
पौत्रीप्रपौत्रिका ॥ गोत्रंकाश्यपइत्युक्तंलोकेलौकिकमाचरेत् ॥ अन्यच्च ॥ वरःकश्यप
गोत्रश्चेत्तदाचार्यःस्वपूर्वजान् ॥ उच्चरेन्ममपुत्रीतिस्वगोत्रैःसहतद्विधिः ॥ ॥ व्या
सः ॥ सुमुहूर्तेर्कींनिरीक्ष्यस्वस्तिसूक्तमुदीरयेत ॥ आशिषश्चततःकुर्यादाचार्यप्रमुखै

द्विजैः ॥ अथाचार्यः समाहूय विधिना तन्मुखाच्च ताम् ॥ परिगृह्य ततो होमं गृह्योक्तविधि
नाचरेत् ॥ ॥ अर्कीदानमंत्रस्तु ॥ अर्ककन्यामिमां विप्र यथाशक्तिविभूषिताम् ॥ गो
त्राय शर्मणे तुभ्यं दत्तां विप्र समाश्रय ॥ १ ॥ ॥ अंजल्यक्षतकर्माणि कृत्वा कंकणपूर्व
कम् ॥ यावत्पंचावृतं सूत्रमर्कीवृक्षे प्रवेष्टयेत् ॥ पंचीकृतं पुनः सूत्रं स्कंधे बध्नाति मंत्रतः ॥
स्वशाखोक्तेन मंत्रेण गायत्र्या चाथवा जपेत् ॥ बृहत्सामेति मंत्रेण सूत्ररक्षां प्रकल्पये
त् ॥ अर्क्याश्च पुरतः पश्चाद्दक्षिणोत्तरयोस्तथा ॥ आग्नेयादिक्रमेणैव विदिक्षु अपि चै
व हि ॥ अष्टौ कुंभान्प्रतिष्ठाप्य क्रमेणैव यथाविधि ॥ प्रस्नवप्रतिकुंभं च त्रिभिः सूत्रे
णवेष्टयेत् ॥ हरिद्रागंधसंयुक्तान्पूरयेच्छीतलैर्जलैः ॥ पंचपल्लवसंयुक्तान्फलरत्नस
मन्वितान् ॥ सर्वौषधिसमायुक्तान्पूर्णपात्रसमन्वितान् ॥ प्रतिकुंभं महाविष्णुं संपूज्य
परमेश्वरम् ॥ पाद्यार्घादीनि नैवेद्यं कुर्यान्नाम्नैव मंत्रवित् ॥ कुंभोदकैर्वरमर्कीं वारुणैरभि

षिंचयेत् ॥ ॥ अन्नहोमप्रकारःशौनकेदर्शितः ॥ तृतीयेतुविवाहेचसंप्राप्तेपुरुषस्य
तु ॥ अर्कीविवाहंवक्ष्यामिशौनकोक्तविधानतः ॥ अर्कीसन्निधिमागत्यतत्रस्वस्त्या
दिवाचयेत ॥ नांदीश्राद्धंप्रकुर्वीतआचार्यंवरयेत्ततः ॥ अर्कीमभ्यर्च्यसौर्यांचगंध
पुष्पाक्षतादिभिः ॥ सौर्याएवचसूर्यश्चआकृष्णेनऋचेनच ॥ स्वयंचालंकृतस्तद्वद्वस्त्र
माल्यादिभिःशुभैः ॥ अर्कस्योत्तरदेशेतुस्थंडिलंकारयेत्ततः ॥ उल्लेखनादिकंकृत्वा
अग्निसंस्थापयेत्ततः ॥ ब्रह्मासनादिकंकृत्वासमन्वारब्धएतया ॥ एतयाअर्ककन्य
या ॥ संस्कृताज्यंस्रुवेणैवआघारांतमतःपरम् ॥ आज्याहुतिंचजुहुयात्संगोभिरनयै
कया ॥ यस्मैत्वाकामकामश्चएकयाचततःपरम् ॥ व्यस्ताभिश्चसमस्ताभिस्ततश्चस्वि
ष्टकृद्भवेत् ॥ परिवेशनपर्यंतमयाश्चेत्यादिकंक्रमात् ॥ प्रार्थनामंत्रादिविशेषमाह
व्यासः ॥ पुनःप्रदक्षिणंकृत्वामंत्रमेतमुदीरयेत ॥ मयाकृतमिदंकर्मस्थावरेषुजरा

युणा ॥ अर्कापत्यानिनोदेहितत्सर्वंक्षंतुमर्हसि ॥ १ ॥ ॥ इत्युक्त्वाशांतिसूक्तंचज
प्त्वाचविसृजेत्पुनः ॥ गोयुग्मंदक्षिणांदद्यादाचार्यायचभक्तितः ॥ इतरेभ्योपिविप्रे
भ्योदक्षिणांचापिशक्तितः ॥ तत्सर्वंगुरवेदद्यादंतेब्राह्मणभोजनम् ॥ एवमर्कीसमभ्य
र्च्यविधिनामानुषींपुरा ॥ उद्वहेदन्यथानैवपुत्रपौत्राभिवृद्धिमान् ॥ एवमेतद्द्विजश्रे
ष्ठविधिनासम्यगुद्वहेत ॥ धनधान्यसमृद्धिंचइच्छाभीष्टवरंव्रजेदित्यर्कीविवाहक्र
मः ॥ ॥ अथप्रयोगः ॥ ॥ अत्रक्रियमाणविवाहात्प्राक्चतुर्दिनादिव्यवहितेरविश
निवासरेहस्तनक्षत्रेवाशुभतिथ्यादिदिनेग्रामात्प्राच्यामुदीच्यां वा पुष्पफलयुतार्की
गुल्मंप्रयोज्यतदधोभागेपुरतःस्थंडिलं विरच्य ॥ अर्कीपश्चिमतोयजमानउपवि
श्य ॥ गुल्मस्यसंमतात्प्रागाद्यष्टदिक्षुतंदुलेनाष्टदलानिविरच्य ॥ आचम्यप्राणाना
यम्यदेशकालकीर्तनांतेममतृतीयमानुषीविवाहजन्यदोषपरिहारार्थं शुभफलप्राप्तये

चश्रीपरमेश्वरप्रीत्यर्थमर्कीविवाहं करिष्ये ॥ तदंगविहितनिर्विघ्नतार्थंगणपतिपूजनं स्वस्तिपुण्याहवाचनंमातृकापूजनंवसोर्द्धाराआयुष्यमंत्रजपं नांदीश्राद्धं च करिष्येइ तिकृत्वा ॥ तच्चनांदीश्राद्धंहेम्नाकर्तव्यम् ॥ कर्मार्थंस्वकुलाचार्यंवृत्वा ॥ कन्यापिता यथासूर्योदेवानांचप्रजापतिः ॥ तथात्वमर्कप्रदानार्थमाचार्यत्वंकुरुद्विज ॥ अपरमर्की दानाचार्यंवृणुयात ॥ ततोवरःअर्कीगुल्मस्याग्रेतंदुलाष्टदलेमहीद्यौरितिक्रमेणपू र्णपात्रनिधानांतंकलशंप्रतिष्ठाप्यगंगाद्यावाह्याभिमंत्र्यवरुणंसंपूज्य ॥ तदुपरिअग्न्यु त्तारणप्राणप्रतिष्ठांसंपाद्यस्वर्णमयीं छायायासहितामर्कप्रतिमांप्रतिष्ठाप्य ॥ वस्त्रोपव स्त्राणिसमर्प्य ॥ आकृष्णेनेतिषोडशोपचारैः संपूज्यगुडौदननैवेद्यंदत्त्वा ॥ पूजनांते



१ धर्मसिंधौ मधुपर्कोत्तरमर्कावाहनाद्युक्तम् ॥ शांतिसारमयूखादावादावुक्तम् ॥

प्रार्थयेत् ॥ त्रिलोकवासिन्सप्ताश्वच्छाययासहितोरवे ॥ तृतीयोद्वाहजंदोषंनिवारय सुखंकुरु ॥ १ ॥ ततोर्कीमापोहिष्ठेतितृचेनशुद्धजलेनाभिषिच्यषोडशोपचारैःसं पूज्यप्रदक्षिणांकुर्यात् ॥ तत्रमंत्रः ॥ ममप्रीतिकरायावैत्वयासृष्टापुरातनी ॥ अर्क जाब्रह्मणासृष्टावस्माकंपरिरक्षतु ॥ १ ॥ इत्येका ॥ नमस्तेमंगलेदेविनमःसवितुरा त्मजे ॥ रक्षमांकृपयाशश्वत्पत्नीत्वंमेइहागता ॥ १ ॥ इतिद्वितीयप्रदक्षिणा ॥ त तोर्कींप्रार्थयेत् ॥ अर्कित्वंब्रह्मणासृष्टासर्वप्राणिहितायच ॥ वृक्षाणामादिभूतात्वं देवानांप्रीतिवर्धिनी ॥ १ ॥ सर्वारिप्रहरानित्यंसर्वमंगलदायिनी ॥ तृतीयोद्वाहज पापंमृत्युंचाशुविनाशय ॥ २ ॥ ततःआचार्यःदेशकालौ०कश्यपगोत्रोत्पन्नामा दित्यस्यप्रपौत्रींसवितुःपौत्रीमर्कस्यपुत्रीम् ॥ अमुकगोत्रायवरायदास्येइतिवाग्दा नंकृत्वा ॥ वाग्दानंधर्मसिंधुमयूखयोर्नोक्तम् ॥ शांतिसारदर्पणेचउक्तम् ॥ ॥ ततो

दानाचार्यःदेशकालौस्मृत्वाअर्कीविवाहार्थमागतंवरंमधुपर्केणार्चयिष्ये इति संकल्प पूर्वकंस्वशाखोक्तविधिनावरायमधुपर्कपूजां समर्पयेत ॥ ततोवरःस्थंडिलेपंचभूसं स्कारपूर्वकमग्निंप्रतिष्ठाप्य ॥ अर्कीवरांतरालेअंतःपटंधृत्वाकर्माचार्यादिब्राह्मणैर्मंग लपद्याष्टकंपठित्वाओंप्रतिष्ठेत्युक्त्वाउत्तरतःअंतःपटं निःसार्य ॥ आचार्यादिब्राह्मणाः स्वस्तिनइंद्रेतिमंगलसूक्तंपठेयुः ॥ ततोजरांगच्छेतिअर्क्यैवासोपरिधाप्य ॥ याऽअकृं तन्नित्युत्तरीयम् ॥ समजंत्विितिअर्कींनिरीक्ष्य ॥ यदाबध्नन्निितिमंत्रेणमांगल्यतंतुंबध्नी यात् ॥ ततोगायत्र्याबृहत्सामेनपरित्वेत्यनुवाकेन वाअर्कीवरयोःसूत्रमावेष्ट्य ॥ ततोदानाचार्यउदङ्मुखउपविश्यदेशकालौस्मृत्वाश्रीपरमेश्वरप्रीतये अर्कीकन्या दानंकरिष्ये ॥ वरहस्तेशिवाआपःसंत्वित्यादिकृत्वा ॥ वरस्यगोत्रोच्चारः॥ अमुकगोत्र स्यअमुकप्रवरस्यअमुकशर्मणःप्रपौत्राय ॥ अ० गो० अ० प्र० अ० श० पौत्राय ॥

अ० गो० अ० प्र० अ० श० पुत्राय ॥ अ० गो० अ० प्र० अ० शर्मणेवराय ॥
अथार्कीपक्षे ॥ काश्यपगोत्रस्यकाश्यपावत्सारनैध्रुवेतित्रिप्रवरस्यआदित्यस्यप्र
पौत्रीम् ॥ का० गो० त्रिप्र० सवितुःपौत्रीम् ॥ का०गो० का० त्रिप्र० अर्कस्यपुत्रीम् ॥
का० गोत्रोत्पन्नांका० त्रिप्र० अर्कीनाम्नीमिमांकन्यांसूर्यदैवत्यांतवतृतीयमानुषीवि
वाहदोषनिरासार्थंभार्यात्वेनतुभ्यमहंसंप्रददे ॥ आनेनार्कीशाखांवरहस्तेदत्त्वातदुप
रिसकुशोदकंनिषिंचेत् ॥ एवंत्रिवारंकुर्यात् ॥ वरस्यकाश्यपगोत्रंचेत्तर्हिदानाचा
र्यःअर्कीनाम्नीमिमांकन्यांसूर्यदत्तांविभाव्यस्वगोत्रोच्चारपूर्वकमात्मनश्चत्रिपूर्वजान्
ममपुत्रीमित्यूहंकुर्यात ॥ ॥ अर्कींकन्यामिमांविप्रयथाशक्तिविभूषिताम् ॥ गोत्रा
यशर्मणेतुभ्यंदत्तांविप्रसमाश्रय ॥ १ ॥ ॥ ततोऽर्क्युपरिअक्षतान्गंधपुष्पोद

कर्पूर्णानंजलींस्त्रीन्समर्पयेत् ॥ तत्रमंत्राः ॥ ॐ यज्ञोमेकामः समृध्यताम् ॥ इति प्रथमांजलिः ॥ ॐ धर्मोमेकामःसमृध्यताम् ॥ इतिद्वितीयां० ॥ ॐ यशोमेकामः समृध्यताम् ॥ इतितृतीयां० ॥ ततोर्कीगुल्मेपरित्वेत्यनुवाकेनवेष्टितंमूत्रंनिष्कास्य पंचगुणंकृत्वातत्रहरिद्राखंडं बध्वा तत्कंकणंबृहत्सामेतिमंत्रेणअर्कीदक्षिणशाखायां बध्नीयात ॥ तत्रमंत्रः ॥ ॐ बृहत्सामक्षत्रभृद्वृद्धवृष्णियंत्रिष्टुभौजःशुभितमुग्रवीरम् ॥ इंद्रस्तोमेनपंचदशेनमध्यमिदंवातेनसगरेणरक्ष ॥ इतिमंत्रेणकंकणंबध्नीयात् ॥ ततोर्कीदिग्विदिक्षुकृताष्टदलेषुमहीद्यौरित्यादिक्रमेणाष्टौकुंभान्संस्थाप्य ॥ केचि

१ अंजलिदानंमयूखदर्पणयोरुक्तंकमलाकरधर्मसिंध्वादौनोक्तम् ॥ २ धर्मसिंधौवरस्यापिकंकण बंधनमुक्तं कमलाकरादिभिरर्कस्यैवोक्तम् ॥ ३ धर्मसिंधुकमलाकरमतेचतुःकुंभस्थापनंमयूखशांति सारदर्पणेअष्टकुंभस्थापनमुक्तम् ॥

त्प्रागादिचतुर्दिक्षुचतुरःकुंभान्‌ सूत्रेणावेष्ट्य चंदनप्रक्षेपणेऽष्टगंधं क्षिप्त्वा पूर्णपात्र निधाय तेषुनाम्नाविष्णुमावाह्य षोडशोपचारैःसंपूजयेत्‌ ॥ वरःदेशकालकीर्तनांते अर्कीविवाहांगभूतं होमं करिष्ये ॥ ततोदक्षिणतोब्रह्मासनादिआज्यभागांतं चरुवर्जंकुशकंडिकांसंपाद्य ॥ तत्राघारावाज्यभागौ ॥ मनसा ॥ ॐ प्रजापतयेस्वा० इदंप्रजा० नमम ॥ ॐइंद्रायस्वा० इदमिन्द्रा० ॥ ॐ अग्नये स्वा० इदमग्नये० ॥ ॐ सोमायस्वा० इदं सोमाय० ॥ ॥ ततोबृहस्पतिमग्निंचैकैकयाहुत्याज्येन हुत्वा ॥ तद्यथा ॥ ॐ संगोभिरांगिरसोनक्षमाणोभगऽइवेदर्यमणं निनाय ॥ जनेमित्रोनदंपतीअनक्तिबृहस्पतेवाजयाशूँरिवाजौस्वाहा ॥ इदंबृहस्पतये नमम ॥ ॐ यस्मैत्वाकामकामायवयंसम्राडयजामहे ॥ तामस्मभ्यंकामंदत्त्वायथेदंघृतंपिब स्वाहा ॥ इदमग्नये नमम ॥ ॥ ततोव्यस्तसमस्तव्याहृतीर्हुत्वाज्येन ॥ ॐ भूःस्वा० ॥इदमग्न० ॥

ॐ भुवःस्वा० इदंवायवे० ॥ ॐ स्वःस्वा०इदंसूर्याय० ॥ ॐ भूर्भुवःस्वःस्वा०इदंप्र
जापतये० ॥ ततःस्विष्टकृत् ॥ ततोभूराद्याःप्रजापत्यंतानवाहुतीराज्येनेत्यादिकं
कर्मकृत्वा ॥ ॥ ततःसंस्रवप्राशनादिप्रणीताविमोकांतंहोमशेषमभिषेकांतंसमाप
येत् ॥ ततोर्कीं प्रार्थयेत्॥ मयाकृतमिदंकर्मस्थावरेषुजरायुणा॥ अर्कापत्यानिनोदेहि
तत्सर्वंक्षंतुमर्हसि ॥ १ ॥ ततआचार्योगंधादिभिःसंपूज्यताभ्यांचगोयुग्मं दद्यात् ॥
अष्टौब्राह्मणान्भोजयेत् ॥ नानानामगोत्रेभ्योब्राह्मणेभ्योभूयसींदक्षिणांदत्त्वा ॥ ते
राशिषोगृहीत्वा ॥ पूजोपकरणादिकमाचार्यायदत्त्वा ॥ स्थापितदेवतानामुत्तरपूजां
कृत्वा ॥ देवताअग्निंविसृज्य ॥ यस्यस्मृत्येतिनत्वाकर्मेश्वरार्पणं कृत्वा ॥ शांतिसू
क्तंजपेत् ॥ स्थापितकलशोदकेन अर्कीवरयोरभिषेकः ॥ धृतवस्त्रयोराचार्यायदा
नमितिगोपीनाथदीक्षिताः ॥ दिनचतुष्टयमग्निंकुंभांश्चरक्षयेदितिमयूखः ॥ पंच

मदिनकृत्यं ब्राह्मे ॥ चतुर्थेंदिवसेतीतेपूर्ववत्तांप्रपूज्यच ॥ विसृज्यहोममग्निंचविधि नामानुषींपराम् ॥ उद्वहेदन्यथानैवपुत्रपौत्रसमृद्धिमान् ॥ अयंचार्कविवाहःकाश्यप गोत्रिणो न भवतिगोत्रैक्यात् ॥ अथवासूर्येणचंद्रायदत्तांविभाव्यकाश्यपगोत्रस्था नेअत्रिगोत्रंकन्याविशेषणेसंकीर्त्य आदित्यसवित्रर्कस्थाने चंद्रसोमेंदुशब्दानुच्चारये दितिकेचित् ॥ अत्रगोत्रैक्यं नदोषायेत्यन्ये ॥ काश्यपगोत्रोवरःस्वगोत्रविरुद्धगो त्रिणमाचार्यंपरिकल्प्यतस्मादर्कींप्रतिगृह्णीयात् ॥ आचार्यस्तुसूर्यदत्तांविभाव्य ॥ काश्यपगोत्रस्थानेस्वगोत्रंकन्याविशेषणेसंकीर्त्य ॥ आदित्यसवित्रर्कस्थानेस्व पित्रादित्रयंस्वंनामचकीर्तयेत् ॥ एवंरीत्यैवकाश्यपगोत्रवरस्यअर्कविवाहोयुक्तइ तिगोपीनाथदीक्षिताः ॥ एवंकृत्वाविधानंतुभार्यांक्षेमंचविंदतीति ॥ ॥ इति श्री मद्दषिभट्टविरचितेसंस्कारभास्करेअर्कीविवाहप्रयोगः ॥ ॥ ॥

॥ अथानादिष्टप्रायश्चित्तम् ॥ कालातिक्रमेनियतवत् ॥ गर्भाधानादीनिउपनयनां
तानिकर्माणिनियतकालान्यभिहितानि ॥ यदिदैववशात्पुरुषापराधाद्वादोषाद्वाते
षांनियतस्यकालस्यअतिक्रमोभवतितदाकिंकर्तव्यमितिसंदेहेनिर्णयमाह ॥ काला
तिक्रमेयस्यसंस्कारकर्मणःशास्त्रनियमितोयःकालस्तस्यअतिक्रमे लंघनेनियतवत्
नित्यवन्नित्येश्रौतकल्पेयद्विहितंतद्वदनादिष्टप्रायश्चित्तं भवति ॥ एवंकृतप्रायश्चि
त्तस्यअतिक्रांतकालेसंस्कारकर्मण्यधिकारःसंपद्यते ॥ अनादिष्टप्रायश्चित्तेतिकर्तव्य
ताप्रयोगेवक्ष्यते ॥ अत्रकालातिक्रमइत्युपलक्षणम् ॥ अतःअन्येषामपिकर्मणांनाशेइद
मनादिष्टमेवप्रायश्चित्तम् ॥ गृह्यकारेणप्रायश्चित्तांतरस्यअनुपदिष्टत्वात् ॥ किंतुश्रौताना
मतिदेशेप्राप्तेअविज्ञातेप्रतिमहाव्याहृतिभिःसर्वाभिश्चतुर्थंसर्वप्रायश्चित्ते चेत्यस्यै
वकालातिक्रमेनियतवदित्यनेनातिदेशःकृतोनतूपदेशःकृतः ॥ गृह्यकारेणतत्प्रविज्ञात

मप्रत्यक्षश्रुतिमूलम् ॥ किमिदमाग्वैदिकंयाजुर्वैदिकंसामवेदिकंचेत्यनिश्चितंस्मार्तंक
र्मतस्यभ्रंशेश्रौतकल्पेऽव्याहृतिचतुष्टयपंचवारुणहोमंप्रायश्चित्तमुद्दिष्टमत्र ॥ गृह्यसूत्रे
गृह्योक्तकर्मणामपिस्मार्तत्वात्तद्भ्रेषेतस्यैवातिदेशोयुक्तः ॥ नपुनः प्रत्यक्षवेदमूलकर्म
भ्रेषोपदिष्टता ॥ कालातिक्रमेनियतवदित्यस्यार्थउक्तः ॥ इतिकर्तव्यतात्रलिख्यते ॥पू
र्णाहुतिवदाज्यंसंस्कृत्यअनादिष्टप्रायश्चित्तहोमंकुर्यात् ॥ पूर्णाहुतिर्यथा ॥ कात्यायन
सूत्रे ॥ पूर्णाहुतिंजुहोतिनिरूप्याज्यंगार्हपत्येधिश्रित्यस्रुक्स्रुवंचसंमृज्याज्यमुद्वास्यो
त्पूयावेक्ष्यगृहीत्वान्वारब्धएवर्ठंसर्वत्र ॥ अत्रैवंप्रयोगः ॥ यदावसथिकस्यअनादि
ष्टंप्राप्नोतितदाग्निःसंभृतएव ॥ यदिनिरग्नेस्तदाशुद्धायांभूमौउक्तमानेनस्थंडिलंवि
रच्यतत्रपंचभूसंस्कारान्कृत्वालौकिकाग्निंस्थापयित्वा स्थाल्यामाज्यं निर्वाप्याग्नाव
धिश्रित्यस्रुवंदर्भैःसंमृज्याज्यमुद्वास्य कुशतरुणाभ्यामुत्पूयावेक्ष्यस्रुवेणादायोपरि

समिधंनिधायोत्थायस्रुवंसव्येकृत्वादक्षिणेनाग्नौतिष्ठन्समिधमाधायोपविश्य दक्षिणं
जान्वाच्यॐभूःस्वाहेतिस्रुवस्थेनाज्येनैकाहुतिंहुत्वा ॥ इदमग्नयेनममेतित्यागः ॥
एवंसर्वत्र ॥ ॐभुवःस्वाहा ॥ इदंवायवे० ॥ ॐ स्वःस्वाहा ॥ इदंसूर्याय० ॥ ॐ
भूर्भुवःस्वःस्वा० ॥ इदंप्रजापतये० ॥ ॐ त्वन्नोऽअग्ने०मुग्ध्यस्मत्स्वाहा ॥ इदमग्नी
वरुणाभ्यां० ॥ ॐ सत्वन्नोऽअग्ने०नऽएधिस्वाहा ॥ इदमग्नीवरुणाभ्या० ॥ ॐ अया
श्चाग्ने०भेषजꣳस्वाहा ॥ इदमग्नयेअयसे० ॥ ॐ येतेशतं०स्वर्काःस्वाहा ॥ इदंवरु
णायसवित्रेविष्णवेविश्वेभ्योमरुद्भ्यःस्वर्केभ्यश्च० ॥ ॐ उदुत्तमं०स्यामस्वाहा ॥ इ
दंवरुणायादित्यायादितयेच० ॥ एवंस्रुवेणादायाज्याहुतिंजुहोति ॥ ॥ इदंनवाहु
तिहोमात्मकंयत्रयत्रप्रायश्चित्तानादेशः कर्मणांनियतकालातिक्रमो वा तत्रतत्रानादि
ष्टसंज्ञकंप्रायश्चित्तंवेदितव्यम् ॥ ॥ इत्यनादिष्टप्रायश्चित्तम् ॥ ॥ ग्रंथाननेका

नालोक्ययथामतिमयाकृतः ॥ याज्ञिकानांहितार्थायश्रीरामचरणार्पितः ॥ १ ॥ भू नेत्ररसभूशाके १६२१ प्रमाथिनिशुभेमधौ ॥ऋषिसंज्ञेनरचितःसर्वसंस्कारभास्करः ॥

॥ इति संस्कारभास्करः समाप्तः ॥

---

इदं पुस्तकं क्षेमराज-श्रीकृष्णदास-श्रेष्ठिना मुम्बय्यां ( खेतवाडी ७ वीं गली खम्बाटा लैन ) स्वकीये "श्रीवेङ्कटेश्वर" ( स्टीम् ) मुद्रणयन्त्रालये मुद्रयित्वा प्रकाशितम् । संवत् १९६९, शके १८३४.

जाहि- रात.

# जाहिरात।

| नाम. | की. रु. आं. |
|---|---|
| अष्टशान्ति–इसमें–१ सूर्यादिग्रह, २सप्तग्रहीयोग, ३ मघारेवत्यादि, ज्वरादिरोगोत्पत्ति, ५ सर्वनक्षत्र, ६ ग्रहण, ७ काकमैथुनदर्शन और ८ पल्लीसरठपतन ये आठ शान्ति हैं.... | ०–२ |
| अष्टलिङ्गतोभद्र–रंगीन .... | ....०–१ |
| अथर्ववेद–कौशिकसूत्रानुसारी आह्निक–गुजराती भाषाटीकासमेत. | ....१–४ |

| नाम. | की. रु. आं. |
|---|---|
| अन्त्येष्टी श्राद्धकर्मपद्धति–पं० चतुर्थीलालजीकृत नूतन छपकर तैयारहै | ०–१२ |
| आह्निकसूत्रावली–यजुर्वेदी–प्रातःस्मरणसे लेकर शयनपर्यंतके सब कर्मप्रयोग एकत्र किये गयेहैं .... | ....१–८ |
| आश्लेषाशान्ति और ज्येष्ठाशान्ति–इसमें–आश्लेषा और ज्येष्ठा नक्षत्रमें शान्तिका प्रयोग, .... ... | ...०–२ |

# अत्रेयमभ्यर्थना ।

अस्माकं मुद्रणालये वेद-वेदान्त-धर्मशास्त्र-प्रयोग-योग-सांख्य-ज्यौतिष-पुराणेतिहास-वैद्यक मंत्र-स्तोत्र-कोश-काव्य-चम्पू-नाटका-ऽलंकार-संगीत-नीति-कथाग्रंथाः, बहवः स्त्रीणां चोपयुक्ता ग्रंथाः, बृहज्ज्योतिषार्णवनामा बहुविचित्रचित्रितोऽयमपूर्वग्रन्थः संस्कृतभाषया, हिन्दीमारवाड्यादिभाषाग्रन्थास्तत्तच्छास्त्राद्यर्थानुवादकाः, चित्राणि, पुस्तकमुद्रणोपयोगिन्यो यावत्यस्सामग्र्यः, स्वस्वलौकिकव्यवहारोपयोगिचित्रचित्रितालिखितपत्रवत्पुस्तकानि च; मुद्रयित्वा प्रकाशन्ते सुलभेन मूल्येन विक्रयाय । येषां यत्राभिरुचिस्तत्तत्पुस्तकाद्युपलब्धये एवं नव्यतया स्वस्वपुस्तकानि मुमुद्रयिषुभिः सुलभयोग्यमौल्येन सीसकाक्षरैः स्वच्छोत्तमोत्तमपत्रेषु मुद्रिततत्पुस्तकानां स्वस्वसमयानुसारेणोपलब्धये च पत्रिकाद्वारा बोधनीयोऽस्मि ।

अधिकमस्मदीयसूचीपुस्तकस्य भिन्नभिन्नविषयकस्य प्रापणेन "श्रीवेङ्कटेश्वरसमाचार" पत्रप्रापणेन च ज्ञेयमिति शम् ।

क्षेमराज श्रीकृष्णदास "श्रीवेंकटेश्वर" ( स्टीम् ) यन्त्रालयाध्यक्षः (खेतवाडी ७ वीं गली खम्बाटालैन,)—मुंबईस्थः.

